निर्मूलने महानुपायः । तथा हि—यदा बोधिसत्त्वः सर्वसत्त्वानाकाशधातुव्यापिनः सर्व-दुःखात् समुद्धृत्य सर्वसुखसंपन्नान् करिष्यामीत्यध्याशयेन विचिन्तयति । पूर्वकृतं च पापं विदूषणासमुदाचारादिभिः क्षपयति, तदा बोधिचित्तबलादेव तत्संताने पापस्य कः सद्भावः, येन चोद्यस्यावकाशः स्यादिति सर्वं निराकुलम् । एतावता यदुक्तम्—तज्जीयतेऽन्येन शुभेन केन [ १. ६. ] इति, तदपि विस्पष्टीकृतम् । अन्ये पुनः—अनियतविपाकापेक्षया सर्वमेत- 5 दुच्यते, नियतविपाकस्य तु कर्मणः केनचित्प्रतिषेद्धुमशक्यत्वादित्याहुः ॥

इत्थमपि बोधिचित्तमुपादेयमित्याह—

**यस्यानुशंसानमितानुवाच**

**मैत्रेयनाथः सुधनाय धीमान् ॥ १४ ॥**

यस्य बोधिचित्तस्य अनुशंसान् स्वाभाविकान् गुणान् अमितान् अप्रमाणान् 10 मैत्रेयनाथः भगवानजितः । किंभूतः ? धीमान् बोधिसत्त्वः । उवाच उक्तवान् । सुधनाय सुधननाम्ने बोधिसत्त्वाय । तथा च आर्यगण्डव्यूहसूत्रे [ वर्णितम्— 		P 23

बोधिचित्तं हि कुलपुत्र बीजभूतं सर्वबुद्धधर्माणाम् । क्षेत्रभूतं सर्वजगच्छुक्लधर्मविरो-हणतया । धरणिभूतं सर्वलोकप्रतिशरणतया । यावत् पितृभूतं सर्वबोधिसत्त्वारक्षणतया । पे० .... । वैश्रवणभूतं सर्वदारिद्र्यसंछेदनतया । चिन्तामणिराजभूतं सर्वार्थसंसाधनतया । 15 भद्रघटभूतं सर्वाभिप्रायपरिपूरणतया । शक्तिभूतं क्लेशशत्रुविजयाय ॥ इत्यादि विस्तरः ॥

नाश्रीयते तत् कथमज्ञसत्त्वैः [ १.१२ ] इति अत्रापि योजनीयम् ॥

इदानीं बोधिचित्तस्य प्रभेदं दर्शयन्नाह—

**तद्बोधिचित्तं द्विविधं विज्ञातव्यं समासतः ।**

**बोधिप्रणिधिचित्तं च बोधिप्रस्थानमेव च ॥ १५ ॥** 20

तत् समनन्तरप्रदर्शितानुशंसं बोधिचित्तं द्विविधं द्विप्रकारं विज्ञातव्यं वेदितव्यम् । गोत्रभूम्यादिगतानेकप्रकारसंभवेऽपि कथं द्विविधमित्याह—समासतः । अपरप्रकारसंभवेऽपि संक्षेपतः इदं द्विविधमुच्यते । द्विविधमपि कथम् ? बोधिप्रणिधिचित्तमित्येकम्, बोधिप्रस्थान-मिति द्वितीयम् । बोधौ प्रणिधिः, तदेव चित्तं तत्र वा चित्तम् । यच्चित्तं प्रणिधानादुत्पन्नं 		P 24 भवति दानादिप्रवृत्तिविकलं च, तत् प्रणिधिचित्तम् । तद्यथा—सर्वजगत्परित्राणाय बुद्धो 25 भवेयमिति प्रथमतरं प्रार्थनाकारा चेतना । प्रस्थाने चित्तं प्रस्थानमेव वा चित्तम् । चित्तस्य तत्स्वभावत्वात् । पूर्वकमनस्कारपुरःसरमेव यतः प्रभृति संवरग्रहणपूर्वकं संभारेषु प्रवर्तते, तत् प्रस्थानचित्तम् । इति उक्तक्रमेण द्वैविध्यम् । इयानेव भेदः इति एवकारेण प्रतिपाद-यति । चकारद्वयं परस्परसमुच्चये । द्वयोरपि बोधिचित्तत्वं दर्शयति । तेन पूर्वकं बोधिचित्तं न भवतीति शङ्कां निरस्यति । शूरंगमसूत्रे आद्योत्पादितस्यापि बोधिचित्तस्य बुद्धत्वहेतुत्वा- 30 भिधानात् । तथा आर्यगण्डव्यूहे चोक्तम्[1]—

१ ŚS p. 8.

दुर्लभाः कुलपुत्र ते सत्त्वाः सत्त्वलोके ये अनुत्तरस्यां सम्यक्संबोधौ चित्तं प्रणिदधति। ततोऽपि दुर्लभतमास्ते सत्त्वाः ये अनुत्तरां सम्यक्संबोधिमनुप्रस्थिताः। इति ॥

इदानीमुक्तमेव प्रभेदमुदाहरणेन व्यक्तीकुर्वन्नाह—

**गन्तुकामस्य गन्तुश्च यथा भेदः प्रतीयते।**
**तथा भेदोऽनयोर्ज्ञेयो याथासंख्येन पण्डितैः ॥ १६ ॥**

5 यथा कश्चित् पुरुषः अभिमतदेशप्राप्तये गन्तुकामः गमनाभिप्रायः, न तु पुनर्गच्छत्येव, अन्यः पुनस्तत्प्राप्तये प्रस्थितो गच्छत्येव। यद्वद्यथा तयोर्भेदो विशेषः प्रतीयते अवगम्यते, तद्वत्तथा भेदो नानात्वमनयोर्बोधिप्रणिधिप्रस्थानचेतसोर्ज्ञेयः अवबोद्धव्यः पण्डितैर्विचक्षणैः। कथम्? याथासंख्येन। स्वार्थेऽप्यण्। प्राक्तनं प्रणिधिचित्तस्य निदर्शनं पश्चात्तनं 10 प्रस्थानचेतसः इति संख्यार्थः ॥ (P 25)

तदेतत् प्रणिधिचित्तं प्रतिपत्तिविकलमपि संसारे महाफलं भगवता वर्णितमित्याह—

**बोधिप्रणिधिचित्तस्य संसारेऽपि फलं महत्।**

यदि नाम तत् प्रतिपत्तिविकलम्, तथापि तस्य आस्तां तावद् बुद्धत्वम्, संसारेऽपि देवमनुष्योपपत्तिस्वभावं सुखसंपत्तिलक्षणं फलं महत्, अन्यस्मात् कुशलाद् बृहत्। सततं 15 फलतीत्यादिविशेषणविशिष्टत्वात्। तथा चोक्तमार्यमैत्रेयविमोक्षे [=गण्डव्यूहसूत्र—५०८]—

तद्यथापि नाम कुलपुत्र भिन्नमपि वज्ररत्नं सर्वप्रतिविशिष्टं सुवर्णालंकारमभिभवति, वज्ररत्ननाम च न विजहाति, सर्वदारिद्र्यं च विनिवर्तयति, एवमेव कुलपुत्र प्रतिपत्तिभिन्नमपि सर्वज्ञताचित्तोत्पादवज्ररत्नं सर्वश्रावकप्रत्येकबुद्धगुणसुवर्णालंकारमभिभवति, बोधिचित्तनाम च न विजहाति, संसारदारिद्र्यं च विनिवर्तयतीति ॥ (P 26)

20 तस्माद् योऽपि पारमितासु सर्वेण सर्वं सर्वथा शिक्षितुमसमर्थः, तेनापि बोधिचित्तमुत्पादनीयम्। एवमुपायपरिग्रहेण महाफलत्वात्। यथोक्तमार्यराजावावादकसूत्रे[१]—

यस्मात् त्वं महाराज बहुकृत्यो बहुकरणीयः, असहः सर्वेण सर्वं सर्वथा सर्वदा दानपारमितायां शिक्षितुम्, यावत् प्रज्ञापारमितायां शिक्षितुम्। तस्मात्तर्हि त्वं महाराज एवमेव संबोधिच्छन्दं श्रद्धां प्रार्थनां प्रणिधिं च, गच्छन्नपि तिष्ठन्नपि निषण्णोऽपि शया-25 नोऽपि जाग्रदपि भुञ्जानोऽपि पिबन्नपि, सततमभितमनुस्मर, मनसि कुरु, भावय। सर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकपृथग्जनानामात्मनश्च अतीतानागतप्रत्युत्पन्नानि कुशलमूलानि पिण्डयित्वा तुलयित्वा अनुमोदयस्व अग्रया अनुमोदनया। अनुमोद्य च सर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकाणां पूजाकर्माणि निर्यातय। निर्यात्य च सर्वसत्त्वसाधारणानि कुरु। ततः सर्वसत्त्वानां यावत् सर्वज्ञताप्रतिलम्भाय सर्वबुद्धधर्मपरिपूरणाय दिने दिने त्रैकाल्यमनु-30 त्तरायां सम्यक्संबोधौ परिणामय। एवं खलु त्वं महाराज प्रतिपन्नः सन् राज्यं च कारयिष्यसि, राज्यकृत्यानि च न हापयिष्यसि, बोधिसंभारांश्च परिपूरयिष्यसि ॥ इत्यादिक- (P 27)

१ ŚS p. 9.

मुक्त्वाह—स खलु पुनस्त्वं महाराज सम्यक्संबोधिचित्तकुशलमूलविपाकेन अनेकक्कृत्वो देवेषु उपपन्नोऽभूः। अनेकक्कत्वो मनुष्येषु उपपन्नोऽभूः। सर्वासु च देवमनुष्योपपत्तिषु आधिपत्यं कारयिष्यसि। इति विस्तरः ॥

इति चर्याविकलेऽपि बोधिचित्ते नावमन्यना कार्या । तस्यापि अनन्तसंसारे सुखप्रसवनात् । यत् पुनः प्रतिपत्तिसारं बोधिचित्तं तदतितरां विपुलफलमेवेति 5 सिद्धमित्याह—

न त्वविच्छिन्नपुण्यत्वं यथा प्रस्थानचेतसः ॥ १७ ॥

न तु न पुनः। यथा प्रस्थानचित्तस्य अविच्छिन्नपुण्यत्वं निरन्तरशुभप्रवाहवाहित्वम्, न तथा अस्येति भावः॥

इदमेव अविच्छिन्नपुण्यत्वं वृत्तद्वयेन प्रसाधयन्नाह— 10

यतःप्रभृत्यपर्यन्तसत्त्वधातुप्रमोक्षणे ।
समाददाति तच्चित्तमनिवर्त्येन चेतसा ॥ १८ ॥
ततःप्रभृति सुप्तस्य प्रमत्तस्याप्यनेकशः ।
अविच्छिन्नाः पुण्यधाराः प्रवर्तन्ते नभःसमाः ॥ १९ ॥

यतःप्रभृति यस्मादारभ्य। न विद्यते पर्यन्तः इयत्ता अस्येति अपर्यन्तस्य आकाश- 15 P 28
धातुव्यापिनः सत्त्वधातोः। प्रमोक्षणे प्रमोक्षे सर्वदुःखोपशमनिमित्ते। समाददाति तच्चित्तम्, सम्यक्संबोधिचित्तं समादाय वर्तते। कथम्? अनिवर्त्येन चेतसा अप्रवृत्तिभ्रष्टेन मनसा। ततःप्रभृति तदादिं कृत्वा । सुप्तस्य मिद्धाक्रान्तचित्तस्य प्रमत्तस्य विक्षिप्तचित्तस्यापि। उभयत्रापि संबध्यते। उपलक्षणं चैतत्। गच्छतोऽपि तिष्ठतोऽपि निषण्णस्यापि भुञ्जानस्यापि मूर्च्छाद्यवस्थायामपीत्यादि द्रष्टव्यम्। अनेकश इति। प्रतिक्षणमनेकवारम्। अविच्छिन्नाः 20 पुण्यधाराः निरन्तरसंततयः शुभवेगाः प्रवर्तन्ते। नभःसमाः प्रतिक्षणमाकाशधातुप्रमाणाः। तस्मात् प्रतिपत्तिसारेण बोधिसत्त्वेन भवितव्यम्। आर्यसमाधिराजे चोक्तम्—

तस्मात् प्रतिपत्तिसारो भविष्यामि, इत्येवं कुमार शिक्षितव्यम् । तत् कस्य हेतोः? प्रतिपत्तिसारस्य कुमार न दुर्लभा भवति अनुत्तरा सम्यक्संबोधिरिति [ समाधि०—१० ] ॥ 25

अविच्छिन्नपुण्यत्वमस्य भगवतैवोक्तमित्युपदर्शयन्नाह—

इदं सुबाहुपृच्छायां सोपपत्तिकमुक्तवान् ।
हीनाधिमुक्तिसत्त्वार्थं स्वयमेव तथागतः ॥ २० ॥

इदमेव अप्रमेयपुण्यत्वं स्वयमेव आत्मनैव तथागतो बुद्धो भगवानुक्तवान् कथित- P 29
वान्। क्व? सुबाहुपृच्छायां सुबाहुपृच्छानाम्नि सूत्रे । कथम्? सोपपत्तिकं सयुक्तिकम्। 30
किमर्थम्? हीनाधिमुक्तिसत्त्वार्थम्। हीने श्रावकप्रत्येकबुद्धयाने अधिमुक्तिः श्रद्धा छन्दो वा

येषां ते। ते सत्त्वाश्च। तेभ्य इदं तदर्थम्। तत् प्रयोजनमुद्दिश्येत्यर्थः। तथा हि—ये अनियतगोत्राश्चिरतरकालेन बहुतरसंभारोपार्जनभीता महायानाच्चित्तं व्यावर्त्य लघुतरकालेन अल्पतरसंभारसाध्ये श्रावकप्रत्येकबुद्धयाने चित्तमुत्पादयन्ति, तद्व्यावर्तनार्थं भगवानुपपत्तिमाह ॥

5 तामेवोपपत्तिं वृत्तद्वयेन कथयन्नाह—

**शिरःशूलानि सत्त्वानां नाशयामीति चिन्तयन्।**
**अप्रमेयेण पुण्येन गृह्यते स्म हिताशयः ॥ २१ ॥**
**किमुताप्रतिमं शूलमेकैकस्य जिहीर्षतः।**
**अप्रमेयगुणं सत्त्वमेकैकं च चिकीर्षतः ॥ २२ ॥**

10 कतिपयजनानां मस्तकपीडां नाशयामि मन्त्रेण अगदेन वा, इत्येवं मनसि कुर्वन् अप्रमाणेन सुकृतेन असौ कल्याणाभिप्रायो गृहीतो द्रष्टव्यः। किं पुनरप्रमाणं संसारदुःखं प्रतिसत्त्वमप्रमाणस्य जगतो हर्तुमिच्छतः। अपि च तच्छूलमपनीय सर्वसत्त्वान् सर्वगुणसमङ्गिनः कर्तुमिच्छतः किमप्रमेयं पुण्यं न भवति? इति विभक्तिविपरिणामेन योजनीयम्। अविच्छिन्नाः पुण्यधाराः किमुत तस्य न प्रवर्तन्ते नभःसमा इति। तस्माद् यथा संभारबाहुल्य-

P 30

15 साध्यं बुद्धत्वम्, यथा संभारवैपुल्येऽपि प्रतिक्षणमिति हेतुविशेषादत्रैव महायाने महान् लाभः। अतो नास्मच्चित्तमभयस्थाने कातरतया विनिवर्तनीयमित्युपदर्शितं भवति। यद्वक्ष्यति—

क्षपयन् पूर्वपापानि प्रतीच्छन् पुण्यसागरान्।
बोधिचित्तबलादेव श्रावकेभ्योऽपि शीघ्रगः ॥

[बोधिचर्या० ७. २९]

20 इति ॥

यश्चैवं सर्वसत्त्वानां हितसुखार्थमुद्युज्यते, स देवादिभ्योऽप्यसाधारणगुणत्वात् प्रशस्य इत्युपदर्शयन्नाह—

**कस्य मातुः पितुर्वापि हिताशंसेयमीदृशी।**
**देवतानामृषीणां वा ब्रह्मणां वा भविष्यति ॥ २३ ॥**

25 कस्य सत्त्वस्य। मातुर्जनन्याः। कस्य पितुर्वा जनकस्य। देवतानां सोमवरुणादीनाम्। ऋषीणां वा वसिष्ठगोतमादीनाम्। ब्रह्मणां वा वेधसाम्। इयमीदृशी हिताशंसा हितोपसंहारमतिः यादृशी समनन्तरं प्रतिपादिता बोधिसत्त्वस्य भविष्यति इति। आस्तां तावत् भूता भवति वा, भविष्यत्यपि नैव कस्यचिद्बोधिसत्त्वमन्तरेणान्यस्य ॥

P 31

कुतः पुनरेतदित्याह—

30 **तेषामेव च सत्त्वानां स्वार्थेऽप्येष मनोरथः।**
**नोत्पन्नपूर्वः स्वप्नेऽपि परार्थे संभवः कुतः ॥ २४ ॥**

तेषां मात्रादीनां स्वार्थेऽपि आत्मनः कृतेऽपि एष मनोरथः सर्वदुःखमपहर्तुम्, अप्रमाणगुणानाधातुं नोत्पन्नपूर्वः अभूतपूर्वः स्वप्नेऽपि । आस्तां तावज्जाग्रदवस्थायां बुद्धिपूर्वकमुत्पन्नः । परार्थे कदाचिदुत्पद्येत इत्याह—परार्थे संभवः कुतः । आत्मा हि वल्लभो लोकस्य परस्मात् । तत्रैव चेन्नास्ति, परार्थे संभावनापि कुतः? अथवा । स्वप्नेऽपि परार्थे संभवः कुतः इति योज्यम् ॥ 5

तदेवमसाधारणत्वं बोधिसत्त्वस्य प्रतिपाद्य उपसंहरन्नाह—

**सत्त्वरत्नविशेषोऽयमपूर्वो जायते कथं[1] ।**
**यत्परार्थाशयोऽन्येषां न स्वार्थेऽप्युपजायते ॥ २५ ॥**

एवमल्पाद्भुतकर्मकारितया दुर्लभोत्पादात् सत्त्व एव रत्नविशेषः अपूर्वः अनुपलब्धपूर्वः । अयमिति यादृशगुणोऽत्र कथितः । जायते कथम् । कथमित्यद्भुते । कस्मात् पुनरेवमुच्यते? आह—यत्परार्थेति । यस्य महात्मनः परार्थाशयः अन्येषां सत्त्वानामुक्तक्रमेण न स्वार्थेऽप्युपजायते इत्यस्मात् ॥ 10

अत्र च अन्येऽपि बोधिचित्तोत्पादकस्य गुणा वक्तव्याः । यथा आर्यगण्डव्यूहे भगवता आर्यमैत्रेयेण सुधनमधिकृत्य उद्भाविताः । ते च अतिविस्तरेण शास्त्रकृता शिक्षासमुच्चये दर्शिताश्च, तत्रैव अवधारयितव्याः ॥ P 32 15

पुनरपि बोधिचित्तानुशंसाद्वारेण बोधिसत्त्वस्याप्रमेयपुण्यत्वमाह—

**जगदानन्दबीजस्य जगद्दुःखौषधस्य च ।**
**चित्तरत्नस्य यत्पुण्यं तत्कथं हि प्रमीयताम् ॥ २६ ॥**

सर्वसत्त्वानां सर्वप्रामोद्यकारणस्य देवादिसर्वसंपत्तिनिदानभूतत्वात् । चित्तरत्नस्य बोधिचित्तस्य यत् पुण्यं तत् कथं हि प्रमीयताम्, केन प्रकारेण नाम संख्येयताम् । अतिविपुलतया प्रमातुमशक्यत्वात् । एतदुक्तमार्यवीरदत्तपरिपृच्छायाम्— 20

बोधिचित्ताद्धि यत्पुण्यं तच्च रूपि भवेद्यदि ।
आकाशधातुं संपूर्य भूयश्चोत्तरि तद्भवेत् ॥ इति ॥

यदि नाम सामान्येन निर्देशः, तथापि प्रस्थानचित्तस्येति द्रष्टव्यम्, तस्यैव प्रकृतत्वात् । पुनरपि तस्यैव विशेषणमाह—जगद्दुःखौषधस्य चेति । सर्वप्राणभृतां कायिकचैतसिकसर्वदुःखनिवर्तनतया सर्वव्याधिहरणमहागदस्वभावत्वात् । तदनेन अभ्युदयनिःश्रेयसहेतुत्वं बोधिचित्तस्य प्रतिपादितं भवति । अतो युक्तमेव अस्य असंख्येयपुण्यत्वमित्युक्तं भवति ॥ 25 P 33

कथं पुनरेतद्युक्तमित्याशङ्क्य प्रतिपादयन्नाह—

**हिताशंसनमात्रेण बुद्धपूजा विशिष्यते ।** 30
**किं पुनः सर्वसत्त्वानां सर्वसौख्यार्थमुद्यमात् ॥ २७ ॥**

---

[1] Mss. and Minayf read कुतः for कथम्. Our reading in based on Com.

सर्वजगत्परित्राणाय बुद्धो भवेयमित्यध्याशयेन आशंसनात् प्रार्थनात् केवलात् प्रतिपत्तिविकलाद्बोधिचित्तादित्यर्थः। यत्पुण्यं भवति तद्बुद्धपूजामतिशेते इत्यागमाद्भवत्येव पुण्यस्कन्धप्रसवहेतुः। इति प्रथमस्य बोधिचित्तस्य माहात्म्यमुक्तम्। एतदपि तत्रैवोक्तम्—

गङ्गावालिकसंख्यानि बुद्धक्षेत्राणि यो नरः।
5 दद्यात्सद्रत्नपूर्णानि लोकनाथेभ्य एव हि॥
यश्चैकः प्राञ्जलिर्भूत्वा चित्तं बोधाय नामयेत्।
इयं विशिष्यते पूजा यस्यान्तोऽपि न विद्यते॥ इति॥

किं पुनः सर्वदुःखितजनानां सर्वदुःखमपनीय सर्वसुखसंपन्नान् करिष्यामीत्युद्योगकरणादतिशयवत् पुण्यं न भवति॥

10 ननु हिताहितप्राप्तिपरिहारयोः स्वयमेव सत्त्वा विचक्षणाः। तत् कुत्रोद्यमस्योपयोग इति वृत्तत्रितयेन परिहरन्नाह—

P 34 **दुःखमेवाभिधावन्ति दुःखनिःसरणाशया।**
**सुखेच्छयैव संमोहात् स्वसुखं घ्नन्ति शत्रुवत्॥ २८॥**
**यस्तेषां सुखरङ्काणां पीडितानामनेकशः।**
15 **तृप्तिं सर्वसुखैः कुर्यात्सर्वाः पीडाश्छिनत्ति च॥ २९॥**
**नाशयत्यपि संमोहं साधुस्तेन समः कुतः।**
**कुतो वा तादृशं मित्रं पुण्यं वा तादृशं कुतः॥ ३०॥**

दुःखान्निःसरणाभिप्रायाः प्राणातिपातादिभिरकुशलैः कर्मभिः क्षुधादिदुःखप्रतीकारमिच्छन्तः। दुःखमेव नरकादिप्रपातवेदनास्वभावम्। अभिधावन्ति तदभिमुखाः प्रवर्तन्ते। 20 दुःखमेव प्रविशन्तीत्यर्थः। शलभा इव दीपशिखामिति। अत एव सुखेच्छयैव सुखाभिलाषेणैव स्वसुखं घ्नन्ति शत्रुवत्। आत्मसुखघाताय कथमात्मनैव शत्रवो भवन्तीति चेत्, संमोहाद् विपर्यासवशात् हिताहितप्राप्तिपरिहारयोः परिज्ञानाभावात्॥

अतो यः पुण्यात्मा अकारणवत्सलः तेषां विपर्यस्तानां सुखरङ्काणां सुखाभिलाषुकाणां सर्वशोऽलब्धसुखानां पीडितानां दुःखितानाम्। अनेकश इति अनेकैर्दुःखशतैर्बहुधा 25 बाधितानां तृप्तिमाप्यायनं सर्वसुखैः कुर्यात् कायिकचैतसिकैः। यदि वा। अनेकशः अनेकप्रकारं तृप्तिं सर्वसुखैः कुर्यात् इति योजनीयम्। न सुखतृप्तिमात्रं जनयति, किं तर्हि सर्वाः पीडाः समस्ता दुःखा वेदनाश्छिनत्ति च शमयति च॥

न केवलं दुःखप्रशान्तिं सुखतृप्तिं च करोति, नाशयत्यपि संमोहम्, अपरिज्ञानमपि निवर्तयति।

P 35 30 अपथमिदमेष पन्था भयमत इत एत गात माऽऽसादम्।

इति हेयोपादेयमार्गप्रकाशनात्। यश्चैवं परव्यसननिवर्तनपरतन्त्रो हितसुखविधानतत्परश्च

सर्वभूतानाम् । साधुस्तेन समः कुतः, तेन महात्मना तुल्यः साधुः कुतः ? नैव कुतश्चिद्विद्यते अकारणपरमवत्सलस्वभावत्वात् । कुतो वा तादृशं मित्रम्, हितसुखोपसंहार-प्रवणमानसं परमविश्वासस्थानं तादृशं तत्समं मित्रम्, सुहृत् कुतः ? नैव संभवति । पुण्यं वा तादृशं कुतः ? एवं विहरतो बोधिसत्त्वस्य यत् पुण्यमुपजायते, तदपि न केनचि-त्पुण्येन समानम् ॥ 5

**कृते यः प्रतिकुर्वीत सोऽपि तावत्प्रशस्यते ।**
**अव्यापारितसाधुस्तु बोधिसत्त्वः किमुच्यताम् ॥ ३१ ॥**

पूर्वं भयसंकटव्यसनेषु उपकृतमनेन इत्युपकृते सति प्रत्युपकारं करोति यः, सोऽपि तावत् प्रशस्यते लोकेन स्तूयते साधुरयमिति । यः पुनरव्यापारितसाधुः अनभ्यर्थितकल्याणोप-नेता बोधिसत्त्वः, किमुच्यतां किमपरमभिधीयताम् ? तस्य प्रशंसा कर्तुमशक्येत्यर्थः ॥ 10

दृष्टव्यवहारमपेक्ष्यापि[1] बोधिसत्त्वस्य पुण्यमाहात्म्यमुद्भावयन्नाह—

**कतिपयजनसत्त्रदायकः**
**कुशलकृदित्यभिपूज्यते जनैः ।**
**क्षणमशनकमात्रदानतः** P 36
**सपरिभवं दिवसार्धयापनात् ॥ ३२ ॥** 15

परिमितसत्त्वानामाहारपानमात्रदानसमादान[2]मादिशन् पुण्यकर्मा अयमिति पूज्यते सत्क्रियते जनैः सत्कर्मरतैर्लोकैः । तदपि दानं क्षणम्, न सकलमहः, तदर्धं वा, अपि तु मुहूर्तमेकम् । अशनकमात्रदानत इति । कुत्सितमशनमशनकम्, अप्रणीतं भोजनम्, तदेव केवलं तन्मात्रम्, तथाविधव्यञ्जनरहितम् । तस्य दानतः परित्यागतः । कथम् ? सपरिभवम् । क्रियाविशेषणमेतत् । सतिरस्कारं नमस्कारापुरःसरम् । हठात्सत्त्रागारं प्रविशतः खटचपेटा- 20 दिना प्रहृत्येति यावत् । पुनः किंभूतात् ? दिवसार्धयापनात् प्रहरद्वयोपस्तम्भनात् । मध्याह्ने भुक्त्वा सायं पुनराहारान्वेषणात् ॥

बोधिसत्त्वस्य पुनरेतद्विपरीतं दानमिति प्रतिपादयन्नाह—

**किमु निरवधिसत्त्वसंख्यया**
**निरवधिकालमनुप्रयच्छतः ।** 25
**गगनजनपरिक्षयाक्षयं**
**सकलमनोरथसंप्रपूरणम् ॥ ३३ ॥**

न विद्यते अवधिरियत्ता । इयद्भ्यः शतसहस्रलक्षकोटिसंख्येभ्यो दास्यामि, ततः परं नेति न सत्त्वानां गणनया ददाति, किं तु निरवधिसत्त्वसंख्यया । नापि नियत- P 37

---

१ Ms. अपेक्ष्यमपि for अपेक्ष्यापि which is confirmed by T. २ समादानं नित्य-कर्मेति हेमचन्द्रः ।

कालम्, अपि तु निरवधिकालम् । कल्पशतसहस्रलक्षकोटिशतं यावद्दास्यामि, ततः परं नेति सावधिकं न ददाति । गगनेति । गगनमिव जनाः गगनजनाः । यथा आकाशमपर्यन्तं तथा जनोऽपीत्यर्थः । यदि वा । गगनं च जनाश्च ते गगनजनाः । तेषां परिक्षयः पर्यवदानम् । यावदाकाशधातुर्यावच्च सत्त्वा न परिनिर्वृताः तावदवधिकम् । यद्वक्ष्यति—

5 आकाशस्य स्थितिर्यावद्यावच्च जगतः स्थितिः ।

तावन्मम स्थितिर्भूयात् इति ।

[बोधि० १०. ५५]

तस्मादक्षयम्, न विद्यते क्षयः पर्यन्तोऽस्येति कृत्वा । अयमभिप्रायः—गगनजनपरिक्षयावधि यद्दानं तद्वस्तुतोऽक्षयमेव, तेषां परिक्षयाभावात् । नापि प्रतिनियतं वस्तु, 10 अपि तु सकलमनोरथसंप्रपूरणम् । यद्यस्याभिमतं तत् सर्वमनवद्यमभिप्रायाह्लादनकरं परमप्रेमगौरवसत्कारप्रियवचनपुरःसरं प्रमुदितमनसा अनुप्रयच्छतो बोधिसत्त्वस्य किं पुनः पूजा न युज्यते ? तस्य सुतरां युज्यते इति योज्यम् । यदुक्तं नारायणपरिपृच्छायाम्[१]—

न तद्वस्तु उपादातव्यं यस्मिन् वस्तुनि नास्य त्यागचित्तमुत्पद्यते । न त्यागबुद्धिः P 38 क्रमेत । यावत् अयं ममात्मभावः सर्वसत्त्वेभ्य उत्सृष्टः परित्यक्तः, प्रागेव बाह्यानि वस्तूनि । 15 यस्य यस्य सत्त्वस्य येन येन यद्यत् कार्यं भविष्यति, तस्मै तस्मै तत्तद्दास्यामि । तत्संविद्यमानं हस्तं हस्तार्थिकेभ्यो दास्यामि, यावत् शिरः शिरोर्थिकेभ्यः परित्यक्ष्यामि, कः पुनर्वादो बाह्येषु वस्तुषु । यदुत धनधान्यजातरूपरजतरत्नाभरणहयरथगजवाहनग्रामनगरनिगमजनपदराज्यराष्ट्रराजधानीपत्तनदासीदासकर्मकरपौरुषेयपुत्रदुहितृपरिवारेषु । इति विस्तरः ॥

एवं च गुणरत्नसमुच्चयस्थाने परहितसुखविधानैकपरममहाव्रते बोधिसत्त्वे स्वात्म- 20 हितकामैः स्वचित्तं रक्षितव्यं प्रयत्नतः इत्युपदर्शयन्नाह—

**इति सत्रपतौ जिनस्य पुत्रे**

**कलुषं स्वे हृदये करोति यश्च ।**

**कलुषोदयसंख्यया स कल्पान्**

**नरकेष्वावसतीति नाथ आह ॥ ३४ ॥**

25 इत्येवमुक्तक्रमेण सत्रपतौ सर्वदा सुखदानपतौ जिनस्य पुत्रे सुगतस्य सुते । बोधिसत्त्वे इत्यर्थः । कलुषं पापचित्तं स्वे हृदये आत्मचित्तसंताने करोति उत्पादयति दुरात्मा यः, स नरकेष्वावसति इति नाथो बुद्धो भगवानाह ब्रूते । उपान्वध्याङ्वसः [पा० १. ४. ४८] इति कर्मत्वे प्राप्ते अधिकरणविवक्षा । कियद् यावत् कलुषोदयसंख्यया कल्पान् । यावतः क्षणांस्तत्संताने कलुषचित्तमुत्पद्यते, तावतः कल्पान् कलुष- P 39 30 चित्तक्षणसंख्यान् नरकेषु तिष्ठतीति भावः । यदुक्तं प्रशान्तविनिश्चयप्रातिहार्यसूत्रे[२]—

---

१ ŚS p. 16. २ ŚS p. 51.

यावन्ति मञ्जुश्रीर्बोधिसत्त्वो बोधिसत्त्वस्यान्तिके प्रतिघचित्तान्युत्पादयति अवमन्यनाचित्तानि वा, तावतः कल्पांस्तेन संनाहः संनद्धव्यः—वस्तव्यं मया महानरकेषु इति ॥

ननु तथागतस्य दुष्टचित्तेन रुधिरमुत्पादयतो नावीचौ चित्तोत्पादनक्षणसंख्यया कल्पान् अवस्थितिरुक्ता। न तथागतात् कश्चिदधिकतरः संभवति त्रैलोक्ये। तत् कथमिदमतिदुर्घटं नीयते? सत्यम्। न खलु यथाभूतमस्मिन् नये वस्तुतत्त्वव्यवस्था। सर्वस्य 5
प्रवचनस्य नेयनीतार्थतया[1] व्यवस्थापनात्। न हि कश्चित् तथागते सदेवकोऽपि लोको दुष्टचित्तमुत्पादयितुं क्षमते। अनल्पकल्पसंख्यया अभ्यासेन सर्वसत्त्वेषु मैत्रचित्तस्य सात्मीभावात्, नास्य काये शस्त्रं क्रमतीति मैत्रचित्तस्यानुशंसकथनात्। न च कर्मप्लुतिरिह वस्तुतो दर्शिता। कर्मावरणस्य बुद्धानां प्रहीणत्वात्। तस्माद्विनेयजनाभिसंधिना तदुपदर्शितं न परमार्थतः। बोधिसत्त्वापकारे तु बुद्धत्वमेव समूलोपघातमुपहतं भवेत्। तथा च 10
सदेवकस्य लोकस्य अर्थः उपहतो भवेत्। यथागममिदमुक्तम्। परमार्थमिह भगवानेव जानाति। इदमुक्तं च श्रद्धा[2]बलाधानावतारमुद्रासूत्रे— P 40

यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा गङ्गानदीवालुकासमान् स्तूपान् विनिपातयेद्दहेद्वा, यश्चान्यः कुलपुत्रो वा कुलदुहिता वा महायानाधिमुक्तस्य बोधिसत्त्वस्य महासत्त्वस्य व्यापादखिलक्रोधचित्तमुत्पाद्य आक्रोशयेत् परिभाषयेत्, अयं ततोऽसंख्येयतरं 15
पापं प्रविशति। तत् कस्माद्धेतोः? बोधिसत्त्वनिर्जाता हि बुद्धा भगवन्तः, बुद्धनिर्जाताश्च स्तूपाः सर्वसुखोपधानानि च सर्वदेवनिकायाश्च। बोधिसत्त्वमसत्कृत्य सर्वबुद्धा असत्कृता भवन्ति। बोधिसत्त्वं सत्कृत्य सर्वबुद्धाः सत्कृता भवन्ति। इत्यादि ॥

यस्य पुनस्तत्र प्रसन्नं चित्तमुत्पद्यते, तस्य कियत् पुण्यफलमुपजायते, इत्याह—

अथ यस्य मनः प्रसादमेति 20
प्रसवेत्तस्य ततोऽधिकं फलम्।
महता हि बलेन पापकं[3]
जिनपुत्रेषु शुभं[4] त्वयत्नतः ॥ ३५ ॥

यस्य पुनः पुण्यात्मनो मनः प्रसादमुपयाति बोधिसत्त्वे, प्रसवेत्तस्य ततोऽधिकं फलम्, तस्य प्रसन्नचित्तस्य प्रसवेदुपजायेत ततोऽधिकं फलं तस्मात्पूर्वकपापफलाद् 25 P 41
बहुतरं पुण्यकर्मफलं विपाकविशेषात् प्रसवेदुत्पद्येत। यदि वा। तत्समधिकविपाकफलाधायकं कर्मैव फलमुच्यते। अधिकतरफलजनकं कर्म उपजायते इति यावत्। उक्तं च नियता[5]नियतावतारमुद्रासूत्रे—

सचेन्मञ्जुश्रीः दशसु दिक्षु सर्वलोकधातुषु सर्वसत्त्वा उत्पाटिताक्षा भवेयुः परिकल्प-

१ P नयनीतार्थ° for नेयनीतार्थ°. २ ŚS p. 51. ३ P पापकर्म for पापकं against most of Mss. ४ Minayef शुभत्वं यत्नतः for शुभं त्वयत्नतः. ५ ŚS p. 52.

मुपादाय। अथ कश्चिदेव कुलपुत्रो वा कुलदुहिता वा तेषां सर्वसत्त्वानां मैत्रचित्तस्तान्यक्षीणि जनयेत् परिकल्पमुपादाय। योऽन्यो वा मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा महायानाधिमुक्तं बोधिसत्त्वं प्रसन्नचित्तः पश्येत्, अयं ततोऽसंख्येयतरं पुण्यं प्रसवति। इति ॥

तस्मादस्मिन् महति पुण्यक्षेत्रे शुभचित्तमेव करणीयमात्मज्ञैः ॥

5 अपि च। इतोऽपि शुभचित्तमेव कर्तुमुचितम्। यस्मान्महता बलेन परमकृच्छ्रेण पापकं पापमेव पापकं कुत्सितत्वाद्वा दुष्कृतं कर्म बोधिसत्त्वेषु क्रियते, तेषां सकलकायवाङ्मनःप्रचारस्य प्रसादजनकत्वात्। बोधिचित्तप्रभावाच्च न बोधिसत्त्वेषु कस्यचिदपकारचित्तमुत्पद्यते। एतदुक्तमार्यमञ्जुश्रीविमोक्षे[1]—

P 42

तद्यथा कुलपुत्र चिन्तामणिरत्नराजमुकुटावबद्धानां महानागराज्ञां नास्ति परोपक्रम-10 भयम्, एवमेव बोधिचित्तमहाकरुणाचिन्तामणिरत्नराजमुकुटावबद्धानां बोधिसत्त्वानां नास्ति दुर्गत्यपायपरोपक्रमभयम्। इति ॥

अतः किमर्थमनर्थोपार्जनं कटुकफलं तेषु प्रयत्नतः प्रारभ्यते? अत एव शुभं त्वयत्नतः, संग्रहवस्त्वादिभिः सर्वसत्त्वहितसुखकर्मकारित्वात् परिशुद्धकर्मकारितया, क्वचिदपि स्खलिताभावाच्च। अप्रयत्नत एव प्रीतिप्रसादप्रामोद्यमुपजायते तेषु। अतः कुशलं पुन-15 रयत्नत एव प्रसूयते ॥

सांप्रतमुत्पादितबोधिचित्तेषु अतिशयवता आत्मना मनःप्रसादमाविष्कुर्वन् शास्त्रकारस्तान् नमस्यन्नाह—

तेषां शरीराणि नमस्करोमि
यत्रोदितं तद्वरचित्तरत्नम्।
20 यत्रापकारोऽपि सुखानुबन्धी
सुखाकरांस्तान् शरणं प्रयामि ॥ ३६ ॥

तेषां पुरुषकुञ्जराणां शरीराणि आत्मभावान् नमस्करोमि प्रणिपत्य वन्दे। यत्र येषु (येषां?) संतानेषु उदितमुत्पन्नं तदुक्तानुशंसं वरचित्तरत्नम्। चित्तमेव रत्नं चिन्तामणिसदृशम्। वरं श्रेष्ठं सर्वदारिद्र्यदुःखापहारित्वात्। तच्च तद्वरचित्तरत्नं चेति विग्रहः। तदिति 25 भिन्नं वा। इयं च अधिकगुणाधारस्य सत्कृतिः। अपरमपि तद्विशेषणमाह—यत्रापकारोऽपीति। येषु परमकल्याणहृदयेषु बोधिसत्त्वेषु अपकारोऽपि पराभवोऽपि कृतः तत्कर्तुः सुखानुबन्धी परंपरया सुखमावहतीति। अयमभिप्रायः—तत्रापकारः कर्तुमशक्यः। संभवे वा कथंचित् तदपकारमेव निमित्तं कृत्वा प्रवृत्तानां दुष्टाभिप्रायाणां पुनः केनचिन्निमित्तेन तत्प्रसादसमुत्पादनात्। तत्र अपकारो निर्वाणे सुखमनुबध्नाति। तद्यथा मैत्रीबलजातके [जातक-30 माला—८] पञ्चकानधिकृत्योक्तम्। बोधिसत्त्वप्रणिधानाद्वा अपकारोऽपि सुखानुबन्धीत्युच्यते। यद्वक्ष्यति—

P 43

[1] Not yet found in GV.

अभ्याख्यास्यन्ति मां ये च ये चान्येऽप्यपकारिणः ।
उत्प्रासकास्तथान्येऽपि[1] सर्वे स्युर्बोधिभागिनः ॥ इति ।
[ बोधि०–३. १६ ]

अथवा । यत्रापकारोऽपि येषामपकारोऽपि महाकरुणाध्याशयात् प्रियपुत्रेण कृत इव दुःखहेतुरपि सुखमेव जनयति, यथा क्षान्तिपरिच्छेदे [ ६. १०६–१०७ ] कथ- 5
यिष्यामः । एवं सर्वथा सुखहेतुत्वात् सुखार्थिनां रत्नाकर इव रत्नार्थिनामाश्रयणीया बोधिसत्त्वा इत्युपदर्शयति । सुखाकरांस्तान् शरणं प्रयामि । सुखस्य आकराः सर्वसुखैकप्रभवत्वात् । तान् उक्तक्रमेण अपकारेऽपि सुखहेतून् । शरणं प्रयामि । ते मम त्राणं भवन्तु इति भावः ॥

इति प्रज्ञाकरमतिविरचितायां बोधिचर्यावतारपञ्जिकायां
बोधिचित्तानुशंसाविवरणं नाम प्रथमः परिच्छेदः ॥ 10

[1] P तत्प्रासकाः for उत्प्रासकाः.

## २ पापदेशना नाम द्वितीयः परिच्छेदः ।

P 44 सांप्रतमेवं क्षणसंपत्समागमं दुर्लभमधिगम्य विदितबोधिचित्तानुशंसः बोधिचित्तग्रहणार्थं बुद्धबोधिसत्त्वानामुखीकृत्य वन्दनपूजनशरणगमनपापदेशनापुण्यानुमोदनबुद्धाध्येषणायाचनाबोधिपरिणामनां च कुर्वन्नाह—

5 तच्चित्तरत्नग्रहणाय सम्यक्
पूजां करोम्येष तथागतानाम् ।
सद्धर्मरत्नस्य च निर्मलस्य
बुद्धात्मजानां च गुणोदधीनाम् ॥ १ ॥

तस्य समनन्तरप्रतिपादितानुशंसस्य चित्तरत्नस्य ग्रहणाय स्वीकाराय । तदुत्पाद-
10 यितुमित्यर्थः । तथागतानां बुद्धानां भगवतां पूजां करोमि । एषोऽहमिति बोधिचित्तग्राहकोऽयमात्मानं निदर्शयति । अयं बुद्धरत्नस्य निर्देशः । सद्धर्मरत्नस्य चेति आगमाधिगमलक्षणस्य । निर्मलस्येति त्रिकल्याणतया त्रिकोटिशुद्धस्य प्रकृतिप्रभास्वरस्य च । सर्वदा सर्वमलानामस्थानत्वात्, क्लेशानामागन्तुकत्वात्, समस्तमलापहरणपटुत्वाच्च । अयं च धर्मरत्नस्य निर्देशः । तदात्मजानां च बुद्धसुतानाम् । गुणोदधीनां गुणरत्नसमुद्राणाम्
15 आर्यावलोकितमञ्जुघोषप्रभृतीनाम् । अयं तु संघरत्नस्य निर्देशः । इत्यादौ रत्नत्रयपूजाविधिः । पूजां करोमीति सर्वत्र संबन्धनीयम् । सम्यगिति पूजाया एव विशेषणम् । सम्यगविपरीतं यथा भवति । तीव्रचित्तप्रसादेन वा ग्रहणस्य वा विशेषणम् । सम्यग्ग्रहणाय अतिशयप्रसन्नचित्तेन न परानुरोधादिना । यथा गृहीतं न पुनर्भ्रश्यति इति ॥

पूजामेव कथयन्नाह—

20 यावन्ति पुष्पाणि फलानि चैव
भैषज्यजातानि च यानि सन्ति ।
रत्नानि यावन्ति च सन्ति लोके
जलानि च स्वच्छमनोरमाणि ॥ २ ॥

यत् परिमाणमेषामिति यावन्ति निरवशेषाणि । पुष्पाणि फलानि चैव । आकाश-
25 धातुप्रसरावधीनि सर्वाण्यपीमानि अपरिग्रहाणि । आदाय बुद्ध्या मुनिपुंगवेभ्यो निर्यातयाम्येष सपुत्रकेभ्यः [ २.६ ] इति सर्वत्र पूर्वेषु योजनीयम् । भैषज्यजातानि औषधप्रकाराः । स्वच्छमनोरमाणीति रत्नानामपि विशेषणम् ॥

P 46 महीधरा रत्नमयास्तथान्ये
वनप्रदेशाश्च विवेकरम्याः ।
30 लताः सपुष्पाभरणोज्ज्वलाश्च
द्रुमाश्च ये सत्फलनम्रशाखाः ॥ ३ ॥

देवादिलोकेषु च गन्धधूपाः
कल्पद्रुमा रत्नमयाश्च वृक्षाः ।
सरांसि चाम्भोरुहभूषणानि
हंसस्वनात्यन्तमनोहराणि ॥ ४ ॥

महीधराः पर्वताः । रत्नमया रत्नस्वभावाः । विवेकरम्या इति विवेकोपरम्या 5 मनोहराः । विवेकानुकूला इति यावत् । सुपुष्पाभरणोज्ज्वलाश्चेति शोभनपुष्पाण्येवाभरणानि मण्डनानि तैरुज्ज्वला अतिभ्राजिष्णवः । सत्फलनम्रशाखा इति सन्ति च शोभनानि वर्णगन्धरससंपन्नानि तानि फलानि चेति तैर्नम्रा अवनता भूमिलग्ना इव शाखा येषां ते कल्पद्रुमाः कल्पवृक्षाः । अम्भोरुहभूषणानि पद्मान्येव भूषणानि येषां तानि तथा । हंसस्वनात्यन्तमनोहराणि हंसानां स्वनै रुतैरत्यन्तमनोहराणि रमणीयानि तानि 10 तथा ॥

अकृष्टजातानि च शस्यजाता-
न्यन्यानि वा पूज्यविभूषणानि ।
आकाशधातुप्रसरावधीनि    P 47
सर्वाण्यपीमान्यपरिग्रहाणि ॥ ५ ॥    15

अकृष्टान्येव हलविलेखनमन्तरेणैव जातानि प्रादुर्भूतानि । शस्यजातानि व्रीहि-विशेषाः । अन्यानि वा पूज्यविभूषणानि पूज्यानामाराध्यानां विभूषणानि शोभाकराणि । अन्यानि अपराणि आकाशधातुप्रसरावधीनि आकाशधातोः प्रसरोऽवकाशः विस्तारो वा, तावदवधीनि तत्पर्यन्तानि । सर्वाण्यपीमानि उक्तानि उक्तसदृशानि अपरिग्रहाणि अममानि न केनचित् स्वीकृतानीत्यर्थः ॥    20

आदाय बुद्ध्या मुनिपुंगवेभ्यो
निर्यातयाम्येष सपुत्रकेभ्यः ।
गृह्णन्तु तन्मे वरदक्षिणीया
महाकृपा मामनुकम्पमानाः ॥ ६ ॥

आदाय बुद्ध्या गृहीत्वा मनोविज्ञानेन । मुनिपुंगवेभ्यो मुनिवृषभेभ्यो निर्यातयामि 25 प्रयच्छामि । सपुत्रकेभ्यः सबोधिसत्त्वगणेभ्यः । गृह्णन्तु तन्मे स्वीकुर्वन्तु तदेतत् सर्वं मम पूजोपहारवस्तु । वरदक्षिणीया अनुत्तरदक्षिणापात्राणि बुद्धबोधिसत्त्वाः । महाकृपाः सर्वसत्त्वहितसुखविधानैकमनसः । मां दीनदुःखितसत्त्वमनुकम्पमानाः करुणायमानाः । ममानुग्रहायेति यावत् ॥

स्यादेतत्—किं पुनरेवं मनोमयपूजामात्रं विधीयते यावता तत्तद्वस्तु मनोहरं साक्षा- 30    P 48
देव कस्मान्नोपनीयते इत्याशङ्क्याह—

अपुण्यवानस्मि महादरिद्रः
पूजार्थमन्यन्मम नास्ति किंचित्।
अतो ममार्थाय परार्थचित्ता
गृह्णन्तु नाथा इदमात्मशक्त्या ॥ ७ ॥

5 अकृतपुण्योऽस्मि, अत एव महादरिद्रः। पुण्ये सर्वोपकरणसंपत्तिभिर्भवति। तदभावात् पूजार्थमन्यदुपकरणं मम नास्ति किंचित्। अतो ममार्थाय मम पुण्यकामतया भगवन्तश्च परार्थचित्ताः परहितसुखाभिलाषिणो महाकारुणिकत्वात्। अतो गृह्णन्तु नाथा इदमुक्तं पूजोपकरणं मया निर्यातितम्। आत्मशक्त्येति स्वसामर्थ्येन ॥

अयं पुनरात्मभावो ममायत्तोऽस्ति। तं निर्यातयामीत्याह—

10 ददामि चात्मानमहं जिनेभ्यः
सर्वेण सर्वं च तदात्मजेभ्यः।
परिग्रहं मे कुरुताग्रसत्त्वा
युष्मासु दासत्वमुपैमि भक्त्या ॥ ८ ॥

आत्मानं च प्रयच्छामि जिनेभ्यः। सर्वेण सर्वं च सर्वप्रकारेण। आत्मस्वीकारं परि-

P 49

15 त्यज्य तदात्मजेभ्योऽपि। मां प्रतिगृह्णीत नरवृषभाः। युष्मासु दासत्वं दासभावं स्वीकरोमि। न जीविकादिलोभात्, अपि तु भक्त्या परमगौरवेण। श्रद्धाविलेन चेतसेत्यर्थः ॥

ननु कः पुनरत्र गुणोऽस्तीत्याह—

परिग्रहेणास्मि भवत्कृतेन
निर्भीर्भवे सत्त्वहितं करोमि।
20 पूर्वं च पापं समतिक्रमामि
नान्यच्च पापं प्रकरोमि भूयः ॥ ९ ॥

भवत्कृतेन युष्मदीयेन महदाश्रयेण विगतभयः संसारे लोकानां हितमर्थं संपादयामि। महदाश्रयेऽपि नाकुशलकर्मावृतस्य स्वहितकरणेऽपि सामर्थ्यमस्तीत्याह—पूर्वं चेत्यादि। पूर्वमपरिज्ञानात् कृतमकुशलकर्म समतिक्रमामि, विदूषणासमुदाचारादिभिर्निर्हरामि। समति-
25 क्रामतीत्युक्ते समतिक्रमामीत्युक्तं शाब्दव्यवहारेष्वनादरात्, अर्थप्रतिशरणताधातुप्रधानत्वाच्च। अपरं च पापं न पुनः करोमि। आयत्यां पुनरकरणसंवरं विदधे ॥

इति सर्वमात्मनिर्यातनाप्रभृतिपूजोपहारं निर्यात्य पुनर्विशेषेण पूजां विधातुमाह—

P 50

रत्नोज्ज्वलस्तम्भमनोरमेषु
मुक्तामयोद्भासिवितानकेषु।
30 स्वच्छोज्ज्वलस्फाटिककुट्टिमेषु
सुगन्धिषु स्नानगृहेषु तेषु ॥ १० ॥

रत्नैरिन्द्रनीलादिभिरुज्ज्वलाः प्रभास्वरा ये स्तम्भाः तैर्मनोहराः कमनीयाः । तेषु स्नानगृहेषु स्नानं करोमीति [ २.११ ] योज्यम् । पुनः किंभूतेषु ? मुक्तामया मौक्तिक-रचनाखचिता उद्भासिनः उद्भास्वराः विताना इव वितानकाः येषु ते तथा, तेषु । स्वच्छाः सुनिर्मलाः, उज्ज्वला दीप्तिमन्तः, स्फटिकस्येमे स्फाटिकाः, कुट्टिमाः भूमिरचनाविशेषा येषु, तेषु । सुगन्धिषु कृष्णागुरुचन्दनादिधूपितवासितेषु । स्नानाय गृहाः तेषु ॥ 5

मनोज्ञगन्धोदकपुष्पपूर्णैः
कुम्भैर्महारत्नमयैरनेकैः ।
स्नानं करोम्येष तथागतानां
तदात्मजानां च सगीतिवाद्यम् ॥ ११ ॥

उदकं च पुष्पाणि च मनोज्ञगन्धानि च तानि । तैः पूर्णाः कुम्भा घटाः, तैः । 10 महारत्नमयैः महान्ति वैदूर्या( दी )नि च रत्नानि च तानि, तत्स्वभावैः । अनेकैः शतसहस्र-कोटिभिः । सगीतवाद्यं सह मनोहरगीतनृत्तमुरजादिवाद्यैः ॥

प्रधूपितैर्धौतमलैरतुल्यै-
र्वस्त्रैश्च तेषां तनुमुन्मृषामि ।
ततः सुरक्तानि सुधूपितानि 15 P 51
ददामि तेभ्यो वरचीवराणि ॥ १२ ॥

प्रधूपितैरगुरुप्रभृतिधूपैः । धौतमलैः प्रक्षालितकल्मषैः । निर्मलैरित्यर्थः । अतुल्यै-रप्रतिसमैः । वस्त्रैर्दुकूलैः । तेषां तथागतानां तदात्मजानां च । तनुं शरीरम् । उन्मृषामि संमार्जयामि । ततस्तस्मादुन्मर्षणानन्तरम् । सुरक्तानि शोभनरागैः सुष्ठु वा रक्तानि । शोभन-धूपेन धूपितानि । ददामि तेभ्यो जिनेभ्यः । वरचीवराणि अनुत्तराण्याच्छादनानि ॥ 20

दिव्यैर्मृदुश्लक्ष्णविचित्रशोभै-
र्वस्त्रैरलंकारवरैश्च तैस्तैः ।
समन्तभद्राजितमञ्जुघोष-
लोकेश्वरादीनपि मण्डयामि ॥ १३ ॥

दिव्यैर्दिविभवैर्देवार्हैः । मृदूनि च सुकुमारस्पर्शानि, श्लक्ष्णानि च सूक्ष्माणि । 25 विचित्रा नानावर्णकृता शोभा येषां तैर्वस्त्रैः । अलंकारवरैश्च विभूषणप्रधानैः । तैस्तैरिति मुकुट-कटककेयूरहारनूपुरादिभिः । समन्तभद्राजितमञ्जुघोषलोकेश्वरादीनपि बोधिसत्त्वान् मण्डयामि अलंकरोमि ॥

सर्वत्रिसाहस्रविसारिगन्धै-
र्गन्धोत्तमैस्ताननुलेपयामि । 30
सूत्तप्तसून्मृष्टसुधौतहेम- P 52
प्रभोज्ज्वलान् सर्वमुनीन्द्रकायान् ॥ १४ ॥

सहस्रं चतुर्द्वीपिकानां तथा चन्द्रसूर्यमेरूणां प्रत्येकं कामदेवानां ब्रह्मलोकानां च। साहस्रश्चूलिको मतः। स एव सहस्रगुणिते द्विसाहस्रः। तत्सहस्रं त्रिसाहस्रः। शतकोटिः चातुर्द्वीपिकानामित्यर्थः। एवं सर्वासु दिक्षु लोकधातुरनन्तोऽपर्यन्तश्च। सर्वत्रिसाहस्राणि। विसतुं शीलं येषां ते तथा। तथाविधा गन्धाः परिमला येषां ते तथा। तैर्गन्धो-
5 त्तमैर्यक्षकर्दमहरिचन्दनादिभिः। तान् मुनीन्द्रकायाननुलेपयामि समालभे। किंभूतान्? सूत्तप्तं पुटपाकादिना परिशोधितान्तर्मलम्। सून्मृष्टं रोषाणादिमणिसंमार्जितम्। सुधौतं क्षाराम्ललवणादिप्रक्षालितबहिर्मलम्। तथाभूतं च तद्धेम चेति। तस्य प्रभा, द्युतिरित्यर्थः। तद्वदुज्ज्वलान् द्युतिमतः। एतच्च यथालोकप्रसिद्धितः कथितम्। न तु तथागतकायशोभाया लौकिकं किंचिदुपमानमस्ति ॥

10 सांप्रतं माल्यपूजामुपक्षिपति—

मान्दारवेन्दीवरमल्लिकाद्यैः
सर्वैः सुगन्धैः कुसुमैर्मनोज्ञैः।
P 53 अभ्यर्चयाभ्यर्च्यतमान् मुनीन्द्रान्
स्रग्भिश्च संस्थानमनोरमाभिः ॥ १५ ॥

15 मान्दारवं देवेषु पुष्पविशेषः। इन्दीवरमुत्पलम्। मल्लिका वार्षिकी। एतत्प्रमुखैः सर्वैः शोभनगन्धैः पुष्पैर्मनोहारिभिः पूज्यतमान् मुनीन्द्रान् पूजयामि। स्रग्भिश्च मालाभिश्च ग्रथनरचनाविशेषकमनीयाभिः ॥

धूपपूजामाह—

स्फीतस्फुरद्गन्धमनोरमैश्च
20 तान् धूपमेघैरुपधूपयामि।

स्फीता मांसलाः। स्फुरन्तश्च दिगन्तव्यापिनः बहुलगन्धोद्गारिणो वा। तादृशा गन्धा येषां धूपमेघानां ते तथा, तैः। धूपा मेघा इव अम्बरतलावलम्बिबिम्बाः। उपमितं व्याघ्रादिभिः [पा० २.१.२६] इति समासः। धूपानां वा मेघाः, तैः, मेघवदुद्गच्छद्भिरित्यर्थः। तानिति मुनीन्द्रान् उपधूपयामि ॥

25 नैवेद्यपूजामाह—

भोज्यैश्च खाद्यैर्विविधैश्च पेयै-
स्तेभ्यो निवेद्यं च निवेदयामि ॥ १६ ॥

भोज्यं यन्मुखमापूर्य भुज्यते। खाद्यं यत् कवलशः। छेद्यं घृतपूरादि। पेयं यत् पीयते एव पानकादि। एभिर्विविधैर्नानाप्रकारोपसंस्कृतैः। तेभ्यो मुनीन्द्रेभ्यो निवेद्यं च
30 निवेदयामि ॥

P 54 दीपपूजामाह—

रत्नप्रदीपांश्च निवेदयामि
सुवर्णपद्मेषु निविष्टपङ्क्तीन्।

गन्धोपलिप्तेषु च कुट्टिमेषु
किरामि पुष्पप्रकरान् मनोज्ञान् ॥ १७ ॥

रत्नमयाः प्रदीपाः तान् । निविष्टा पङ्क्तिर्माला येषां ते तथा । केति ? सुवर्णपद्मेषु । सापेक्षत्वेऽपि गमकत्वात् समासः । गन्धोपलिप्तेषु चन्दनकुङ्कुमादिगन्धैश्चर्चितेषु ॥

प्रलम्बमुक्तामणिहारशोभा- 5
नाभास्वरान् दिङ्मुखमण्डनांस्तान् ।
विमानमेघान् स्तुतिगीतरम्यान्
मैत्रीमयेभ्योऽपि निवेदयामि ॥ १८ ॥

प्रलम्बैर्मुक्तामणिहारैः शोभा येषां तान् विमानमेघान् विमानसमूहान् आलोककारिणः सर्वदिक्शोभाकरान् ॥ 10

सुवर्णदण्डैः कमनीयरूपैः
संसक्तमुक्तानि समुच्छ्रितानि ।
प्रधारयाम्येष महामुनीनां
रत्नातपत्राण्यतिशोभनानि ॥ १९ ॥

कनकमयदण्डैः कान्तिमत्संस्थानैः । मुक्ताखचितानि रत्नमयानि छत्राणि । 15 P 55 समुच्छ्रितानीति उद्दण्डितानि ॥

इदानीं पूजोपहारमुपसंहरन्नाह—

अतः परं प्रतिष्ठन्तां पूजामेघा मनोरमाः ।
तूर्यसंगीतिमेघाश्च सर्वसत्त्वप्रहर्षणाः ॥ २० ॥

इतः प्रभृति एते पूजामेघा मया निर्यातिताः, अन्ये वा देवादिभिरुपनीताः कल्पं 20 वा कल्पावशेषं वा प्रतिष्ठन्ताम् प्रकर्षवृत्तिस्थिता भवन्तु । तूर्यसंगीतिमेघाश्च तूर्याणि मुरजादिवाद्यानि । संगीतयः समेत्य गीतयः । समुदायगीतानीत्यर्थः । अथवा । संगीतकानि नृत्तगीतवादितानि समुदितान्युच्यन्ते । तेषां मेघाः अनेकसमुदायाः । ते च सर्वसत्त्वप्रहर्षणाः सर्वसत्त्वानां प्रमोदकारिणः, न पुनरशक्यश्रवणाः । प्रतिष्ठन्तामिति संबन्धः ॥

सामान्येनाभिसंक्षिप्य सद्धर्मादिषु पूजामाह— 25

सर्वसद्धर्मरत्नेषु चैत्येषु प्रतिमासु च ।
पुष्परत्नादिवर्षाश्च प्रवर्तन्तां निरन्तरम् ॥ २१ ॥

द्वादशाङ्गप्रवचनात्मकेषु सर्वसद्धर्मरत्नेषु । रत्नमिव रत्नं वस्तुतत्त्वालोककारित्वात्, परमनिर्वृतिहेतुत्वाच्च । स्तूपेषु भगवच्चैत्येषु । प्रतिमासु चेति बुद्धबोधिसत्त्वविग्रहप्रतिकृतिषु । पुष्पवृष्टयो रत्नवृष्टयश्च । आदिशब्दाच्चन्दनचूर्णवस्त्रादिवर्षाः । निरन्तरमिति 30 आसंसारमनवच्छिन्नम् ॥

P 56 अनुत्तरपूजामतिदिशन्नाह—

**मञ्जुघोषप्रभृतयः पूजयन्ति यथा जिनान्।**
**तथा तथागतान्नाथान् सपुत्रान् पूजयाम्यहम्॥ २२॥**

मञ्जुघोषसमन्तभद्राजितलोकनाथप्रमुखा दशभूमीश्वरा बोधिसत्त्वाः यथा येन अध्या-
5 शयेन तथागतान् पूजयन्ति, तथा तेन अधिमोक्षेण अहमपि तथागतान् सह पुत्रैः बोधि-
सत्त्वगणैः पूजयामि॥

स्तुतिपूजामाह—

**स्वराङ्गसागरैः स्तोत्रैः स्तौमि चाहं गुणोदधीन्।**
**स्तुतिसंगीतिमेघाश्च संभवन्त्वेष्वनन्यथा॥ २३॥**

10 स्वराः सप्त गान्धारादयः। तेषामङ्गानि प्रभेदाः कामोदादयः। तेषां सागरवदति-
बाहुल्यात् सागराः, तैः स्तोत्रैः। स्तुतय एव संगीतयः, स्तुतीनां वा संगीतयः समुदायाः।
तासां मेघाः संभवन्तु उपतिष्ठन्ताम्। एषु बुद्धबोधिसत्त्वेषु। अनन्यथा अविपरीता यथा
मयोपकल्पितास्तथैवेत्यर्थः॥

बुद्धधर्मसंघरत्नेषु प्रणामपूजामाह—

15 **सर्वक्षेत्राणुसंख्यैश्च प्रणामैः प्रणमाम्यहम्।**
**सर्वत्र्यध्वगतान् बुद्धान् सहधर्मगणोत्तमान्॥ २४॥**

P 57 यावन्ति दशसु दिक्षु बुद्धक्षेत्राणि, तेषु यावन्तोऽणवः, तत्संख्यैः प्रणामैः।
सर्वत्र्यध्वगतानिति अतीतप्रत्युत्पन्नानागतान् तथागतान्। किंभूतान्? सहधर्मगणोत्तमान्
गणानामुत्तमोऽप्रभूतो बोधिसत्त्वगणः। धर्मश्च गणोत्तमश्च ताभ्यां सह॥

20 तथागतस्तूपेषु प्रणाममाह—

**सर्वचैत्यानि वन्देऽहं बोधिसत्त्वाश्रयांस्तथा।**
**नमः करोम्युपाध्यायानभिवन्द्यान् यतींस्तथा॥ २५॥**

ऊर्ध्वतिर्यगधस्तनासु दिशासु विदिशासु च। सशरीराशरीरेषु स्तूपेषु प्रणमाम्यह-
मित्यर्थः। बोधिसत्त्वाश्रयानपीति जातकावदानजन्मादिस्थानानि। अभिवन्द्यानिति वृद्धान्
25 वन्दनार्हान्। तदनेन पूजावन्दनाविधिरुक्तः॥

अयं च पूजाविधिस्त्रिसमयराजे कथितः। यथोक्तम्—स्थलजा रत्नपर्वताः। जलजा
रत्नपर्वताः। स्थलजजलजानि रत्नानि दशदिगवस्थितानि। अममान्यपरिग्रहाणि। देयानी-
त्युक्तम्। अनया च दिशा सर्वभैषज्यानि सर्वरसायनानि सर्वसलिलानि। अनवद्यानि
आमण्डलानि (?) सर्वकाञ्चनमण्डलानि। विवृत्तेषु वा लोकधातुषु परमरसस्पर्शसंपन्ना
30 भूपर्पटका अमृतलता। अकृष्टोप्ताः शालयः। सर्वोत्तरकुरुद्वीपेषु च परिशुद्धेषु च लोकधातुषु
ये रमणीयाः परिभोगाः॥

P 58 यथा आर्यरत्नमेघे चाह—

स यानीमानि सूत्रान्तेषु उदाराणि पूजोपस्थानानि शृणोति, तान्याशयतस्तीव्रेणा-

१ ŚS p. 153. २ ŚS p. 153.

ध्याशयेन बुद्धबोधिसत्त्वेभ्यः परिणामयति । तथा स विविधानि पूजोपस्थानान्यनु-
विचिन्तयति इति ॥

सांप्रतं रत्नत्रयशरणगमनपूर्वकं पापदेशनामाह—

बुद्धं गच्छामि शरणं यावदा बोधिमण्डतः ।
धर्मं गच्छामि शरणं बोधिसत्त्वगणं तथा ॥ २६ ॥  5

त्राणार्थं शरणार्थम् । गमनं तदाज्ञापरिपालनम् । यो हि यं शरणं गच्छति, स
तदाज्ञां नातिक्रमतीति भावः । बोधिमण्डत इति । मण्डशब्दोऽयं सारवचनम्, घृतमण्ड इति
यथा । तथा च सति बोधिप्रधानं यावत् । यावत् सम्यक्संबोधिं नाधिगच्छामि इत्यर्थः ॥

विज्ञापयामि संबुद्धान् सर्वदिक्षु व्यवस्थितान् ।
महाकारुणिकांश्चापि बोधिसत्त्वान् कृताञ्जलिः ॥ २७ ॥  10

विज्ञापयामीत्यनेन बुद्धबोधिसत्त्वानामग्रगतमात्मानं ध्यात्वा अध्याशयेनैतद्वक्तव्य-
मित्युपदर्शितम् । कृताञ्जलिरिति कायविज्ञप्तिरुक्ता । अञ्जलिः करद्वयेन संपुटं कृत्वेत्यर्थः ॥

अनादिमति संसारे जन्मन्यत्रैव वा पुनः ।  P 59
यन्मया पशुना पापं कृतं कारितमेव वा ॥ २८ ॥
यच्चानुमोदितं किंचिदात्मघाताय मोहतः ।  15
तदत्ययं देशयामि पश्चात्तापेन तापितः ॥ २९ ॥

अनादिमतीति पूर्वजन्मपरंपरासु । जन्मन्यत्रैवेति अस्मिन्नपि जन्मनि, न केवलं
पूर्वत्र । पशुनेति मोहबहुलतामात्मनो दर्शयति । त्रिविधं कर्म कायवाङ्मनोभिस्तत्र कृतम् ।
त्रिभिरपि कारितमिति । वाङ्मनोभ्यामनुमोदितमित्यपि । आत्मघातायेति तत्पापकर्मफलस्य
मम आत्मन्येव विपाकात् । तदत्ययमिति तदापत्तिम् । देशयामि प्रकाशयामि उत्तानीकरोमि, न 20
प्रच्छादयामि । पश्चात्तापेनेति अकुशलकर्मणो नरकादौ दुःखविपाकश्रवणात् ॥

अधुना यथाप्रधानमत्ययदेशनामाह–

रत्नत्रयेऽपकारो यो मातपितृषु वा मया ।
गुरुष्वन्येषु वा क्षेपात् कायवाग्बुद्धिभिः कृतः ॥ ३० ॥

रत्नत्रये इति अनुत्तरगुणक्षेत्रे । मातेत्यादिना उपकारिक्षेत्रे । तत्रापकारस्य विस्तर- 25
तीव्रदुःखविपाकत्वात् ॥

अनेकदोषदुष्टेन मया पापेन नायकाः ।
यत्कृतं दारुणं पापं तत्सर्वं देशयाम्यहम् ॥ ३१ ॥

अनेकदोषदुष्टेनेति रागादिक्लेशदूषितेन, न स्वतन्त्रेणेत्यर्थः ॥  P 60

---

१ Arter st. 31, the Mss. read the following stanza as st. 32:

कथं च निःसराम्यस्मान्नित्योद्विग्नोऽस्मि नायकाः ।
मा भून्मे मृत्युरचिरादक्षीणे पापसंचये ॥ ३२ ॥

This stanza is omitted in Ms. M of Minayef's edition, as also in Tibetan translation. It looks to repeat the contents of st. 31, and therefore may be an interpolation.

पापकर्मणि संवेगमाह—

**कथं च निःसराम्यस्मात् परित्रायत सत्वरम् ।**

कथं केन प्रकारेण । अस्मादशुभात् । सत्वरं शीघ्रम् । केयं त्वरा भवत इत्याह—

**मा ममाक्षीणपापस्य मरणं शीघ्रमेष्यति ॥ ३३ ॥**

5 यावत् पापक्षयं न करोमि, तावन्मम मृत्युर्भविष्यति न । अन्यथा दुर्गतिगमनभयात् ॥

ननु च अकृतपापपरिक्षयस्य भवतो मृत्योः कोऽत्रकाश इत्याह—

**कृताकृतापरीक्षोऽयं मृत्युर्विश्रम्भघातकः ।**

**स्वस्थास्वस्थैरविश्वास्य आकस्मिकमहाशनिः ॥ ३४ ॥**

10 इदं कृतमिदमकृतं तावदिति न परीक्षते मृत्युः । विश्रम्भो विश्वासः । तेन घातकः । नापि नीरोगोऽहं युवा बलवत्कायो वेति विश्वसनीयम् । कुतः ? आकस्मिकमहाशनिरिति अचिन्तितवज्रपातसदृशः ॥

यद्येवं पापाद् भयम्, किमर्थं तर्हि तत् कृतमित्याह—

**प्रियाप्रियनिमित्तेन पापं कृतमनेकधा ।**

15 **सर्वमुत्सृज्य गन्तव्यमिति न ज्ञातमीदृशम् ॥ ३५ ॥**

P 61 प्रिय आत्मा आत्मीयश्च, अप्रियस्तदपकारी । प्रियस्य हितसुखमप्रियस्य च तद्विपरीतमिच्छता कृतं पापमनेकधा प्राणातिपातादत्तादानादिभेदेनानेकप्रकारम् । ननु सर्वमेतन्नचिरेण परित्यज्य गन्तव्यम्, तत् किमिति निरर्थकं पापकमुपचीयते इत्याह— सर्वमित्यादि । सर्वं प्रियमप्रियं वा उत्सृज्य विहाय गन्तव्यम् । एतत्तु न मया मुग्धेन 20 परिभावितम् ॥

**[1]अप्रिया न भविष्यन्ति प्रियो मे न भविष्यति ।**

**अहं च न भविष्यामि सर्वं च न भविष्यति ॥ ३६ ॥**

किमिदानीं परिशिष्टमवस्थितमित्याह—

**तत्तत्स्मरणतां याति यद्यद्वस्त्वनुभूयते ।**

25 **स्वप्नानुभूतवत्सर्वं गतं न पुनरीक्ष्यते ॥ ३७ ॥**

यद्यद्वस्त्विति सुखहेतुर्दुःखहेतुर्वा । अनुभूयते संवेद्यते । कथं पुनरेवमित्याह— स्वप्नानुभूतवदिति । यथा स्वप्नावस्थायामुपलब्धं विनष्टं न पुनरीक्ष्यते, तत्र स्मरणमात्रमेव अवशिष्यते ॥

तथा अन्यदपि सर्वं प्रियादिसंगतमस्थिरमस्मिन्नेव जन्मनीत्युपदर्शयन्नाह—

30 **इहैव तिष्ठतस्तावद्गता नैके प्रियाप्रियाः ।**

**तन्निमित्तं तु यत्पापं तत्स्थितं घोरमग्रतः ॥ ३८ ॥**

---

१ There is no commentary on this stanza by Prajñākaramati. All Mss. however give it and it is also found in Tibetan.

तिष्ठतः आसीनस्यैव मम पश्यतः । गता अनित्यतया ग्रसिताः । यद्येवं तर्हि तदर्थं कृतं पापमपि तैः सह यास्यतीत्याह—तन्निमित्तमित्यादि । तेषां प्रियादीनां निमित्तं तदर्थं यत्कृतं पापं तत्पुनरग्रत एव स्थितं मे । तन्मया सह यास्यतीत्यर्थः ॥ P 62

नन्वेवं पश्यन्नपि कथं मूर्च्छितोऽसीत्याह—

**एवमागन्तुकोऽस्मीति न मया प्रत्यवेक्षितम् ।** 5
**मोहानुनयविद्वेषैः कृतं पापमनेकधा ॥ ३९ ॥**

नाहं कस्यचित् परितः, न मे कश्चित्, इत्येवं न मया प्रत्यवेक्षितं विचारितम् । तेन कारणेन । अनुनय आसङ्गः आत्मनि आत्मीये च । विद्वेषः प्रतिघः । तत् प्रतिकूलमाचरति ॥

चिरतरमतिदीर्घायुषो भवतः का मरणाशङ्का ? तत् किमेवं बिभेषीत्याह— 10

**रात्रिंदिवमविश्राममायुषो वर्धते व्ययः ।**
**आयस्य चागमो नास्ति न मरिष्यामि किं न्वहम् ॥ ४० ॥**

अहर्निशम् । आयुषो वर्धते व्ययः, आयुःसंस्काराः क्षीयन्ते । अविश्राममिति क्षणमपि न व्ययविच्छित्तिरस्ति । आगमनमागमः अनुप्रवेशः । स च आयस्य उपचयस्य लेशतोऽपि न संविद्यते । तदहमेवं किं नु न मरिष्यामि ? अपि तु चिरमपि स्थित्वा जीवितं 15 मरणपर्यवसानमिति ॥

स्यादेतत् । यन्निमित्तं कृतं पापं तेऽपि न नरकादिषु तत्फलदुःखानुभवकाले संविभागिनो भविष्यन्ति । तत् किमिति कातरभावमवलम्बसे इत्यत्राह । आस्तां तावत्परलोके— P 63

**इह शय्यागतेनापि बन्धुमध्येऽपि तिष्ठता ।**
**मयैवेकेन सोढव्या मर्मच्छेदादिवेदना ॥ ४१ ॥** 20

इह अस्मिन्नेव भवे मरणान्तिकादिदुःखबाधायां स्वजनपरिजनमध्यगतेनापि । मर्मच्छेदादिवेदनेति पिपासागात्रसंतापादिदुःखं मयैवैकेन सोढव्यम् । न तत्र अल्पीयानपि भागोऽन्यस्य संभवति ॥

किं पुनर्नरकादावित्याह—

**यमदूतैर्गृहीतस्य कुतो बन्धुः कुतः सुहृत् ।** 25
**पुण्यमेकं तदा त्राणं मया तच्च न सेवितम् ॥ ४२ ॥**

कालदूतैर्गृहीतस्य अधिष्ठितस्य गलपाशेन बद्धस्य मुद्गरैराकोट्यमानस्य अटवीकान्तारगहनकण्टकविषमशिलाशकलैर्वितुद्यमानचरणस्य असहायस्य कर्मानुभवभूमिं नीयमानस्य । कुतो बन्धुः कुतः सुहृत् इति न तत्र केचित् सहायास्त्राणं संभवन्ति । पुण्यमेवैकं तदा त्राणं स्यात् । मया तच्च न सेवितम्, तच्च पुण्यं त्राणभूतं मया 30 नोपार्जितम् ॥

पुनरपि पापात् संवेगमाह—

P 64 अनित्यजीवितासङ्गादिदं भयमजानता।

प्रमत्तेन मया नाथा बहु पापमुपार्जितम्[1] ॥ ४३ ॥

अस्थायिनि जीविते। आसङ्गादाग्रहात्। इदमागामि नरकादिदुःखभयमजानता
5 अपश्यता। प्रमत्तेनेति यौवनरूपधनाधिपत्यादिमदमत्तेन ॥

किं पुनरेवं संवेगबहुलो भवानित्याह—

अङ्गच्छेदार्थमप्यद्य नीयमानो विशुष्यति।

पिपासितो दीनदृष्टिरन्यदेवेक्षते जगत् ॥ ४४ ॥

अत्यल्पमिदं करचरणादिच्छेदनं दुःखं नरकदुःखात्। तथापि तत्रेयमवस्था
10 भवति। विशुष्यति सर्वात्मना शोषमुपयाति। पिपासितस्तृष्णार्तः। दीनदृष्टिरिति कृपण-
दृष्टिः। अन्यदेवेति विपरीतम् ॥

नरकदुःखस्यातिशयमाह—

किं पुनर्भैरवाकारैर्यमदूतैरधिष्ठितः।

महात्रासज्वरग्रस्तः पुरीषोत्सर्गवेष्टितः ॥ ४५ ॥

15 कातरैर्दृष्टिपातैश्च त्राणान्वेषी चतुर्दिशम्।

भैरवाकारैरिति भयंकररूपैः। अधिष्ठितः आत्मसात्कृतः। महात्रासनज्वरस्तेन
P 65 ग्रस्तो गृहीतः। पुरीषमुच्चारः, तस्योत्सर्गो विनिर्गमः, तेन वेष्टितो विलिप्तः। कातरैरिति
दीनैः। चतुर्दिशं त्राणान्वेषी। कथमित्याह—

को मे महाभयादस्मात्साधुस्त्राणं भविष्यति[2] ॥ ४६ ॥

20 साधुरकारणवत्सलः। त्राणं परित्राता ॥

त्राणशून्या दिशो दृष्ट्वा पुनः संमोहमागतः।

तदाहं किं करिष्यामि तस्मिन् स्थाने महाभये ॥ ४७ ॥

एवमपि यदा कुत्रचिदपि त्राणं न पश्यति, तदा त्राणाभावात् पुनः संमोहमागतः।
तदा तस्मिन् काले किं करिष्यामि? सर्वक्रियासु असमर्थः सन्। तस्मिन् स्थाने
25 प्रतापनादिनरकभूमौ ॥

तस्मादिदानीमेव प्रतीकारानुष्ठानं युक्तमित्याह—

अद्यैव शरणं यामि जगन्नाथान् महाबलान्।

जगद्रक्षार्थमुद्युक्तान् सर्वत्रासहरान् जिनान् ॥ ४८ ॥

जगतां नाथान् सर्वाश्वासनिर्वृतिस्थानभूतान् नायकान्। महाबलानिति सर्वत्रा-
30 प्रतिहतसामर्थ्यान्। जगद्रक्षार्थमुद्युक्तानिति सर्वसत्त्वपरित्राणार्थमुद्युक्तान्। एवमपि

---

१ Some Mss. of the text used by Minayef read दुःखं for पापम्; T supports पापम्. २ Minayef reads करिष्यति against Mss. and T.

त्राणानाश्रित्य भयोपशमो न स्यात्, तदा किं शरणगमनेनेत्यत्राह—सर्वत्रासहरानिति सर्वव्यसनापहर्तॄन् ॥

धर्मसंघशरणगमनमाह—

तैश्चाप्यधिगतं धर्मं संसारभयनाशनम् । P 66

शरणं यामि भावेन बोधिसत्त्वगणं तथा ॥ ४९ ॥ 5

तैर्बुद्धैर्भगवद्भिः । अधिगतं साक्षात्कृतम् । धर्मं निर्वाणमित्यर्थः । संसारभयनाशनं सर्वक्लेशप्रतिपक्षत्वात् । भावेनेति परमप्रसादेन न मायाशाठ्येन विचिकित्सया वा । बोधिसत्त्वगणमिति संघम् । तथेति भावेन ॥

इदानीं यथाप्रधानं बोधिसत्त्वेभ्य आत्मनिर्यातनं कुर्वन्नाह—

समन्तभद्रायात्मानं ददामि भयविह्वलः । 10

पुनश्च मञ्जुघोषाय ददाम्यात्मानमात्मना ॥ ५० ॥

समन्तभद्राय बोधिसत्त्वाय । आत्मानं ददामि निर्यातयामि । भयविह्वलो नरकादि-भयव्याकुलः । पुनश्च मञ्जुघोषाय मञ्जुनाथाय । आत्मनेति न परप्रेरणया । स्वयमेव प्रसन्नचित्त इत्यर्थः ॥

तं चावलोकितं नाथं कृपाव्याकुलचारिणम् । 15

विरौम्यार्तरवं भीतः स मां रक्षतु पापिनम् ॥ ५१ ॥

आर्यावलोकितेश्वरम् । कृपया व्याकुलं चरितं शीलमस्येति कृपाव्याकुलचारिणमिति तस्यैव विशेषणम् । विरौमि आरवं करोमि । आर्तरवमिति क्रियाविशेषणम् । दुःखदीन-कातरस्वरम् । भीतः त्रस्तः पापकर्मफलात् । स भगवानवलोकितः मां रक्षतु पापिनं कृतपापं मां त्रायताम् ॥ 20

आर्यमाकाशगर्भं च क्षितिगर्भं च भावतः ।

सर्वान् महाकृपांश्चापि त्राणान्वेषी विरौम्यहम् ॥ ५२ ॥ P 67

आर्यमाकाशगर्भं च बोधिसत्त्वम् । क्षितिगर्भं च बोधिसत्त्वम् । विरौमीति परेण संबन्धः । सर्वान् महाकृपांश्चापि, येऽपि न नामग्रहणेनोदाहृताः, तानपि परमकारुणिकान् परदुःखदुःखिनः ॥ 25

यं दृष्ट्वैव च संत्रस्ताः पलायन्ते चतुर्दिशम् ।

यमदूतादयो दुष्टास्तं नमस्यामि वज्रिणम् ॥ ५३ ॥

यस्य दर्शनमात्रेण यमदूतादयः । आदिशब्दादन्येऽपि यक्षराक्षसादयो दुष्टा भीताः सन्तः पलायन्ते, दूरमपगच्छन्ति । तं नमस्यामि नमस्करोमि । वज्रिणमिति वज्रमस्यास्तीति वज्रपाणिं बोधिसत्त्वम् । तदनेन शरणगमनादिना पापक्षयार्थमाश्रयबलमुपदर्शितम् । यदुक्तं[1] 30 चतुर्धर्मकसूत्रे—

---

१ ŚS p. 89.

तत्राश्रयबलं बुद्धधर्मसंघशरणगमनमनुत्सृष्टबोधिचित्तता च। स बलवत्संनिश्रयेण न शक्यते पापेनाभिभवितुम्। इति॥

पुनरन्यथात्वशंकां निराकर्तुमाह—

अतीत्य युष्मद्वचनं सांप्रतं भयदर्शनात्।
5 शरणं यामि वो भीतो भयं नाशयत द्रुतम्॥ ५४॥

P 68 अतिक्रम्य युष्मदाज्ञाम्। सांप्रतमिदानीम्। भयदर्शनात्, तदतिक्रमे यस्मादनिष्टफलसंभवदर्शनात्, वो युष्मान् शरणं यामि भीतः अनिष्टफलादुत्त्रस्तः। तस्मात्पुनरन्यथाशङ्का न कर्तव्या। अतो भयं नाशयत, पूर्वकृतपापाद् भयमपनयत। द्रुतं शीघ्रम्। ममेत्यध्याहार्यम्॥

10 ननु एवमपि कः प्रत्येष्यति त्वद्वचनादित्याशङ्क्य पुनरत्रार्थे दृढतामाह—

इत्वरव्याधिभीतोऽपि वैद्यवाक्यं न लङ्घयेत्।
किमु व्याधिशतैर्ग्रस्तश्चतुर्भिश्चतुरुत्तरैः॥ ५५॥

इत्वरो गत्वरो नश्वरोऽचिरस्थायीत्यर्थः। लघुर्वा। स चासौ व्याधिश्चेति, तस्माद् भयेन। वैद्यवाक्यं न लङ्घयेत् वैद्योपदेशं नातिक्रमेत्। मा अयं व्याधिर्मम वृद्धिमुपगच्छेत्। 15 किमु किं पुनः। व्याधिशतैर्ग्रस्तो लङ्घयेत्। चतुर्भिश्चतुरुत्तरैरिति चतुरधिकैश्चतुर्भिः शतैरित्यर्थः। शतमकालमृत्यूनाम्, एकं कालमरणमित्येकोत्तरं शतं मृत्यूनाम्। ते च प्रत्येकं वातपित्तश्लेष्मकृताः तत्संनिपातकृताश्चेति चतुरुत्तराणि चत्वारि शतानि भवन्ति। इति कारणभेदात्कार्यभेदः, कार्यभेदाच्च कारणभेदव्यवस्था॥

ननु तथापि किमत्र भयकारणं यन्नास्तीत्याह—

20 एकेनापि यतः सर्वे जम्बुद्वीपगता नराः।
नश्यन्ति येषां भैषज्यं सर्वदिक्षु न लभ्यते॥ ५६॥

P 69 एकेनापि व्याधिना कुपितेन यस्मात्सर्वे जम्बुद्वीपगता नराः प्राणिनो नश्यन्ति म्रियन्ते। अन्यच्च। येषां व्याधीनां भैषज्यं औषधं चिकित्सार्थं क्वचिदपि न प्राप्यते। अत्र काशिराजपद्मकजातकमुपनेयम्[१]। तद्यथानुश्रूयते—बोधिचर्यां चरन्नयमेव भगवानतीते- 25 ऽध्वनि पद्मो नाम काशिराजो बभूव। तस्मिन् समये सर्वे जम्बुद्वीपका मनुष्या महता रोगेण विकलीभूता म्रियन्ते च। तैरिदमालोचितम्—अयमेव अस्माकं स्वामी राजा परमकारुणिकः प्रतीकारं विधास्यतीति अस्यैव आत्मदुःखं निवेदयामः। ते च एवमवधार्य मिलित्वा, भो महाराज, भवति स्वामिनि परमहितैषिणि संविद्यमानेऽपि इयमस्माकमवस्था, इति तस्मिन् राजनि दुःखमाविष्कृतवन्तः। स च राजा करुणापरवशहृदयः तेषां दुःख- 30 मसहमानः शीघ्रममीषां रोगपीडामपनयत इति वैद्यानाज्ञापयामास। तेऽपि तथेति प्रतिश्रुत्य

१ Cf AŚ 31.

चिकित्साशास्त्राणि व्यवलोक्य सद्योरोहितमत्स्यमांसादन्यद् भैषज्यमलभमानाः तथैव राज्ञः प्रत्युक्तवन्तः । इति विस्तरः । इदमेव जातकं भवोपलक्षणं दर्शितम् ॥

तत्र सर्वज्ञवैद्यस्य सर्वशल्यापहारिणः ।
वाक्यमुल्लङ्घयामीति धिङ् मामत्यन्तमोहितम् ॥ ५७ ॥

कायिकमानसिकानेकशल्योद्धारिणः । आत्मानं जुगुप्सते । धिङ् मामत्यन्तमोहित- 5 P 70
मिति । एवं जानन्नपि यदि तथागताज्ञाया वैमुख्यमासेवे, तदा मम मोहस्य पर्यन्तो नास्ति । कुत्सनीयोऽस्मीत्यर्थः ॥

किं पुनरेवमित्याह—

अत्यप्रमत्तस्तिष्ठामि प्रपातेष्वितरेष्वपि ।
किमु योजनसाहस्रे प्रपाते दीर्घकालिके ॥ ५८ ॥ 10

पर्वतादिप्रपातेषु अल्पतरेषु यत्रास्थिभङ्गमात्रं मरणमात्रं वा दुःखं स्यात् । किमु योजनसाहस्र इति । योजनसहस्रं परिमाणमस्य [ पा० ५. १. २७ ] इत्यण् । अनेकयोजनसहस्रपरिमाणे अवीच्यादिकप्रपाते इत्यर्थः । दीर्घकालिक इति यत्रान्तरकल्पादिभिरायुषः क्षयः ॥

सद्यो मरणमदृष्ट्वेव किमकाण्डे कातरतया सुखासिकां जहासीत्याह— 15

अद्यैव मरणं नैति न युक्ता मे सुखासिका ।
अवश्यमेति सा वेला न भविष्याम्यहं यदा ॥ ५९ ॥

अवश्यमिति निश्चितमेतत् ॥

तथापि भयमयुक्तमित्याह—

अभयं केन मे दत्तं निःसरिष्यामि वा कथम् । 20
अवश्यं न भविष्यामि कस्मान्मे सुस्थितं मनः ॥ ६० ॥

अभयं मा भैरिति केन सत्पुरुषेण मम दत्तं येन निर्भयो विहरिष्यामीति भावः । P 71
यदि वा निःसरणोपायोऽपि यदि भवेत्, तथापि भयमयुक्तम् । तदपि नास्ति । निःसरिष्यामि वा कथं ततो दुःखात् । अवश्यं न भविष्यामीति । सर्वजीवितं मरणपर्यवसानमित्युक्तं भगवता ॥ 25

इत्थमपि न युक्ता मे सुखासिकेत्याह—

पूर्वानुभूतनष्टेभ्यः किं मे सारमवस्थितम् ।
येषु मेऽभिनिविष्टेन गुरूणां लङ्घितं वचः ॥ ६१ ॥

अभिनिविष्टेनेति आसक्तेन । गुरूणामिति बुद्धबोधिसत्त्वकल्याणमित्राणाम् ॥

तस्मादिदमहर्निशं मम मनसि कर्तुमुचितमित्याह— 30

जीवलोकमिमं त्यक्त्वा बन्धून् परिचितांस्तथा ।
एकाकी क्वापि यास्यामि किं मे सर्वैः प्रियाप्रियैः ॥ ६२ ॥

जीवलोकं सत्त्वलोकम्, इमं मनुष्यादिसभागतालक्षणम्। एकाकीत्यसहायः। कापीत्यनिश्चितस्थानम्॥

इयमेव तु मे चिन्ता युक्ता रात्रिंदिवं तदा।
अशुभान्नियतं दुःखं निःसरेयं ततः कथम्॥ ६३॥

P 72 5 अशुभादिति अकुशलात् कर्मणः। तत इत्यशुभात्॥

सांप्रतं कृतकर्मफलसंबन्धनिश्चयो महताभिनिवेशेन पुनरत्ययदेशनामारभत इत्याह—

मया बालेन मूढेन यत्किंचित्पापमाचितम्।
प्रकृत्या यच्च सावद्यं प्रज्ञप्त्यावद्यमेव च॥ ६४॥
तत्सर्वं देशयाम्येष नाथानामग्रतः स्थितः।
10 कृताञ्जलिर्दुःखभीतः प्रणिपत्य पुनः पुनः॥ ६५॥
अत्ययमत्ययत्वेन प्रतिगृह्णन्तु नायकाः।

बालेनेति अजानता। मूढेनेति मोहान्धेन। यत्किंचिदिति कायेन वाचा मनसा वा। प्रकृतिसावद्यं प्राणातिपातादिदशाकुशलस्वभावम्। प्रज्ञप्तिसावद्यं यद् भगवता गृहीतसंवराणामेव प्रज्ञप्तमकालभोजनादिरूपम्। देशयामीति वाग्विज्ञप्तिमुत्थापयति। 15 कृताञ्जलिरिति कायविज्ञप्तिः। प्रणिपत्य पुनःपुनरिति अतिशयवच्चित्तसंवेगमुपदर्शयति। अति यतत्यनेन नरकादिषु इति अत्ययः, अशुभं कर्म। तमत्ययत्वेन दोषत्वेन प्रतिगृह्णन्तु जानन्तु पश्यन्तु विदन्तु व्यक्तीकृतं मया। अनावरणचित्तेन, न प्रच्छादना अत्र ममास्तीति भावः॥

पुनः स्खलितशङ्कामपाकर्तुं पुनरकरणसंवरं कुर्वन्नाह—न भद्रकमित्यादि।

20 न[1] भद्रकमिदं नाथा न कर्तव्यं पुनर्मया॥ ६६॥

यदार्यकान्तं विज्ञप्रशस्तं न भवति तदभद्रकं गर्हितम् अनार्यं कर्मेत्युच्यते। तदद्यप्रभृति जानता पश्यता बुद्धिपूर्वकं संचिन्त्य पुनर्मया न कर्तव्यम्। आयत्यां पुनरकरणसंवरमापत्स्ये इत्यर्थः। एतच्च त्रिस्कन्धप्रवर्तनप्रस्तावे [बोधि. ५.९८—९९] व्यक्तीकरिष्यते॥

इति प्रज्ञाकरमतिविरचितायां बोधिचर्यावतारपञ्जिकायां
25 पापदेशना नाम द्वितीयः परिच्छेदः॥

---

१ Minayef reads अभद्रकं for न भद्रकम्.

# ३ बोधिचित्तपरिग्रहो नाम तृतीयः परिच्छेदः ।

अधुना पापदेशनानन्तरं पुण्यानुमोदनामाह— P 74

अपायदुःखविश्रामं सर्वसत्त्वैः कृतं शुभम् ।
अनुमोदे प्रमोदेन[1] सुखं तिष्ठन्तु दुःखिताः ॥ १ ॥

नरकादिगतौ दुःखमनुभवन्तो हि परिश्रान्ताः सुकृतविपाकमधिगम्य प्रतिलब्धसुखा 5 विश्राम्यन्ति कियत्कालम् । अनुमोदे प्रसादेन इति संप्रहर्षयामि प्रसन्नचित्तः । अनुमोदनापि त्रिविधा—मनसा कायेन वाचा च । तत्र प्रसन्नचित्तः संप्रहर्षयति मनसा, कायेन रोमहर्षश्रुपातगात्रकम्पादिकमनुभवन्, वाचा च संप्रहृष्टचेतनः तथाविधामेव वाचमुच्चारयन्, P 75 साधु कृतं भद्रकं कृतमिति । सुखं तिष्ठन्तु दुःखिता इति यदर्थं तैस्तत्कर्म कृतम्, तदपि तेषां समृध्यतु इति भावः ॥ 10

लौकिकं कर्मानुमोद्य लोकोत्तरमनुमोदमानः प्राह—

संसारदुःखनिर्मोक्षमनुमोदे शरीरिणाम् ।
बोधिसत्त्वत्वबुद्धत्वमनुमोदे च तायिनाम् ॥ २ ॥

दुःखनिर्मोक्षमिति श्रावकबोधिः प्रत्येकबुद्धबोधिर्वा । चित्तं वा तदर्थमुत्पादितं तथोच्यते । तदा बोधित्रयमपि तद्ग्राहः । शरीरिणामिति प्राणिनाम् । बोधिसत्त्वत्वबुद्धत्वमिति 15 बोधिसत्त्वत्वं भगवतां हेत्ववस्थाम्, बुद्धत्वं फलावस्थामिति । तायिनामिति स्वाधिगतमार्गदेशकानाम् । यदुक्तम्—तायः स्वदृष्टमार्गोक्तिः इति । तद्विद्यते येषामिति । अथवा—तायः संतानार्थः आसंसारमप्रतिष्ठितनिर्वाणतयावस्थायिनाम् ॥

बोधिसत्त्वानां पुण्यानुमोदनां कुर्वन्नाह—

चित्तोत्पादसमुद्रांश्च सर्वसत्त्वसुखावहान् । 20
सर्वसत्त्वहिताधानाननुमोदे च शासिनाम् ॥ ३ ॥

चित्तोत्पादाः प्रतिक्षणभाविनोऽपर्यन्तागाधतया समुद्रा इव समुद्राः तान् । P 76 किंभूतान्? सर्वसत्त्वसुखावहान् सर्वसत्त्वानां सुखमावहन्तीति तद्रसैकनिम्नस्वभावानित्यर्थः । सर्वसत्त्वहिताधानानिति हितविधायकान् । शासिनामिति शासनं शासः बुद्धत्वोपायाभ्यासः, तदर्थत्वादुपचारात् । तद्विद्यते येषामिति शासिनो बोधिसत्त्वाः । तदुक्तम्— 25

उपायाभ्यास एवायं तादर्थ्याच्छासनं मतम् । इति ॥

अथवा—शासितुं शीलं येषामिति शासिनः । बोधिसत्त्वा हि दानादिभिः संग्रहवस्तुभिः सत्त्वान् संगृह्य सन्मार्गेऽवतारयन्ति ॥

एतावता अनुमोदना कथिता । अध्येषणां कथयन्नाह—

सर्वासु दिक्षु संबुद्धान् प्रार्थयामि कृताञ्जलिः । 30
धर्मप्रदीपं कुर्वन्तु मोहाद्दुःखप्रपातिनाम् ॥ ४ ॥

---

१ For प्रमोदेन Com. reads प्रसादेन which is the reading found in all Mss.

धर्मप्रदीपं कुर्वन्त्विति अज्ञानतमोवृतानां सत्त्वानां मार्गामार्गविशेषपरिज्ञानविकलानां धर्मदेशनात्मकमालोकं कुर्वन्तु ॥

एतावता अध्येषणा कथिता। याचनामुपदर्शयन्नाह—

**निर्वातुकामांश्च जिनान् याचयामि कृताञ्जलिः।**

5 **कल्पाननन्तांस्तिष्ठन्तु मा भूदन्धमिदं जगत् ॥ ५ ॥**

कृतकृत्यतया परिनिर्वाणं गन्तुमनसः। अपर्यन्तकल्पान् स्थितये याचयामि। मा

P 77 भूदन्धमिति पूर्ववन्मार्गाज्ञाननिश्चेतनं मा भूत्। अनेनापि याचना प्रोक्ता ॥

याचनानन्तरमिदानीं परिणामनामाह—

**एवं सर्वमिदं कृत्वा यन्मयासादितं शुभम्।**

10 **तेन स्यां सर्वसत्त्वानां सर्वदुःखप्रशान्तिकृत् ॥ ६ ॥**

एवमुक्तक्रमेण सर्वमिदं पूजापापदेशनापुण्यानुमोदनादि कृत्वा विधाय यन्मया आसादितं प्राप्तं शुभं सुकृतं तेन शुभेन स्यां भवेयं सर्वसत्त्वानां समस्तप्राणभृतां सर्वदुःख-प्रशान्तिकृदिति निःशेषव्यसनप्रशमनसमर्थो भवेयम् ॥

इति सामान्येन परिणमय्य पुनर्विशेषेणाह—

15 **ग्लानानामस्मि भैषज्यं भवेयं वैद्य एव च।**

**तदुपस्थायकश्चैव यावद्रोगापुनर्भवः ॥ ७ ॥**

तेनेति सर्वत्र यथायोगं संबन्धनीयम्। ग्लानानामिति व्याधिपीडितानाम्। भैषज्यमिति औषधम्। वैद्यश्चिकित्सकः। तदुपस्थायकः तस्य ग्लानस्य परिचारकः। रोगापुनर्भव इति यावद् व्याधिनिवृत्तिः स्यात् ॥

P 78 20 **क्षुत्पिपासाव्यथां हन्यामन्नपानप्रवर्षणैः।**

**दुर्भिक्षान्तरकल्पेषु भवेयं पानभोजनम् ॥ ८ ॥**

क्षुद् बुभुक्षा। पिपासा तृष्णा। तयोर्व्यथा, ताभ्यां वा व्यथा। तां हन्यां निवर्तयेयम्। अन्नपानप्रवर्षणैः प्रबन्धाहारपानसंपादनैः। दुर्भिक्षान्तरकल्पेष्विति—

कल्पस्य शस्त्ररोगाभ्यां दुर्भिक्षेण च निर्गमः। इति ॥

25 तत्र दशवर्षायुषि प्रजायामन्तरकल्पपर्यन्ते दुर्भिक्षेण संवर्तः प्रादुर्भवति वर्षान् सप्त, मासान् सप्त, दिवसानपि सप्तैव। यदुक्तम्—

कल्पस्य शस्त्ररोगाभ्यां दुर्भिक्षेण विनिर्गमः।

दिवसान् सप्त मासांश्च वर्षांश्चैव यथाक्रमम् ॥ इति।

तत्र अन्नपानाभावादन्योन्यमांसास्थिभक्षणमेव आहारः। तदपि केचिदलभमाना

30 आहारवैकल्याच्च म्रियन्ते। तत्र भवेयं पानभोजनम् ॥

**दरिद्राणां च सत्त्वानां निधिः स्यामहमक्षयः।**

**नानोपकरणाकारैरुपतिष्ठेयमग्रतः ॥ ९ ॥**

दरिद्राणामिति धनविकलानाम्। अक्षय इति आकृष्यमाणधनोऽपि यो न क्षीयते। P 79
नानोपकरणाकारैरिति शयनासनवसनभोजनाभरणविलेपनप्रभृति यद्यदभिलषन्ति सत्त्वाः, तैस्तैरुपकरणविशेषाकारैः अहमेव उपतिष्ठेयं प्रत्युपस्थितो भवेयम्। तेषां दरिद्राणां सत्त्वानामग्रतः पुरतः। इदं च परिणामनमार्यवज्रध्वजसूत्रे[1] विस्तरेण प्रतिपादितम्। तत्रेदमुक्तम्— 5

स तानि कुशलमूलानि परिणामयन् एवं परिणामयति—अनेनाहं कुशलमूलेन सर्वसत्त्वानां लयनं भवेयं सर्वदुःखस्कन्धविनिवर्तनतया। सर्वसत्त्वानां त्राणं भवेयं सर्वक्लेशपरिमोचनतया। सर्वसत्त्वानां शरणं भवेयं सर्वभयारक्षणतया। सर्वसत्त्वानां गतिर्भवेयं सर्वभूम्यनुगमनतया। सर्वसत्त्वानां परायणं भवेयमत्यन्तयोगक्षेमप्रतिलम्भनतया। सर्वसत्त्वानामालोको भवेयं वितिमिरज्ञानसंदर्शनतया। सर्वसत्त्वानामुल्का भवेयमविद्यातमोन्धकार- 10 विनिवर्तनतया। इत्यादि विस्तरः। इदमुक्त्वा पुनरिदमाह—तत्राध्याशयतः परिणमयति न वचनमात्रेण। तच्चोदग्रचित्तः परिणमयति। हृष्टचित्तः परिणमयति। प्रसन्नचित्तः परिणमयति। प्रमुदितचित्तः स्निग्धचित्तः परिणमयति। मैत्रचित्तः प्रेमचित्तोऽनुग्रहचित्तो हितचित्तः सुखचित्तः परिणमयति। इति विस्तरः॥

इदानीमात्मभावादिपरित्यागं कुर्वन्नाह— 15 P 80

> आत्मभावांस्तथा भोगान् सर्वत्र्यध्वगतं शुभम्।
> निरपेक्षस्त्यजाम्येष सर्वसत्त्वार्थसिद्धये॥ १०॥

आत्मभावानिति सर्वगतिच्युत्युपपत्तिषु सर्वकायान्। निरपेक्षः सर्वप्रकारेण निरासङ्ग इत्यर्थः। त्यजामि उत्सृजामि। ददामीत्यर्थः। भोगानिति उपभोग्यवस्तूनि हयगजरथप्रासादाद्याश्रयस्रक्चन्दनवस्त्राभरणकन्यादीनि। सर्वत्र्यध्वगतं शुभमिति सर्वत्रैधातुकसंगृहीतं 20 पुण्यानेञ्ज्यस्वभावम्। यदि वा दानशीलादिप्रसूतं भावनामयं च। त्र्यध्वगतम् अतीतानागतप्रत्युत्पन्नम्। स्यादेतत्—अनागतस्य असत्स्वभावस्य कोऽयमुत्सर्गो नाम? सत्यम्। किं तु तत्संभवकाले तत्रासङ्गनिवारणार्थमेवमुच्यते, इदानीमेव तत्परित्यागात्, आशयस्य विशुद्धिवर्धनार्थं च। एतदेवाह—निरपेक्ष इति। तद्विपाकस्य स्वार्थेऽनपेक्षः। किमर्थमेवमनुष्ठीयते इत्याह—सर्वसत्त्वार्थसिद्धये इति। सर्वसत्त्वानां त्रैधातुकवर्तिनामभ्युदयनिःश्रेयसलक्षणार्थ- 25 निष्पत्तये। अतीतानागतशुभोत्सर्गस्तु आर्याक्षयमतिसूत्रेऽभिहितः[2]। यदुक्तम्— P 81

कुशलानां च चित्तचैतसिकानामनुस्मृतिः, अनुस्मृत्य च बोधिपरिणामना, इदमतीतकौशल्यम्। या अनागतानां कुशलमूलानां निध्यप्तिर्बोधेरामुखीकर्मसमन्वाहारः, ये ये उत्पत्स्यन्ते कुशलाश्चित्तोत्पादाः,ताननुत्तरायां सम्यक्संबोधौ परिणामयिष्यामि। इदमनागतकौशल्यम्। इति विस्तरः। सर्वत्यागाधिमुक्तिं परिपूर्यै परित्यागचित्तवेगात् तेन कायप्रयोगेण 30 उत्सृष्टसर्वपरिग्रहः। सर्वपरिग्रहमूलाद्भवदुःखाद्विमुक्तो मुक्त इत्युच्यते। इति विस्तरः॥

---

१ Cf ŚS. p. 20. २ Cf ŚS. p. 22.

ननु च आत्मार्थमपि किंचिद्रक्षितुमुचितमिति मात्सर्यं निराकुर्वन्नाह—

**सर्वत्यागश्च निर्वाणं निर्वाणार्थि च मे मनः।**

**त्यक्तव्यं चेन्मया सर्वं वरं सत्त्वेषु दीयताम्॥ ११॥**

P 82 सर्वेषां सास्रवात्मभावादीनां निर्वाणं मोक्षः। तदर्थि च मे मनः, तदर्थि च मम 5 चित्तम्। त्यक्तव्यं चेदिति। निर्वाणसमये यदि सर्वमात्मभावादि अवश्यं परित्यज्य यातव्यं मया, तदा वरं सत्त्वेषु दीयताम्, किमनेन मात्सर्यहेतुना विधृतेनेति भावः॥

तस्मादिदमिहानुरूपमित्याह—

**यश्चासुखीकृतश्चात्मा मयायं सर्वदेहिनाम्।**

यथाकामंगमकारितायां नियुक्तो मयायमात्मा कायः। सर्वदेहिनां सर्वसत्त्वानां कृते। 10 एतदेव दर्शयन्नाह—

**घ्नन्तु निन्दन्तु वा नित्यमाकिरन्तु च पांसुभिः॥ १२॥**

**क्रीडन्तु मम कायेन हसन्तु विलसन्तु च।**

**दत्तस्तेभ्यो मया कायश्चिन्तया किं ममानया॥ १३॥**

**कारयन्तु च कर्माणि यानि तेषां सुखावहम्।**

15 दण्डादिभिस्ताडयन्तु वा, अवर्णवादैर्जुगुप्सन्तु, आकिरन्तु च पांसुभिः, धूलिभिरवकिरन्तु। दत्तस्तेभ्यो मया काय इति, सर्वः सर्वेण मया तेषां परित्यक्तः, किं मम समविषमचिन्तया? कारयन्तु कर्माणीति अनवद्यानि। एतदेवाह—

**अनर्थः कस्यचिन्मा भून्मामालम्ब्य कदाचन॥ १४।**

अनिष्टं कस्यचित्प्राणिनो मा भूत्, मामाश्रित्य कदाचन, इह परत्र वा॥

P 83 20 **येषां क्रुद्धाप्रसन्ना वा मामालम्ब्य मतिर्भवेत्।**

**तेषां स एव हेतुः स्यान्नित्यं सर्वार्थसिद्धये॥ १५॥**

येषां क्रुद्धा येषामप्रसन्ना वा मतिश्चित्तं भवेत्, तेषां क्रुद्धाप्रसन्नमतीनां स एव हेतुः स्यात्, क्रुद्धा अप्रसन्ना मतिरेव। पुंस्त्वं तु तच्छब्दस्य हेतुसमानाधिकरणतया। सर्वार्थसिद्धय इति आत्मपराभ्युदयनिःश्रेयसनिष्पत्तये॥

25 **अभ्याख्यास्यन्ति मां ये च ये चान्येऽप्यपकारिणः।**

**उत्प्रासकास्तथान्येऽपि सर्वे स्युर्बोधिभागिनः॥ १६॥**

अभ्याख्यास्यन्ति इति मिथ्यारोपितदोषेण दूषयिष्यन्ति। अन्येऽपि ये कायिकं मानसिकं वा अपकारं करिष्यन्ति। उत्प्रासका इति उपहासकाः विडम्बकारिणो वा। तथा अन्येऽपि उदासीनाः प्रसन्नाश्च। सर्वे भवेयुर्बुद्धत्वलाभिनः॥

30 **अनाथानामहं नाथः सार्थवाहश्च यायिनाम्।**

**पारेप्सूनां च नौभूतः सेतुः संक्रम एव च॥ १७॥**

अनाथानामिति सांनाथ्यान्वेषिणाम् । सार्थवाहश्च यायिनामिति सार्थमुख्यो मार्ग-प्रपन्नानाम् । पोरेप्सूनामिति नद्यादीनां पारिमकूलं गन्तुकामानाम् ॥ P 84

दीपार्थिनामहं दीपः शय्या शय्यार्थिनामहम् ।
दासार्थिनामहं दासो भवेयं सर्वदेहिनाम् ॥ १८ ॥

दीपार्थिनामिति अन्धकारावस्थितानाम् । शय्यार्थिनामिति शयनाभिलाषिणाम् । 5
दासार्थिनामिति उपस्थानार्थं ये भृत्यकर्मकरादीनिच्छन्ति ॥

चिन्तामणिर्भद्रघटः सिद्धविद्या महौषधिः ।
भवेयं कल्पवृक्षश्च कामधेनुश्च देहिनाम् ॥ १९ ॥

चिन्तामणिरिति चिन्तितफलदाता रत्नविशेषः । भद्रघट इति यद्यद्वस्तु अभिलषित-मभिसंधाय अस्मिन् हस्तं प्रक्षिपेत्, तत्सर्वं संपद्यते । सिद्धविद्येति सिद्धमन्त्रः, यद्यत्कर्म 10 तया क्रियते, तत्सर्वं सिध्यति । महौषधिरिति यदेकैव सर्वोपद्रवपीडाप्रशमनहेतुः । कल्पवृक्षश्चेति कल्पितार्थसंपादको वृक्षविशेषः । कामधेनुश्चेति या वाञ्छितदोहं दुह्यते ॥

पृथिव्यादीनि भूतानि निःशेषाकाशवासिनाम् ।
सत्त्वानामप्रमेयाणां यथाभोगान्यनेकधा ॥ २० ॥
एवमाकाशनिष्ठस्य सत्त्वधातोरनेकधा । 15
भवेयमुपजीव्योऽहं यावत्सर्वे न निर्वृताः ॥ २१ ॥ P 85

पृथिव्यादीनीति पृथिवी वसुंधरा । आदिशब्दादापस्तेजो वायुरिति चत्वारि महा-भूतानि । तानि यथा शयनाशनसस्यफलमूलाद्याधारतया, तथा यानावगाहनादिहेतुतया । एवमन्यत्रापि योज्यम् । अनन्ताकाशधातुव्यापिनामसंख्यानां सत्त्वानां परिभोगमुपयान्ति, एवमेव अहमपि सर्वसत्त्वानामनेकप्रकारेण उपभोग्यो भवेयम् । यावत्सर्वे न निर्वृता इति 20 यावत् सर्वे न संसारदुःखत्रिनिर्मुक्ताः ॥

तस्मादेषामात्मभावादीनामुत्सर्गः कार्यो बोध्यर्थिना । एतच्च दानमतिविस्तरेण शिक्षा-समुच्चये प्रदर्शितम् । तद्यथा तत्रैव बोधिसत्त्वप्रातिमोक्षे[1] कथितम्—

पुनरपरं शारिपुत्र बोधिसत्त्वः सर्वधर्मेषु परकीयसंज्ञामुत्पादयति, न कंचिद्भाव-मुपादत्ते । तत्कस्य हेतोः ? उपादानं हि भयमिति । 25

इदमुक्त्वा तत्रैव पुनरिदमुक्तम्—

तथा चित्तशूराः खलु पुनः शारिपुत्र बोधिसत्त्वा भवन्ति । यावत् स्वहस्तपरित्यागी भवति, पादपरित्यागी नासापरित्यागी शीर्षपरित्यागी अङ्गप्रत्यङ्गपरित्यागी, यावत् सर्वस्वपरित्यागीति ॥

एवं नारायणपरिपृच्छायामप्यभिहितम्[2]— 30

न तद्वस्तु उपादातव्यं यस्मिन् वस्तुनि नास्य त्यागचित्तमुत्पद्येत, न त्यागबुद्धिः क्रमेत, P 86

१ ŚS pp. 14–15. २ ŚS pp. 14–15.

इति यावत्, अपि तु खलु पुनः कुलपुत्र बोधिसत्त्वेन महासत्त्वेन एवं चित्तमुत्पादयितव्यम्—अयं ममात्मभावः सर्वसत्त्वेभ्य उत्सृष्टः परित्यक्तः, प्रागेव बाह्यानि वस्तूनि। इति विस्तरः॥

तथा आर्याक्षयमतिसूत्रेऽपि देशितम्—

अयं मया कायः सर्वसत्त्वानां किंकरणीयेषु क्षपितव्यः। तद्यथा इमानि चत्वारि 5 महाभूतानि पृथिवीधातुरब्धातुस्तेजोधातुर्वायुधातुश्च नानासुखैः नानापर्यायैः नानारम्बणैः नानोपकरणैः नानापरिभोगैः सत्त्वानामुपभोगं गच्छन्ति, एवमेव अहमिमं चतुर्महाभूतसमुच्छ्रयं कायं नानासुखैः नानापर्यायैः नानारम्बणैः नानोपकरणैः नानापरिभोगैर्विस्तरेण सर्वसत्त्वानामुपजीव्यं करिष्यामीति विस्तरः॥

तच्चित्तरत्नेत्यारभ्य [२.१] सर्वमिदं पूर्वकं बोधिचित्तसंवरग्रहणाय प्रयोगो वेदितव्यः। 10 तदेवं पूजादि विधाय आत्मभावादिदानमुत्सृज्य प्रतिपन्नबोधिचित्तानुशंसः क्षणसंपदं परमदुर्लभामवेत्य श्रद्धामूलं दृढमुपस्थाप्य सत्त्वानत्राणानपरायणान् करुणायमानः स्वसुखनिरपेक्षः परदुःखदुःखी तत्समुद्धरणाशयाभिप्रायो बुद्धत्वमेव तदुपायं समुत्पश्यन् तत्र बद्धसंनाहः—

P 87

यदात्मनः परेषां च भयं दुःखं च न प्रियम्।
15 तदात्मनः को विशेषो यत्तं रक्षामि नेतरम्॥ इति।

[ शिक्षा. स. कारिका—१ ]

तेन आत्मनः सत्त्वधातोश्च—

दुःखान्तं कर्तुकामेन सुखान्तं गन्तुमिच्छता।
श्रद्धामूलं दृढीकृत्य बोधौ कार्या मतिर्दृढा॥ इति॥

20 [ शिक्षा. स. कारिका—२ ]

सम्यक्संबोधिचित्तमुत्पादयितुमुपक्रमते—

**यथा गृहीतं सुगतैर्बोधिचित्तं पुरातनैः।**
**ते बोधिसत्त्वशिक्षायामानुपूर्व्या यथा स्थिताः॥ २२॥**

येनाशयेन सर्वसत्त्वानां सर्वदुःखप्रहाणार्थम्। यदि वा यथा गृहीतं तदेव भगवन्तो 25 जानन्ति। बोधिचित्तमिति बोधिर्बुद्धत्वं सर्वावरणप्रहाणात् सर्वधर्मनिःस्वभावताधिगमः। एतच्च सप्रचयं प्रज्ञापरिच्छेदे वक्ष्यामः। तत्र चित्तमध्याशयेन तत्प्राप्तये मनसिकारः—बुद्धो भवेयं सर्वसत्त्वहितसुखसंपादनायेत्यर्थः॥ इति पूर्वार्धेन बोधिचित्तोत्पादं प्रतिपाद्य शिक्षासंवरग्रहणं प्रतिपादयन्नाह—ते बोधिसत्त्वेत्यादि। बोधिसत्त्वशिक्षा यदुत्पादितबोधिचित्तेन बोधिसत्त्वेन सदा करणीयम्, तत्रेत्यर्थः। आनुपूर्वीति अनु......

P 88

---

१ ŚS p. 16. २ The commentary on the remaining portion of chapter III upto st. 45 of chapter IV is lost on missing folios.

तद्वदुत्पादयाम्येष बोधिचित्तं जगद्धिते ।
तद्वदेव च ताः शिक्षाः शिक्षिष्यामि यथाक्रमम् ॥ २३ ॥

एवं गृहीत्वा मतिमान् बोधिचित्तं प्रसादतः ।
पुनः पुष्टस्य पुष्ट्यर्थं चित्तमेवं प्रहर्षयेत् ॥ २४ ॥

अद्य मे सफलं जन्म सुलब्धो मानुषो भवः । 5
अद्य बुद्धकुले जातो बुद्धपुत्रोऽस्मि सांप्रतम् ॥ २५ ॥

तथाधुना मया कार्यं स्वकुलोचितकारिणाम् ।
निर्मलस्य कुलस्यास्य कलङ्को न भवेद्यथा ॥ २६ ॥

अन्धः संकारकूटेभ्यो यथा रत्नमवाप्नुयात् ।
तथा कथंचिदप्येतद् बोधिचित्तं ममोदितम् ॥ २७ ॥ 10

जगन्मृत्युविनाशाय जातमेतद्रसायनम् ।
जगद्दारिद्र्यशमनं निधानमिदमक्षयम् ॥ २८ ॥

जगद्व्याधिप्रशमनं भैषज्यमिदमुत्तमम् ।
भवाध्वभ्रमणश्रान्तजगद्विश्रामपादपः ॥ २९ ॥

दुर्गत्युत्तरणे सेतुः सामान्यः सर्वयायिनाम् । 15
जगत्क्लेशोपशमन उदितश्चित्तचन्द्रमाः ॥ ३० ॥

जगदज्ञानतिमिरप्रोत्सारणमहारविः ।
सद्धर्मक्षीरमथनान्नवनीतं समुत्थितम् ॥ ३१ ॥

सुखभोगबुभुक्षितस्य वा जनसार्थस्य भवाध्वचारिणः ।
सुखसत्रमिदं ह्युपस्थितं सकलाभ्यागतसत्त्वतर्पणम् ॥ ३२ ॥ 20

जगदद्य निमन्त्रितं मया सुगतत्वेन सुखेन चान्तरा ।
पुरतः खलु सर्वतायिनामभिनन्दन्तु सुरासुरादयः ॥ ३३ ॥

इति प्रज्ञाकरमतिविरचितायां बोधिचर्यावतारपञ्जिकायां
बोधिचित्तपरिग्रहो नाम तृतीयः परिच्छेदः ॥

## ४ बोधिचित्ताप्रमादो नाम चतुर्थः परिच्छेदः ।

एवं गृहीत्वा सुदृढं बोधिचित्तं जिनात्मजः ।
शिक्षानतिक्रमे यत्नं कुर्यान्नित्यमतन्द्रितः ॥ १ ॥
सहसा यत्समारब्धं सम्यग् यदविचारितम् ।
5 तत्र कुर्यान्न वेत्येवं प्रतिज्ञायापि युज्यते ॥ २ ॥
विचारितं तु यद्बुद्धैर्महाप्राज्ञैश्च तत्सुतैः ।
मयापि च यथाशक्ति तत्र किं परिलम्ब्यते ॥ ३ ॥
यदि चैवं प्रतिज्ञाय साधयेयं न कर्मणा ।
एतां सर्वां विसंवाद्य का गतिर्मे भविष्यति ॥ ४ ॥
10 मनसा चिन्तयित्वापि यो न दद्यात्पुनर्नरः ।
स प्रेतो भवतीत्युक्तमल्पमात्रेऽपि वस्तुनि ॥ ५ ॥
किमुतानुत्तरं सौख्यमुच्चैरुद्धुष्य भावतः ।
जगत्सर्वं विसंवाद्य का गतिर्मे भविष्यति ॥ ६ ॥
वेत्ति सर्वज्ञ एवैतामचिन्त्यां कर्मणो गतिम् ।
15 यद्बोधिचित्तत्यागेऽपि मोचयत्येव तां नरान् ॥ ७ ॥
बोधिसत्त्वस्य तेनैवं सर्वापत्तिर्गरीयसी ।
यस्मादापद्यमानोऽसौ सर्वसत्त्वार्थहानिकृत् ॥ ८ ॥
योऽप्यन्यः क्षणमप्यस्य पुण्यविघ्नं करिष्यति ।
तस्य दुर्गतिपर्यन्तो नास्ति सत्त्वार्थघातिनः ॥ ९ ॥
20 एकस्यापि हि सत्त्वस्य हितं हत्वा हतो भवेत् ।
अशेषाकाशपर्यन्तवासिनां किमु देहिनाम् ॥ १० ॥
एवमापत्तिवलतो बोधिचित्तबलेन च ।
दोलायमानः संसारे भूमिप्राप्तौ चिरायते ॥ ११ ॥
तस्माद्यथाप्रतिज्ञातं साधनीयं मयादरात् ।
25 नाद्य चेत्क्रियते यत्नस्तलेनास्मि तलं गतः ॥ १२ ॥
अप्रमेया गता बुद्धाः सर्वसत्त्वगवेषकाः ।
नैषामहं स्वदोषेण चिकित्सागोचरं गतः ॥ १३ ॥
अद्यापि चेत्तथैव स्यां यथैवाहं पुनः पुनः ।
दुर्गतिव्याधिमरणच्छेदभेदाद्यवाप्नुयाम् ॥ १४ ॥
30 कदा तथागतोत्पादं श्रद्धां मानुष्यमेव च ।
कुशलाभ्यासयोग्यत्वमेवं लप्स्येऽतिदुर्लभम् ॥ १५ ॥

आरोग्यं दिवसं चेदं सभक्तं निरुपद्रवम् ।
आयुःक्षणं विसंवादि कायोपाचितकोपमः ॥ १६ ॥

न हीदृशैर्मच्चरितैर्मानुष्यं लभ्यते पुनः ।
अलभ्यमाने मानुष्ये पापमेव कुतः शुभम् ॥ १७ ॥

यदा कुशलयोग्योऽपि कुशलं न करोम्यहम् । 5
अपायदुःखैः संमूढः किं करिष्याम्यहं तदा ॥ १८ ॥

अकुर्वतश्च कुशलं पापं चाप्युपचिन्वतः ।
हतः सुगतिशब्दोऽपि कल्पकोटिशतैरपि ॥ १९ ॥

अत एवाह भगवान्—मानुष्यमतिदुर्लभम् ।
महार्णवयुगच्छिद्रकूर्मग्रीवार्पणोपमम् ॥ २० ॥ 10

एकक्षणकृतात् पापादवीचौ कल्पमास्यते ।
अनादिकालोपचितात् पापात् का सुगतौ कथा ॥ २१ ॥

न च तन्मात्रमेवासौ वेदयित्वा विमुच्यते ।
तस्मात्तद्वेदयन्नेव पापमन्यत् प्रसूयते ॥ २२ ॥

नातः परा वञ्चनास्ति न च मोहोऽस्त्यतः परः । 15
यदीदृशं क्षणं प्राप्य नाभ्यस्तं कुशलं मया ॥ २३ ॥

यदि चैवं विमृष्यामि पुनः सीदामि मोहितः ।
शोचिष्यामि चिरं भूयो यमदूतैः प्रचोदितः ॥ २४ ॥

चिरं धक्ष्यति मे कायं नारकाग्निः सुदुःसहः ।
पश्चात्तापानलश्चित्तं चिरं धक्ष्यत्यशिक्षितम् ॥ २५ ॥ 20

कथंचिदपि संप्राप्तो हितभूमिं सुदुर्लभाम् ।
जानन्नपि च नीयेऽहं तानेव नरकान् पुनः ॥ २६ ॥

अत्र मे चेतना नास्ति मन्त्रैरिव विमोहितः ।
न जाने केन मुह्यामि कोऽत्रान्तर्मम तिष्ठति ॥ २७ ॥

हस्तपादादिरहितास्तृष्णाद्वेषादिशत्रवः । 25
न शूरा न च ते प्राज्ञाः कथं दासीकृतोऽस्मि तैः ॥ २८ ॥

मच्चित्तावस्थिता एव घ्नन्ति मामेव सुस्थिताः ।
तत्राप्यहं न कुप्यामि धिगस्थानसहिष्णुताम् ॥ २९ ॥

सर्वे देवा मनुष्याश्च यदि स्युर्मम शत्रवः ।
तेऽपि नावीचिकं वह्निं समुदानयितुं क्षमाः ॥ ३० ॥ 30

मेरोरपि यदासङ्गान्न भस्माप्युपलभ्यते ।
क्षणात् क्षिपन्ति मां तत्र बलिनः क्लेशशत्रवः ॥ ३१ ॥
न हि सर्वान्यशत्रूणां दीर्घमायुरपीदृशम् ।
अनाद्यन्तं महादीर्घं यन्मम क्लेशवैरिणाम् ॥ ३२ ॥
5 सर्वे हिताय कल्पन्ते आनुकूल्येन सेविताः ।
सेव्यमानास्त्वमी क्लेशाः सुतरां दुःखकारकाः ॥ ३३ ॥
इति संततदीर्घवैरिषु व्यसनौघप्रसवैकहेतुषु ।
हृदये निवसत्सु निर्भयं मम संसाररतिः कथं भवेत् ॥ ३४ ॥
भवचारकपालका इमे नरकादिष्वपि वध्यघातकाः ।
10 मतिवेश्मनि लोभपञ्जरे यदि तिष्ठन्ति कुतः सुखं मम ॥ ३५ ॥
तस्मान्न तावदहमत्र धुरं क्षिपामि
यावन्न शत्रव इमे निहताः समक्षम् ।
स्वल्पेऽपि तावदपकारिणि बद्धरोषा
मानोन्नतास्तमनिहत्य न यान्ति निद्राम् ॥ ३६ ॥
15 प्रकृतिमरणदुःखितान्धकारान् । रणशिरसि प्रसभं निहन्तुमुग्राः ।
अगणितशरशक्तिघातदुःखा न विमुखतामुपयान्त्यसाधयित्वा ॥ ३७ ॥
किमुत सततसर्वदुःखहेतून् प्रकृतिरिपूनुपहन्तुमुद्यतस्य ।
भवति मम विषाददैन्यमद्य व्यसनशतैरपि केन हेतुना वै ॥ ३८ ॥
अकारणेनैव रिपुक्षतानि गात्रेष्वलंकारवदुद्वहन्ति ।
20 महार्थसिद्धयै तु समुद्यतस्य दुःखानि कस्मान्मम बाधकानि ॥ ३९ ॥
स्वजीविकामात्रनिबद्धचित्ताः कैवर्तचण्डालकृषीवलाद्याः ।
शीतातपादिव्यसनं सहन्ते जगद्धितार्थं न कथं सहेऽहम् ॥ ४० ॥
दशदिग्व्योमपर्यन्तजगत्क्लेशविमोक्षणे ।
प्रतिज्ञाय मदात्मापि न क्लेशेभ्यो विमोचितः ॥ ४१ ॥
25 आत्मप्रमाणमज्ञात्वा ब्रुवन्नुन्मत्तकस्तदा ।
अनिवर्ती भविष्यामि तस्मात्क्लेशवधे सदा ॥ ४२ ॥
अत्र ग्रही भविष्यामि बद्धवैरश्च विग्रही ।
अन्यत्र तद्विधात्क्लेशात् क्लेशघातानुबन्धिनः ॥ ४३ ॥
गलन्त्वन्त्राणि मे कामं शिरः पततु नाम मे ।
30 न त्वेवावनतिं यामि सर्वथा क्लेशवैरिणाम् ॥ ४४ ॥
निर्वासितस्यापि तु नाम शत्रोर्देशान्तरे स्थानपरिग्रहः स्यात् ।
यतः पुनः संभृतशक्तिरेति न क्लेशशत्रोर्गतिरीदृशी तु ॥ ४५ ॥

✽ ✽ नाय, न तु क्लेशशत्रोः । न तस्य इतरशत्रुवत्समाचारो दृश्यते । कुतः पुनरेव- P 89
मिच्छया लभ्यत इत्याह—

क्वासौ यायान्मन्मनःस्थो निरस्तः
स्थित्वा यस्मिन् मद्वधार्थं यतेत ।
नोद्योगो मे केवलं मन्दबुद्धेः 5
क्लेशाः प्रज्ञादृष्टिसाध्या वराकाः ॥ ४६ ॥

मम चित्तान्निर्वासितः असौ क्लेशरिपुः कुत्र गत्वा अवस्थानं कुर्यात्, यत्रावस्थितिं कृत्वा मम वधाय यतेत ? नैव तत्स्थानमुत्पश्यामि, निर्मूलितस्य पुनरुत्थानायोगादिति भावः । अहमेव तु केवलमनुत्साही, अपटुबुद्धिप्रचारत्वात् । क्लेशाः पुनरिमे निर्मूलत्वात् परमार्थतत्त्वदर्शनमात्रप्रहेयास्तपस्विनः ॥ 10

एतदेव प्रसाधयन्नाह—

न क्लेशा विषयेषु नेन्द्रियगणे नाप्यन्तराले स्थिता
नातोऽन्यत्र कुह स्थिताः पुनरमी[1] मथ्नन्ति कृत्स्नं जगत् ।

मनोज्ञादिविषयदर्शनेऽपि केषांचित्संवृतेन्द्रियाणां क्लेशानुत्पत्तेः परमाणुशो विचारेऽपि P 90
तत्रादर्शनात् । न विषयेषु, नापि चक्षुरादीन्द्रियगणे पूर्ववत्, धर्मचिन्ताद्यवस्थायामिन्द्रिय- 15
सद्भावेऽप्यनुपलब्धेः । नापि विषयेन्द्रिययोरन्तराले मध्ये तिष्ठन्ति, दृश्यानामनुपलब्धेरेव । न च एतेभ्योऽन्यस्मिन् स्थाने क्वचिदवस्थिता निश्चिताः । अतो निर्मूलतया तत्त्वशून्या आगन्तुका एव, अभूतपरिकल्पमात्रप्रसूतत्वात् । तथाभूता अपि जगदशेषं मथ्नन्ति । तथा च किमत्र समुचितमस्ति ? आह—

मायैवेयमतो विमुञ्च हृदयं त्रासं भजस्वोद्यमं 20
प्रज्ञार्थं किमकाण्ड एव नरकेष्वात्मानमाबाधसे ॥ ४७ ॥

यथा हि माया हस्त्याकारतया तदाकारशून्यापि मन्त्रौषधप्रभावादिदंप्रत्ययतया मन्त्रेण तत्त्वरहितापि प्रतिभासते, तथा अमी अपि क्लेशा विपर्यासनिमित्ता अयोनिशोमनसिकारसमुद्भूता इदंप्रतीत्यतामात्रतो निस्तत्त्वा एव प्रकाशन्ते । अतो विजहीहि हृदय त्रासं क्लेशेभ्यः । के नाम अमी वराकाः परमार्थतो विचार्यमाणाः ? अतो भजस्व उद्यमम्, 25
उत्साहं कुरुष्व प्रज्ञार्थं तत्त्वप्रविचयाधिगमाय । किमकाण्ड एव निष्प्रयोजनमेव नरकेषु P 91
संघातादिषु क्लेशवशगतया आत्मानमाबाधसे, पीडयसि ?

इदानीं प्राक्तनमर्थमशेषमुपसंहरन्नाह—

एवं विनिश्चित्य करोमि यत्नं
यथोक्तशिक्षाप्रतिपत्तिहेतोः । 30
वैद्योपदेशाच्चलतः कुतोऽस्ति
भैषज्यसाध्यस्य निरामयत्वम् ॥ ४८ ॥

---

१ P. पुनरिमे for पुनरमी.

एवं समनन्तरसकलपरिच्छेदप्रतिपादितमर्थं विनिश्चित्य दृढीकृत्य अनन्तरमायास्वभावतां वा, करोमि यत्नम्। किमर्थम्? यथोक्तशिक्षाप्रतिपत्तिहेतोः, यथोक्तशिक्षा बोधिसत्त्वस्य तेषु तेषु सूत्रान्तेषु याः करणीयतया प्रतिपादिताः, इहैव वा शास्त्रे संक्षेपेण तत्र तत्रोपदर्शिताः, तासां शिक्षणार्थम्॥

5 उक्तानि च भगवता सूत्रान्तेषु बोधिसत्त्वशिक्षापदानि। यथोक्तमार्यरत्नमेघे[1]—

कथं च कुलपुत्र बोधिसत्त्वो बोधिसत्त्वशिक्षासंवरसंवृतो भवति? इह बोधिसत्त्व एवं विचारयति— न प्रातिमोक्षसंवरमात्रकेण मया शक्यमनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्। किं तर्हि यानीमानि तथागतेन तेषु तेषु सूत्रान्तेषु बोधिसत्त्वसमुदाचारा बोधिसत्त्वशिक्षापदानि प्रज्ञप्तानि, तेषु मया शिक्षितव्यम्। इति विस्तरः॥ P 92

10 तस्मादस्मद्विधेन मन्दबुद्धिना

दुर्विज्ञेयो विस्तरोक्तत्वाद् बोधिसत्त्वस्य संवरः।

ततः किं युक्तम्?

मर्मस्थानान्यतो विद्याद्येनानापत्तिको भवेत्।

[ शिक्षा. स. कारिका—३ ]

15 कतमानि च तानि मर्मस्थानानि? यदुत—

आत्मभावस्य भोगानां त्र्यध्ववृत्तेः शुभस्य च।

उत्सर्गः सर्वसत्त्वेभ्यस्तद्रक्षाशुद्धिवर्धनम्॥

[ शिक्षा. स. कारिका—४ ]

इत्युक्तम्। एष बोधिसत्त्वसंग्रहो यत्र बोधिसत्त्वानामभ्यासविश्रामेऽपि आपत्तयो 20 व्यवस्थाप्यन्ते। यथोक्तं बोधिसत्त्वप्रातिमोक्षसूत्रे[2]—

यो बोधिसत्त्वेन मार्गः परिगृहीतः सर्वसत्त्वानां कृते दुःखक्षयगामी, सचेद्बोधिसत्त्वस्य तं मार्गं परिगृह्यावस्थितस्य अपि कल्पकोटेरत्ययेन एकं सुखचित्तमुत्पद्येत, अन्तशो निषद्याचित्तमपि, तत्र बोधिसत्त्वेन एवं चित्तमुत्पादयितव्यम्—सर्वसत्त्वानामात्ययिकं परिगृह्य एतदपि मे बहु यन्निषीदामीति॥ P 93

25 अत एवाह—वैद्योपदेशादिति। यथा वैद्योपदेशमकुर्वाणस्य भैषज्यसाध्यं करणीयं यस्य भैषज्येन वा साध्यस्य रोगिणः कुतोऽस्ति निरामयत्वं नीरोगता? तथा सर्वज्ञमहावैद्योपदिष्टशिक्षाप्रतिपत्तिमकुर्वतः कुतो निरामयत्वं कर्मक्लेशोपजनितजात्यादिदुःदुखमहाभयाद्विमुक्तिः?

तदेवं[3] समात्तसंवरस्य सामान्यमापत्तिलक्षणमुच्यते येन आपत्तिलक्षणेन युक्तं वस्तु 30 स्वयमप्युत्प्रेक्ष्य परिहरेत्। न च आपत्तिप्रतिरूपकेषु अनापत्तिप्रतिरूपकेषु च संमुह्येत्। बोधिसत्त्वः सर्वसत्त्वानां वर्तमानानागतसर्वदुःखदौर्मनस्योपशमाय वर्तमानानागतसर्वसुखसौमनस्योत्पादाय च निःशाठ्यतः कायवाङ्मनःपराक्रमैः प्रयत्नं न करोति, तत्प्रत्ययसामग्रीं

१ ŚS p. 13. २ ŚS p. 14. ३ Cf. ŚS p. 12.

नान्वेषते, तदन्तरायप्रतीकाराय न घटते, अल्पदुःखदौर्मनस्यं बहुदुःखदौर्मनस्यप्रतीकारभूतं नोत्पादयति, महार्थसिद्ध्यर्थं वा अल्पहानिं न करोति, क्षणमप्युपेक्षते, सापत्तिको भवति । संक्षेपतोऽनापत्तिः स्वशक्त्यविषयेषु कार्येषु, तत्र निष्फलतया शिक्षाप्रज्ञप्त्यभावात् । P 94 प्रकृतिसावद्यतया वा अन्यद् गृह्यत एव । यत्र तु स्वशक्त्यगोचरेऽपि योगसामर्थ्यादापत्तिः स्यात्, तन्न चिन्त्यम्, सामान्यपापदेशनान्तर्भावात्ततो मुक्तिः । एतत् समासतो बोधिसत्त्व- 5 शिक्षाशरीरम् । विस्तरतस्तु अप्रमेयकल्पपर्यवसाननिर्देश्यम् ॥

अथवा संक्षेपतो द्वे बोधिसत्त्वस्यापत्ती । यथाशक्त्या युक्तायुक्तमसमीक्ष्यारभते, न निवर्तते उपेक्षते वा, सापत्तिको भवति । निरूप्य यथार्हमतिक्रामति अन्तशश्चण्डालदासेनापि चोदितः, सापत्तिको भवति । यः पुनरेतदभ्यासार्थं व्युत्पादमिच्छति, तेन शिक्षासमुच्चये तावच्चर्यामुखमात्रशिक्षणार्थमभियोगः करणीयः, शिक्षणारम्भस्यैव महाफलत्वात् । 10 यथोपवर्णितं प्रशान्तविनिश्चयप्रातिहार्यसूत्रे—

इति बोधिसत्त्वशिक्षा समासतो यथोपदेशतः कथितेति ॥

इति प्रज्ञाकरमतिविरचितायां बोधिचर्यावतारपञ्जिकायां
बोधिचित्ताप्रमादश्चतुर्थः परिच्छेदः ॥

## ५ संप्रजन्यरक्षणं नाम पञ्चमः परिच्छेदः ।

P 95 एवमात्मभावादीनामुत्सर्गं रक्षां च प्रतिपाद्य पुनर्विस्तरेण रक्षाशोधनवर्धनानि प्रतिपादयितुमुपक्रमते । उत्पादितबोधिचित्तेन हि बोधिसत्त्वेन उत्सृष्टस्यापि चात्मभावस्य रक्षाशोधनवर्धनानि कार्याणि । यस्मात्—

5 परिभोगाय सत्त्वानामात्मभावादि दीयते ।
अरक्षिते कुतो भोगः किं दत्तं यन्न भुज्यते ॥
तस्मात्सत्त्वोपभोगार्थमात्मभावादि पालयेत् ।
कल्याणमित्रानुत्सर्गात्सूत्राणां च सदेक्षणात् ॥

[ शिक्षा स. कारिका—५–६ ]

10 तच्च आत्मभावादिपरिपालनादि शिक्षारक्षणादेव स्यात् । अन्यथा नरकादिविनिपातगमनात् तन्न स्यात् । अत इदमभिधीयते—

**शिक्षां रक्षितुकामेन चित्तं रक्ष्यं प्रयत्नतः ।**
**न शिक्षा रक्षितुं शक्या चलं चित्तमरक्षता ॥ १ ॥**

शिक्ष्यते उपादीयते गृहीतसंवरणेनेति विहितेषु करणीयता, प्रतिषिद्धेष्वकरणं

P 96 15 शिक्षा, तां रक्षितुं परिपालयितुं कामेन इच्छता बोधिसत्त्वेन आत्मचित्तं रक्षितव्यं प्रयत्नत इति कथयिष्यमाणात् । अथ शिक्षारक्षणाधिकारे किमिति चित्तं रक्ष्यत इत्याह—न शिक्षेति । अन्यथा शिक्षैव रक्षितुमशक्या चलमनायत्तं चित्तमरक्षता । चित्तस्य चलतायां शिक्षायाः स्थैर्यायोगात् ॥

इतोऽपि चित्तमेव रक्षणीयमित्याह—

**अदान्ता मत्तमातङ्गा न कुर्वन्तीह तां व्यथाम् ।**
20 **करोति यामवीच्यादौ मुक्तश्चित्तमतङ्गजः ॥ २ ॥**

अपरिकर्मिता मत्तवरवारणा न जनयन्ति तां पीडामिहलोके । परलोके अवीच्यादौ यां करोति स्वच्छन्दतयावस्थितं चित्तमेव मतङ्गज एव । तथागताज्ञाङ्कुशेन कथंचिद् वशीक्रियमाणत्वात् ॥

तस्यायत्तीकरणे गुणमाह—

25 **बद्धश्चेच्चित्तमातङ्गः स्मृतिरज्ज्वा समन्ततः ।**
**भयमस्तंगतं सर्वं कृत्स्नं कल्याणमागतम् ॥ ३ ॥**

यदि बद्धः कथंचिद् भवेत् । स्मृतिर्वक्ष्यमाणलक्षणा । सैव रज्जुर्बन्धनोपायत्वात् । समन्ततः सर्वथा असत्पक्षे प्रचारनिरोधात् । तदा भयमस्तंगतं प्रत्यस्तमितं सर्वमशेषम् ।

P 97 सर्वं कल्याणमभ्युदयनिःश्रेयसलक्षणम् । आगतं संप्राप्तम् । देवश्चेद् वृष्टो निष्पन्नाः 30 शालय इति यथा ॥

ननु बहवश्च मृगव्यालादयोऽप्युपद्रवकारिणः सन्ति, तेभ्यः कथं चित्तस्य वशीकरणाद् भयं न भविष्यतीत्याह—

व्याघ्राः सिंहा गजा ऋक्षाः सर्पाः सर्वे च शत्रवः ।
सर्वे नरकपालाश्च डाकिन्यो राक्षसास्तथा ॥ ४ ॥
सर्वे बद्धा भवन्त्येते चित्तस्यैकस्य बन्धनात् । 5
चित्तस्यैकस्य दमनात् सर्वे दान्ता भवन्ति च ॥ ५ ॥

सुबोधम् ॥

कुतः पुनरेवमित्याह–

यस्माद्भयानि सर्वाणि दुःखान्यप्रमितानि च ।
चित्तादेव भवन्तीति कथितं तत्त्ववादिना ॥ ६ ॥ 10

सर्वे ह्येते कर्माक्षेपवशादनिष्टदायका भवन्ति । कर्म च चित्तमेव । चेतना कर्मेति वचनात् । वाक्कायकर्मणोरपि चित्तमेव समुत्थापकम् । तदन्तरेण तयोरनुत्पत्तेः । चेतयित्वा कर्मेति वचनात् । तस्मात् सर्वमिह कर्मनिर्मितमेव । तच्च चित्तान्नान्यत् । तदाह–

कर्मजं लोकवैचित्र्यं चेतना तत्कृतं च तत् । P 98
चेतना मानसं कर्म तज्जे वाक्कायकर्मणी ॥ इति । 15
[ अभि॰ कोष–४.१ ]

न च अनपकारचित्तस्य केचिदपकारिणो नाम । यस्मात्–

निवृत्तपापचित्तस्य नास्ति लोके भयं द्विषः ।
सुखहानिर्न तस्यास्ति यस्य चित्तं वशे स्थितम् ॥

अत इदमुक्तम्– 20

चित्तस्य दमनं साधु चित्तं दान्तं सुखावहम् । इति ।
[=धम्मपद–२५ ]

तत्त्ववादी भगवान् वस्तुतत्त्वकथनशीलत्वात् । तेनेदं तत्त्वं कथितं प्रकाशितम्–सर्वं चित्तप्रसूतमिति । अतः सर्वत्र चित्तमेव प्रधानम् ॥

इत्थमेवैतन्नान्यथा इति प्रसाधयन्नाह– 25

शस्त्राणि केन नरके घटितानि प्रयत्नतः ।
तप्तायःकुट्टिमं केन कुतो जाताश्च ताः स्त्रियः ॥ ७ ॥

नरकपालानां कुन्तासिमुसलादीनि, असिपत्रवनसमुद्भूतानि वा केन कृतानि? न तत्र कश्चित् कर्तास्ति ईश्वरादिः, तत्कर्तृत्वस्य अन्यत्र निषिद्धत्वात्, इहापि निषेत्स्यमान-

---

१ Cf. MV. XVII 2. चेतना चेतयित्वा च कर्मोक्तं परमर्षिणा. २ Cf. BCA. IX. 119–126.

त्वात्। तप्तलोहमयी च भूमिः केन घटिता? ताश्च स्त्रियः कुतः कारणसामग्रीतो जाताः,
P 99 याः पारदारिकैः शाल्मलीवृक्षस्य अधस्तादुपरि च दृश्यन्ते? स च शाल्मलिर्वा? अतो
नान्यत् कारणमत्र चित्तादुपकल्पनीयम्। यदुक्तम्—

सत्त्वलोकमथ भाजनलोकं चित्तमेव रचयत्यतिचित्रम्।
5 कर्मजं हि जगदुक्तमशेषं कर्म चित्तमवधूय च नास्ति ॥ इति ॥

[ मध्यमकावतार—६·८९ ]

तस्माच्चित्तमेवात्र कारणं नान्यदित्यत आह—

**पापचित्तसमुद्भूतं तत्तत्सर्वं जगौ मुनिः।**
**तस्मान्न कश्चित् त्रैलोक्ये चित्तादन्यो भयानकः ॥ ८ ॥**

10 पापकर्मोपस्कृतं चित्तमेव तेषां कारणं भगवान् कथितवात्। नापरं किंचित्। यत एवम्, तस्मान्न त्रिजगति पापचित्तादपरः कश्चिद् भयहेतुरस्ति। तस्माच्चित्तमेव वशीकर्तव्यम्। यदुक्तमार्यरत्नमेघे[1]—

चित्तपूर्वंगमाः सर्वधर्माः। चित्ते परिज्ञाते सर्वधर्माः परिज्ञाता भवन्ति ॥

अपि च—

15 चित्तेन[2] नीयते लोकश्चित्तं चित्तं न पश्यति।
चित्तेन चीयते कर्म शुभं वा यदि वाशुभम् ॥

चित्तं भ्रमते अलातवत्। चित्तं विभ्रमते तरंगवत्। चित्तं दहते दवाग्निवत्। चित्तं रोहयते ( हरते ) महाम्बुवत्। इति च ॥

P 100 एवं व्युपपरीक्षमाणश्चित्ते सूपस्थितस्मृतिर्विहरति, न च चित्तस्य वशं गच्छति।
20 अपि तु चित्तमेवास्य वशं गच्छति। चित्तेनास्य वशीभूतेन सर्वे धर्मा वशीभवन्तीति ॥

स्यादेतत्—दानपारमितादिषु कथमिव चित्तं प्रधानम्? सा हि सर्वसत्त्वानां दारिद्र्यापनयनलक्षणेत्याह—

**अदरिद्रं जगत्कृत्वा दानपारमिता यदि।**
**जगद्दरिद्रमद्यापि सा कथं पूर्वतायिनाम् ॥ ९ ॥**

25 दारिद्र्यं हि नाम सास्रवसुखभोगबुभुक्षया चित्तकार्पण्यम् उपकरणवैकल्यं वा। तदपनीय जगतो यदि दानपारमितापरिपूरिर्भवतीत्युच्यते, तदा सा कथम्? न कथंचिदपि पूर्वतायिनां पूर्वमभिसंबुद्धानां भगवतां युज्यते। कुतः? जगद्दरिद्रमद्यापि, नाद्यापि यावज्जगद्दारिद्र्यमुपशाम्यति ॥

---

१ Cf. ŚS p. 68; Cf. Dhammapada, 1. २ Cf.–लङ्का०–चित्तेन चीयते कर्म मनसा च विधीयते–३.३८.

यद्येवं नेष्यते, कथं सा भवतीत्याह—

फलेन सह सर्वस्वत्यागचित्ताज्जनेऽखिले ।
दानपारमिता प्रोक्ता तस्मात्सा चित्तमेव तु ॥ १० ॥

सर्वस्वं बाह्याध्यात्मिकं सर्वं वस्तु दानं दानफलं च सर्वसत्त्वेभ्यः परित्यजतो- P 101
ऽभ्यासेन प्रकर्षगमनाद् यदा अपगतमात्सर्यमलं निरासङ्गतया चित्तमुत्पद्यते, तदा दानपार- 5
मिता निष्पन्नेत्युच्यते । तस्मात् सा चित्तमेव, नान्या दानपारमिता ॥

शीलपारमिता तु सुतरां चित्तमेवेत्यत आह—

मत्स्यादयः क्व नीयन्तां मारयेयं यतो न तान् ।
लब्धे विरतिचित्ते तु शीलपारमिता मता ॥ ११ ॥

प्राणातिपातादिसर्वावद्यविरतिचित्तमेव हि शीलम्, न पुनस्तदाश्रयभूतबाह्यविषय- 10
निवृत्तिस्वभावम् । यदि पुनर्वधादिविषयवस्त्वभावेन तद्वधाद्यभावाच्छीलं स्यात्, तदा ते
मत्स्यादयः क्व नीयन्तां यत्र तेषां दर्शनं न स्यात् ? अन्यथा तद्वधाद्युपक्रमे शीलं न स्यात् ।
न चैवम् । तस्मात्तेषु विद्यमानेष्वपि लब्धे विरतिचित्ते निवृत्तिमनसिकारे शीलपारमिता
मता संमता तत्स्वभावविदाम् । तस्मात् सा चित्तमेव ॥

क्षान्तिपारमितापि न चित्ताद्भिन्नेत्याह— 15

कियतो मारयिष्यामि दुर्जनान् गगनोपमान् ।
मारिते क्रोधचित्ते तु मारिताः सर्वशत्रवः ॥ १२ ॥

परापकारादिसंभवेऽपि चित्तस्याकोपनता क्षान्तिः । अन्यथा यदि सर्वशत्रूणां P 102
तद्विनिपातनेन वैरनिर्यातनं कृतवतः केनचिद्वैराभावादुपशान्तवैरस्य न कश्चिदपकारी
स्यात् । इति मर्षणं क्षान्तिः । तदा एतदशक्यानुष्ठानम् । शत्रवो हि गगनसमत्वादपर्यन्ताः । 20
तेषां मारणमशक्यम् । तस्मात् क्रोधादिनिवृत्तिचित्तमेव तेषामुपायेन मारणमिव, तत्कृता-
पकारस्यागणनात्, जन्मान्तरवैरासंभवाच्च मारितप्रायास्ते ॥

अत्र अशक्यतायामप्युपायेन प्रवृत्तौ दृष्टान्तोपदर्शनेन शक्यतामाह—

भूमिं छादयितुं सर्वां कुतश्चर्म भविष्यति ।
उपानच्चर्ममात्रेण छन्ना भवति मेदिनी ॥ १३ ॥ 25

कण्टकाद्युपघातरक्षणार्थं पृथ्वी छादयितुमुचिता । न चैतच्छक्यम्, तावतश्चर्मणो-
ऽभावात्, भावेऽपि छादनस्याशक्यत्वात् । उपायेन पुनः शक्यम् । उपानहश्चर्मणा केवलेन
सर्वा भूमिश्छादिता भवति ॥

दृष्टान्तोक्तमर्थं प्रकृते योजयन्नाह—

बाह्या भावा मया तद्वच्छक्या वारयितुं न हि । 30
स्वचित्तं वारयिष्यामि किं ममान्यैर्निवारितैः ॥ १४ ॥

शत्रुप्रभृतयो भावा मया वारयितुमशक्याः। तद्वत् मेदिनीचर्मच्छादनवत् अपकारक्रियायाः। अतः स्वचित्तमेव शक्यं वारयिष्यामि। अन्यवारणस्यापार्थकत्वात्, स्वचित्तवारणादेव तत्सिद्धेः। तस्मात् सा चित्तमेव ॥

वीर्यपारमिता तु कुशलोत्साहस्वभावा अतिविस्पष्टं चित्तमेवेत्याह—

सहापि वाक्शरीराभ्यां मन्दवृत्तेर्न तत्फलम्।
यत्पटोरेककस्यापि चित्तस्य ब्रह्मतादिकम् ॥ १५ ॥

वचनकायसहितस्यापि चित्तस्य कुशलपक्षे मन्दप्रचारस्य न तादृशं फलमुपजायते, यादृशं ध्यानादिविषये पटुप्रवृत्तेरेकाकिनोऽपि चित्तस्य फलं ब्रह्मभूयादिकम्। तस्मात सा चित्तमेव ॥

ध्यानं तु चित्तैकाग्रतालक्षणं चित्तादन्यथा वक्तुमशक्यमित्याह—

जपास्तपांसि[१] सर्वाणि दीर्घकालकृतान्यपि।
अन्यचित्तेन मन्देन वृथैवेत्याह सर्ववित् ॥ १६ ॥

मन्त्राद्यावर्तनलक्षणा वचनव्यापारा जपाः। तपांसि च इन्द्रियदमनलक्षणाः कायिकाः। तानि अतिबहुकालमभ्यस्तान्यपि अन्यत्र सक्तचित्तेन मिद्धाद्युपहतचित्तेन वा। समानपाटवविकलेनेत्यर्थः। वृथैव निष्फलमेव, अत्यर्थक्लेशफलत्वात्, अभिमतार्थेऽनुपयोगाद्वा। पुत्रोऽप्यपुत्र एव, पुत्रकार्याकरणाद्यथा। इत्याह भगवान् सर्वज्ञः। तस्माद् ध्यानपारमितापि चित्तमेव ॥

प्रज्ञा तु निर्विवादा चित्तमेवेत्याह—

दुःखं हन्तुं सुखं प्राप्तुं ते भ्रमन्ति मुधाम्बरे।
यैरेतद्धर्मसर्वस्वं चित्तं गुह्यं न भावितम् ॥ १७ ॥

पञ्चगतिसंसारजात्यादिदुःखं प्रहातुं तत्प्रहाणे निर्वाणसुखमधिगन्तुं ते सत्त्वा मुधा निरर्थका एव भ्रमन्ति अम्बरे कासीपुष्पमिव निष्फलं संसारे। यदनुष्ठितं क्वचिदपि न लग्नमिति तदेवमभिधीयते पञ्चाग्निसेवाशिरोलुञ्चनादिव्रतम्। के पुनरेवं भ्रमन्ति? यैः संसारभयभीरुभिः सुखार्थिभिश्च धर्मसर्वस्वं सर्वलौकिकलोकोत्तरकर्मनिदानभूतं चित्तं बालानामगोचरस्वभावतया गुह्यं न भावितं तत्त्वचित्ततया पुनः पुनः स्थिरीकृतम्। तस्मादियमतितरां चित्तमेव। यथोपवर्णितमार्यगण्डव्यूहे[२]—

स्वचित्ताधिष्ठानं सर्वबोधिसत्त्वचर्या। स्वचित्ताधिष्ठानं सर्वसत्त्वपरिपाकविनयः। पेयालं। तस्य मम कुलपुत्र एवं भवति—स्वचित्तमेवोपस्तम्भयितव्यं सर्वकुशलमूलैः। स्वचित्तमेव परिस्यन्दयितव्यं धर्ममेघैः। स्वचित्तमेव परिशोधयितव्यमावरणीयधर्मेभ्यः। स्वचित्तमेव दृढीकर्तव्यं वीर्येण। इत्यादि ॥

---

१ This stanza seems to be a quotation from विद्याधरपिटक. २ ŚS p. 69.

इति चित्तस्वभावतां सर्वत्र प्रतिपाद्य उपसंहरन्नाह—

P 105

**तस्मात्स्वधिष्ठितं चित्तं मया कार्यं सुरक्षितम् ।**

**चित्तरक्षाव्रतं मुक्त्वा बहुभिः किं मम व्रतैः ॥ १८ ॥**

एवमुत्पादितबोधिचित्तेन शिक्षारक्षणे यत्नवता मनसि कर्तव्यम्—स्वधिष्ठितं स्मृत्या सुरक्षितं संप्रजन्येन वक्ष्यमाणरीत्या मया स्वचित्तं कर्तव्यं तदेकाग्रमानसेन । अत्रैव सर्वेषा- 5 मन्तर्भावात् । अतश्चित्तरक्षणमेव प्रधानं व्रतम् । तद्विहाय किमन्यैर्व्रतैर्बहुभिरपि मम प्रयोजनम् ? न किंचित् । तद्रहितस्य निष्फलत्वात् । एतावती चेयं बोधिसत्त्वशिक्षा यदुत चित्तपरिकर्म । एतन्मूलत्वात् सर्वसत्त्वार्थानाम् । तद्यथा धर्मसंगीतिसूत्रे[१] कीर्तितम्—

मतिविक्रमबोधिसत्त्व आह—योऽयं धर्मो धर्म इत्युच्यते, नायं धर्मो देशस्थो न प्रदेशस्थोऽन्यत्र स्वचित्ताधीनो धर्मः । तस्मान्मया स्वचित्तं स्वाराधितं स्वधिष्ठितं सुपरिजितं 10 सुसमारब्धं सुनिगृहीतं कर्तव्यम् । तत्कस्य हेतोः ? यत्र चित्तं तत्र गुणदोषाः । तद्बोधिसत्त्वो दोषेभ्यश्चित्तं निवार्य गुणेषु प्रवर्तयति । तदुच्यते—चित्ताधीनो धर्मः, धर्माधीना बोधिरिति ॥

एवं चित्तायत्ततां सर्वत्र निश्चित्य चित्तदृढतायामुदाहरणमाह—

P 106

**यथा चपलमध्यस्थो रक्षति व्रणमादरात् ।** 15

**एवं दुर्जनमध्यस्थो रक्षेच्चित्तव्रणं सदा ॥ १९ ॥**

असमाहितजनमध्ये पुनरुपघातभयात्तद्गतमनसा यथा व्रणं रक्षति कश्चिदप्रमत्तः, एवं तथा शिक्षारक्षणकामः अकारणवैरिबालजनमध्ये संवसन् तत्परश्चित्तं व्रणमिव रक्षेत् सर्वकालम् ॥

यथाप्रसिद्धित इदमुदाहरणम् । न तु पुनर्मनागपि सादृश्यमस्तीत्याह— 20

**व्रणदुःखलवाद्भीतो रक्षामि व्रणमादरात् ।**

**संघातपर्वताघाताद्भीतश्चित्तव्रणं न किम् ॥ २० ॥**

ईषन्मात्रं दुःखं दुःखलवो व्रणकृतः । तस्माद्भीतो रक्षामि व्रणम् । प्रकृतानुरोधे रक्षतीति पाठो युक्तः । आदरात् तात्पर्येण । संघातनरकप्रभवादनेकवर्षसहस्रानुभूयमानदुःखात् पर्वताघातात्सर्वतो व्याप्तिप्रहारात् भीतः चित्तव्रणं न किं रक्षेदिति प्रकृतेन संबन्धः । 25 यदि वा । अहं तु किं न रक्षामीति परिणामेन योजनीयम् । अथवा । एवमुत्पादितबोधिचित्तेन मनसा चिन्तयितव्यमित्यवतार्यते । तदा रक्षामीति ॥

कः पुनरेवं सति गुणः स्यादित्याह—

**अनेन हि विहारेण विहरन् दुर्जनेष्वपि ।**

**प्रमदाजनमध्येऽपि यतिर्धीरो न खण्ड्यते ॥ २१ ॥** 30

P 107

१ ŚS p. 69.

यस्मादेवंमनसिकारेण विचरन् वनिताजनमध्येऽपि प्रासादपृष्ठे अयमनिवार्योऽतिशयेन कामरागेषु। तेनेदमुक्तं यतिर्धीर इति। अस्मिन् मनसिकारे निष्पन्नचित्तः। न खण्ड्यते शिक्षारक्षणमनसिकारान्न स्खलति॥

पुनरेवं करणीयमित्यत्रार्थे दृढमभिनिवेशं दर्शयन्नाह—

5 **लाभा नश्यन्तु मे कामं सत्कारः कायजीवितम्।**
**नश्यत्वन्यच्च कुशलं मा तु चित्तं कदाचन॥ २२॥**

चीवरपिण्डपातादयो नश्यन्तु, विलयं यान्तु मम कामं यथेष्टम्। सत्कारो गौरवेण आसनदानपादवन्दनादिपूजा। कायो जीवितं च सर्वमेतन्नश्यतु। अन्यदपि यत्किंचित् सुखसौमनस्यनिमित्तं तदपि नश्यतु। कुशलं पुनर्मम चित्तं मा कस्मिंश्चिदपि काले 10 नङ्क्षीदिति॥

अत्र पुनरादरमुत्पादयितुं शास्त्रकार आह—

**चित्तं रक्षितुकामानां मयैष क्रियतेऽञ्जलिः।**
**स्मृतिं च संप्रजन्यं च सर्वयत्नेन रक्षत॥ २३॥**

अञ्जलिं कृत्वा प्रार्थयामि। किमर्थम्? स्मृतिं च संप्रजन्यं च। न केवलं P 108 15 स्मृतिम्, नापि केवलं संप्रजन्यमिति परस्परापेक्षया चकारद्वयम्। तत्र स्मृतिरार्यरत्नचूड-सूत्रेऽभिहिता[1]—

यया स्मृत्या सर्वक्लेशानां प्रादुर्भावो न भवति। यया स्मृत्या सर्वमारकर्मणामवतारं न ददाति। यया स्मृत्या उत्पथे कुमार्गे वा न पतति। यया स्मृत्या दौवारिकभूतया सर्वेषामकुशलानां चित्तचैतसिकानां धर्माणामवकाशं न ददाति, इयमुच्यते सम्यक्स्मृतिरिति॥

20 संक्षेपतः पुनरियं स्मृतिरुच्यते—विहितप्रतिषिद्धयोर्यथायोगं स्मरणं स्मृतिः। यच्चाह[2]—स्मृतिरालम्बनासंप्रमोष इति॥

संप्रजन्यं तु प्रज्ञापारमितायामुक्तम्[3]—

चरंश्चरामीति प्रजानाति। स्थितः स्थितोऽस्मीति प्रजानाति। निषण्णो निषण्णोऽस्मीति प्रजानाति। शयानः शयितोऽस्मीति प्रजानाति। यथा यथास्य कायः स्थितो 25 भवति तथा तथैनं प्रजानाति। पेयालं। सोऽतिक्रामन् वा प्रतिक्रामन् वा संप्रजानचारी P 109 भवति। आलोकिते विलोकिते संमिञ्जिते प्रसारिते संघाटीपटपात्रचीवरधारणे अशिते पीते खादिते निद्राक्लमप्रतिविनोदने आगते गते स्थिते निषण्णे सुप्ते जागरिते भाषिते तूष्णीभावे प्रतिसंलयने संप्रजानचारी भवतीति॥

इदमेव वक्ष्यति—

30 एतदेव समासेन संप्रजन्यस्य लक्षणम्।
यत्कायचित्तावस्थायाः प्रत्यवेक्षा मुहुर्मुहुः॥ इति॥

[बोधि. ५.१०८]

---

१ ŚS p. 62. २ ŚS p. 68. ३ ŚS p. 68.

कः पुनरनयोर्व्यतिरेके दोषः, येनैते यत्नेन रक्षणीये कथिते इत्याह—

**व्याध्याकुलो नरो यद्वन्न क्षमः सर्वकर्मसु ।**
**तथाभ्यां विकलं[1] चित्तं न क्षमं सर्वकर्मसु ॥ २४ ॥**

रोगोपहतसामर्थ्यो यथा पुरुषः सर्वकर्मसु गमनभोजनादिषु अकर्मण्यो भवति, तथा स्मृतिसंप्रजन्याभ्यां विकलं चित्तं सर्वकर्मसु ध्यानाध्ययनादिलक्षणेषु ॥ 5

अनयोः समुदायाभावे दोषमुक्त्वा प्रत्येकमभावे कथयितुमाह—

**असंप्रजन्यचित्तस्य श्रुतचिन्तितभावितम् ।**
**सच्छिद्रकुम्भजलवन्न स्मृतावबतिष्ठते ॥ २५ ॥**

न विद्यते संप्रजन्यं यस्मिंस्तदसंप्रजन्यम् । तच्चित्तं यस्य तस्य । श्रुतचिन्ताभावनामयप्रज्ञापरिनिष्ठितं वस्तु न स्मरणमधिवसति । तन्मूलं च सर्वं कल्याणम् । किमिव ? 10 यथा सच्छिद्रकुम्भे मुखनिक्षिप्तमुदकमधस्ताद्गच्छति नावतिष्ठते ॥ P 110

इदमपरं तद्व्यतिरेके दूषणमाह—

**अनेके श्रुतवन्तोऽपि श्राद्धा यत्नपरा अपि ।**
**असंप्रजन्यदोषेण भवन्त्यापत्तिकश्मलाः ॥ २६ ॥**

बहवोऽपि बहुश्रुताः तथा श्रद्धावन्तो यत्नपराः शिक्षायामादरकारिणः असंप्रजन्य- 15 दोषेण आपत्तिकलुषिता भवन्ति कायचित्तप्रचाराप्रत्यवेक्षणात् ॥

अपरमपि तदभावे दूषणमाह—

**असंप्रजन्यचौरेण स्मृतिमोषानुसारिणा ।**
**उपचित्यापि पुण्यानि मुषिता यान्ति दुर्गतिम् ॥ २७ ॥**

असंप्रजन्यमेव संप्रजन्याभावः क्लेशस्वभावश्चौरः कुशलधनापहरणात् । तेन स्मृति- 20 मोषानुसारिणा रक्षपालभूतायाः स्मृतेः प्रमोषमभावमनुसृत्य मुषिता विलुप्तकुशलधनाः सन्तः उपचित्यापि पुण्यानि, कुशलधनानां संचयं कृत्वापि, दुर्गतिपरायणा भवन्ति ॥ P 111

कुतः पुनरेवमिति उक्तमेवार्थं स्पष्टयन्नाह—

**क्लेशतस्करसंघोऽयमवतारगवेषकः ।**
**प्राप्यावतारं मुष्णाति हन्ति सद्गतिजीवितम् ॥ २८ ॥** 25

तस्कराश्चौराः तेषां संघातः अवतारगवेषकः पिशाचवदवतारमार्गप्रेक्षी । छिद्रान्वेषणतत्पर इत्यर्थः । प्राप्यावतारं प्रवेशमार्गमासाद्य मुष्णाति । ततो हन्ति शोभनगतये जीवितप्रतिलम्भं कुशलपाथेयाभावात् ॥

स्मृतिमधिकृत्याधुना प्राह—

**तस्मात्स्मृतिर्मनोद्वारान्नापनेया कदाचन ।** 30
**गतापि प्रत्युपस्थाप्या संस्मृत्यापायिकीं व्यथाम् ॥ २९ ॥**

---

१ P व्याकुलं.

यतः स्मृतेरभावे दूषणमेवं स्यात्, तस्मादिदमत्र दोषं पश्यता स्मृतिरालम्बना-संप्रमोषलक्षणा मनोद्वारात् मनोगृहप्रवेशमार्गात् नापनेया नापसार्या। सदा अवस्थापयितव्येत्यर्थः। अथ कदाचित् प्रमादतस्ततोऽपगच्छेत्, तदा गतापि पुनर्निर्वर्त्योपस्थाप्या तत्रैवारोपयितव्या। कथम्? संस्मृत्य मनसि निधाय आपायिकीं नरकादिदुर्गतिव्यथाम्॥

5 तत्र द्वादशेमाः स्मृतयो निष्फलस्पन्दवर्जनार्थं तथागताज्ञानतिक्रमानुपालनविपाक-गौरवस्मृतिप्रभृतयः शिक्षासमुच्चये प्रदर्शिताः, तत एव विवेकेनावधार्याः॥

P 112 सापि स्मृतिस्तीव्रादरात्समुत्पद्यते। आदरोऽपि शमथमाहात्म्यमवगम्य आतापेन जायते। एतच्च यथावसरं वक्ष्यामः॥

केषांचित् पुनरन्यथापि स्मृतिरुत्पद्यते। तदुपदर्शयन्नाह—

10 उपाध्यायानुशासन्या भीत्याप्यादरकारिणाम्।
धन्यानां गुरुसंवासात्सुकरं जायते स्मृतिः॥ ३०॥

आचार्योपाध्यायसंनिधौ तदन्यतमाराध्यब्रह्मचारिसंनिधौ वा संवसतां तदनुशासन्या, भीत्या तद्भयेनापि आदरः कार्येषु सर्वभावेनाभिमुख्यम्, अवज्ञाप्रतिपक्षो धर्मः। तत्कारिणां यत्नवतां सुकृतिनां तदनुशासनीं हिताहितविधिप्रतिषेधनियममनुगृह्णतामकृच्छ्रेणैव 15 स्मृतिरुत्पद्यते॥

इत्थमपि विहरन् स्मृतिमनसिकारबहुलविहारी भवतीति कारिकाद्वयेन दर्शयन्नाह—

बुद्धाश्च बोधिसत्त्वाश्च सर्वत्राव्याहतेक्षणाः।
सर्वमेवाग्रतस्तेषां तेषामस्मि पुरः स्थितः॥ ३१॥
इति ध्यात्वा तथा तिष्ठेत् त्रपादरभयान्वितः।
20 बुद्धानुस्मृतिरप्येवं भवेत्तस्य मुहुर्मुहुः॥ ३२॥

P 113 सर्वदा बुद्धबोधिसत्त्वानां समस्तवस्तुविषयाप्रतिहतज्ञानचक्षुषां सर्वमेव वस्तुजातं पुरतोऽवस्थितमेव। अहमपि तेषां पुरोऽवस्थित एव, सर्ववस्तुवत्। इति मनसि निधाय तथैव संयतात्मा तिष्ठेत्। त्रपादरभयान्वितः। अप्रतिरूपे कर्मणि त्रपा लज्जा। शिक्षायामादरः, तदतिक्रमे भयम्। बुद्धबोधिसत्त्वेष्वेव वा त्रपादयः। एवं सति अपरोऽपि विशेषः 25 स्यादित्याह—बुद्धेत्यादि। तदेवं विहरतस्तस्य प्रतिक्षणमकामत एव बुद्धानुस्मृतिः स्यात्॥

संप्रजन्यस्य उत्पत्तिस्थैर्ययोः स्मृतिरेव कारणमिति कथयन्नाह—

संप्रजन्यं तदायाति न च यात्यागतं पुनः।
स्मृतिर्यदा मनोद्वारे रक्षार्थमवतिष्ठते॥ ३३॥

यदा स्मृतिर्मनोगृहद्वारि क्लेशतस्करसंघातानुप्रवेशनिवारिणी दौवारिकवदवस्थिता 30 भवति, तदा संप्रजन्यमयत्नत एवोत्पद्यते, उत्पन्नं च सत् स्थिरीभवति॥

एवं तावदनयोरन्वयव्यतिरेकाभ्यां गुणदोषावभिधाय अनर्थविवर्जनार्थं निष्फलस्पन्द-वर्जनमाह—

पूर्वं तावदिदं चित्तं सदोपस्थाप्यमीदृशम् ।
निरिन्द्रियेणेव मया स्थातव्यं काष्ठवत्सदा ॥ ३४ ॥

प्रथमं तावत् इदं चित्तमित्यध्यात्मनि चिन्तयति–सर्वकालमीदृशमुक्तक्रमयुक्तमुपस्थापयितव्यम् । ततः परं निष्फलस्पन्दवर्जनार्थमपगतकरणग्रामेणेव निष्फलरूपादिविषयग्रहणसर्वविकल्पोपसंहारात् मया स्थातव्यम् । किमिव ? काष्ठवत्, चक्षुरादिव्यापारशून्यत्वात् ॥ P 114 5

इदमेव व्यनक्ति—

निष्फला नेत्रविक्षेपा न कर्तव्याः कदाचन ।
निध्यायन्तीव सततं कार्या दृष्टिरधोगता ॥ ३५ ॥

ईषन्मुकुलितपक्ष्मयुगला नासाग्रविनिवेशिता युगमात्रव्यवलोकिनी वा कार्या दृष्टिः ॥

प्रथमारम्भिणः संतताभ्यासेन क्लेशस्य परिहारार्थमाह— 10

दृष्टिविश्रामहेतोस्तु दिशः पश्येत्कदाचन ।
आभासमात्रं दृष्ट्वा च स्वागतार्थं विलोकयेत् ॥ ३६ ॥

दृष्टिचित्तपरिखेदपरित्यागाय कदाचित् कर्हिचित् दिशो व्यवलोकयेत् । अथ कदाचित् कश्चित् तत्समीपमागच्छेत्, तदा तस्य प्रतिच्छायामात्रं विदित्वा स्वागतवादेन संतोषणार्थं विलोकयेत् । अन्यथा तत्र तस्य अवध्यानेन अकुशलं प्रसवेत् ॥ 15 P 115

मार्गेऽपि तथादृष्टेर्गच्छत उपघातपरिहारार्थमाह—

मार्गादौ भयबोधार्थं मुहुः पश्येच्चतुर्दिशम् ।
दिशो विश्रम्य वीक्षेत परावृत्यैव पृष्ठतः ॥ ३७ ॥

भयहेतुचौरादिप्रतिपत्त्यर्थं चतुर्दिशमिति क्रमेण । अन्यथा आत्मभावस्य रक्षा कृता न स्यात् । सर्वदिग्व्यवलोकनं तु क्रियमाणमौद्धत्योपघातपरिहारार्थं स्थित्वा कर्तव्यम् । 20 पृष्ठतो व्यवलोकनं परावृत्य पश्चान्मुखीभूय ॥

असमाधानस्य च रक्षणायाह—

सरेदपसरेद्वापि पुरः पश्चान्निरूप्य च ।
एवं सर्वास्ववस्थासु कार्यं बुद्ध्वा समाचरेत् ॥ ३८ ॥

सरेत्पुरः । अपसरेत्पश्चात् । प्रपाताद्युपघातं निरीक्ष्य च । एवमित्युक्तक्रमदिशा 25 स्वपरहितप्रयोजनमवगम्य प्रतिपत्तिसारो भवेत् ॥

इदानीं संप्रजन्यकारितां शिक्षयितुमाह—

कायेनैवमवस्थेयमित्याक्षिप्य क्रियां पुनः ।
कथं कायः स्थित इति द्रष्टव्यं पुनरन्तरा ॥ ३९ ॥

चतुर्णामीर्यापथानामन्यतमस्मिन्नीर्यापथे । कायेनैवमिति स्थितेन निषण्णेन वा 30 P 116 अवस्थेयमिति । तदनन्तरं स्वाध्यायादिक्रियामारभ्य पुनरन्तराले व्यवलोकितव्यं कथं कायः स्थित इति तस्मिन्नेवेर्यापथे, उत भिन्ने ईर्यापथे । भिन्ने पुनः पूर्ववदवस्थाप्यः ॥

कायप्रत्यवेक्षामभिधाय चित्तप्रत्यवेक्षणामाह—

**निरूप्यः सर्वयत्नेन चित्तमत्तद्विपस्तथा।**
**धर्मचिन्तामहास्तम्भे यथा बद्धो न मुच्यते ॥ ४० ॥**

धर्मस्य स्वपरहितलक्षणस्य चिन्तैव महास्तम्भो बन्धनायत्तीकरणहेतुत्वात् ॥

5 तस्मिन् बद्धोऽपि पुनः पुनर्निरूपणीय इत्याह—

**कुत्र मे वर्तत इति प्रत्यवेक्ष्यं तथा मनः।**
**समाधानधुरं नैव क्षणमप्युत्सृजेद्यथा ॥ ४१ ॥**

क्व पुनरिदं मनो मम वर्तते, पूर्वस्मिन्नालम्बने अन्यत्र वा गतम्। गतमवगम्य ततो निवर्त्य तत्रैव योजयितव्यम्। स्वरसवाहितायामुपेक्षणीयम्। इति शमथधुरमेकमपि 10 क्षणं यथा न परित्यजति तथा धारयितव्यम्। एतावता शीलं हि समाधिसंवर्तनीममित्युक्तं भवति। यथोक्तं चन्द्रप्रदीपसूत्रे—

P 117

क्षिप्रं समाधिं लभते निरङ्गणं
विशुद्धशीलस्यिमि आनुशंसाः ॥ इति।

[ समाधि. २७.६ ]

15 अतोऽवगम्यते—ये केचित् समाधिहेतवः प्रयोगाः, ते शीलेऽनुगता इति। तस्मात् समाध्यर्थिना स्मृतिसंप्रजन्यशीलेन भवितव्यम्। तथा शीलार्थिनापि समाधौ यत्नः कार्य इति ॥

समाधानपरित्यागावकाशमाह—

**भयोत्सवादिसंबन्धे यद्यशक्तो यथासुखम्।**
20 **दानकाले तु शीलस्य यस्मादुक्तमुपेक्षणम् ॥ ४२ ॥**

अग्निदाहादि भयम्। तथा रत्नत्रयपूजादिकृत उत्सवः। समधिकतरः सत्त्वार्थादिर्वा। तत्संभवे यदि स्थातुमशक्तः, तदा कामचार इत्यनुज्ञातम्। सापत्तिको न भवतीत्यर्थः। कुतः पुनरयमनियमो लभ्यत इत्याह—दानेत्यादि। शीलं यद्यपि दानात्प्रकृष्टम्, तथापि अवरशिक्षायां शिक्षमाणस्य तदनन्तरमेव उत्तरशिक्षावस्थितस्य अभ्यासपाटवा- 25 भावात् कथंचित् तावत्कालं ततो निवर्तमानस्यापि नापत्तिः। दानस्यासौ कालो न शीलस्य। अत एवोक्तम्—यद्यशक्त इति। एतावन्मात्रेणेदमुदाहरणम्। यथोक्तम्[१]—तत्रैकस्यां शिक्षायां निष्पाद्यमानायामशक्तस्य इतरशिक्षानभ्यासादनापत्तिः। आर्याक्षयमतिसूत्रे- ऽप्येवमवोचत्[२]—

P 118

दानकाले शीलोपसंहारस्योपेक्षा। इति। न चातः शिथिलेन भवितव्यम् ॥

30 यत्र कुशलपक्षसंचारेऽपि क्वचित् समाधानविघातः स्यात्, तन्नोपादेयमित्याह—

**यद् बुद्ध्वा कर्तुमारब्धं ततोऽन्यन्न विचिन्तयेत्।**
**तदेव तावन्निष्पाद्यं तद्गतेनान्तरात्मना ॥ ४३ ॥**

---

१ ŚS p. 10. २ ŚS p. 10.

स्वयमेव तु युक्त्यागमाभ्यां कल्याणमित्रवचनाद्वा यथाबलमवधार्य यत्किंचित्कर्म कर्तुमारब्धं ध्यानाध्ययनादिकम्, प्रथमतस्तदेव तावन्निष्पत्तिं नेयं तन्निम्नेन चेतसा, न पुनस्तदनिष्पन्नमेव परित्यज्य परमारम्भणीयम् ॥

किं पुनरेवं स्याद्यदि न स्यादित्याह—

एवं हि सुकृतं सर्वमन्यथा नोभयं भवेत् ।  5
असंप्रजन्यक्लेशोऽपि वृद्धिं चैवं गमिष्यति ॥ ४४ ॥

यस्मादेवमनुतिष्ठतः सर्वं सुश्लिष्टं कृतं स्यात् । तद्विपर्यये पुनर्दुःश्लिष्टमुभयं पूर्वं चात्तं पश्चात् स्वीकृतं च स्यात् । चलप्रवृत्तेरसंप्रजन्यं स्यात् । प्रवेशे वृद्धिः स्यात् ॥  P 119

इत्थमपि निष्फलं वर्जयेदित्याह—

नानाविधप्रलापेषु वर्तमानेष्वनेकधा ।  10
कौतूहलेषु सर्वेषु हन्यादौत्सुक्यमागतम् ॥ ४५ ॥

अनेकप्रकारेऽसंबद्धाभिधानेऽपरोपाधिके प्रवर्तमाने आश्चर्यवस्तुषु च समस्तेषु स्वयमपि तत्क्रियायां दर्शनश्रवणाय वाक्चित्तस्य तारतम्यं निवारयेत् ॥

अपरमपि निष्फलवर्जनाय प्रातिमोक्षोद्दिष्टमाचरेत् इत्याह—

मृन्मर्दनतृणच्छेदरेखाद्यफलमागतम् ।  15
स्मृत्वा ताथागतीं शिक्षां भीतस्तत्क्षणमुत्सृजेत्[१] ॥ ४६ ॥

भूमिफलकादिषु नखदण्डादिना रेखाकर्षणलेखनादि निष्प्रयोजनमागतमापतितं विवर्जयेत् भगवता अत्र निवृत्तिराज्ञप्तेति संस्मृत्य, तदतिक्रमविपाकफलभयात् । तत्क्षणमिति न तत्र कालपरिलम्भं कुर्यात् ॥  P 120

संक्लेशसमुदाचारे संप्रजन्यकारितां यदेत्यादिभिः सप्तभिः श्लोकैः शिक्षयितुमाह—  20

यदा चलितुकामः स्याद्वक्तुकामोऽपि वा भवेत् ।
स्वचित्तं प्रत्यवेक्ष्यादौ कुर्याद्धैर्येण युक्तिमत् ॥ ४७ ॥

प्रथमत एव स्वचित्तं निरूप्य । उक्तम् (?) असंक्लिष्टावस्थायां करणीयमुक्तम् ॥

एतदेव दर्शयति—

अनुनीतं प्रतिहतं यदा पश्येत्स्वकं मनः ।  25
न कर्तव्यं न वक्तव्यं स्थातव्यं काष्ठवत्तदा ॥ ४८ ॥

रक्तं द्विष्टं वा स्वचित्तं यदा पश्येत्, तदा हस्तपादादिचलनमात्रमपि न कर्तव्यम्, नापि वचनोदीरणम् । अन्यथा तदुत्थापिते कायवाग्विज्ञप्ती अपि संक्लिष्टे स्याताम् । अतो बहिरिन्द्रियव्यापारविकल्पावुपसंहृत्य स्थातव्यं काष्ठवत्तदा । सर्वव्यापारविरहान्निर्व्यापाराः सर्वधर्मा इति मनसि निधाय ॥  30

---

१ Minayef reads : तत्क्षणाद्भीत उत्सृजेत्.

अपरमाह—

उद्धतं सोपहासं वा यदा मानमदान्वितम्।
सोत्प्रासातिशयं वक्रं वञ्चकं च मनो भवेत्॥ ४९॥

P 121 उद्धतमिति। सद्धर्मादिश्रवणप्रमादादपि उद्धतम्। विक्षेपबहुलमित्यर्थः। सोपहासं 5 वाग्विहेठनारम्भकम्, तया युक्तं वा। मानश्चित्तस्योन्नतिः। मदः स्वधर्मे (?) चित्तस्याभिनिवेशः। ताभ्यामन्वितं तत्संप्रयुक्तम्। उत्प्रासः कायिकी विहेठना, तेन सहोत्कटम्। वक्रं कुटिलं शठं वा। वञ्चकं प्रतारकं मायावि वा। यदि मनो भवेत्, स्थातव्यं काष्ठवत्तदेति [ ५.५० ] संबन्धः॥

यदात्मोत्कर्षणाभासं परपंसनमेव वा।
10 साधिक्षेपं ससंरम्भं स्थातव्यं काष्ठवत्तदा॥ ५०॥

आत्मोत्कर्षणं स्वगुणातिशयप्रकाशनम्। तदाभासं तत्प्रतिभासं तद्विकल्पनात्। परपंसनं परविग्रहः दोषाविष्करणं वा, तद्युक्तम्। अधिक्षेपः परस्य वचनतिरस्कारः। संरम्भः सदाकलिविवादनिमित्तचित्तप्रदोषः। उभयत्र सह तेन वर्तत इति विग्रहः। एवं यदा पश्येत्स्वकं मनः, स्थातव्यं काष्ठवत् तदेति सामान्योक्तमभिसंबध्यते॥

15 लाभसत्कारकीर्त्यर्थि परिवारार्थि वा पुनः।
उपस्थानार्थि मे चित्तं तस्मात्तिष्ठामि काष्ठवत्॥ ५१॥

P 122 कीर्तिर्यशः। परिवारः दासीदासकर्मकरादिः। उपस्थानं पादधावनमर्दनादि। एभिरर्थि तदभिलाषं मम चित्तम्। तस्मात्तिष्ठामि काष्ठवत्॥

परार्थरूक्षं स्वार्थार्थि परिषत्काममेव वा।
20 वक्तुमिच्छति मे चित्तं तस्मात्तिष्ठामि काष्ठवत्॥ ५२॥

परार्थरूक्षं परार्थविमुखम्। स्वार्थार्थि स्वार्थाभिनिविष्टम्। परिषत् शिष्यान्तेवासिप्रभृतिजनसमाजः। तदभिलाषि तत्परिवारार्थि॥

असहिष्ण्वलसं भीतं प्रगल्भं मुखरं तथा।
स्वपक्षाभिनिविष्टं च तस्मात्तिष्ठामि काष्ठवत्॥ ५३॥

25 असहिष्णु असहनशीलम्। अलसं क्रियासु अकर्मण्यम्। कुसीदमित्यर्थः। भीतं कायजीवितभीरु भयहेतुभ्यो वा। प्रगल्भं धृष्टम्। मुखरं दुर्वचस्कम्, युक्तायुक्तमनपेक्ष्य अभिधायकं वा। स्वपक्षे शिष्यान्तेवासिज्ञातिसालोहितादौ अभिनिविष्टं पक्षपातातिशयवत्॥

सांप्रतं प्रतीकारनिर्देशमाह—

एवं संक्लिष्टमालोक्य निष्फलारम्भि वा मनः।
30 निगृह्णीयाद् दृढं शूरः प्रतिपक्षेण तत्सदा॥ ५४॥

P 123 उपदर्शितक्रमेण संक्लिष्टं संक्लेशसंप्रयुक्तं निष्फलव्यापारं वा ज्ञात्वा स्वचित्तं सर्वप्रवृत्तिनिरोधेन प्रभावमन्दतां विधाय निगृह्णीयादभिभवेत्। दृढं यथा पुनरपि समुदाचारधर्मकं

न भवति । क्लेशादिसंग्रामे विजयाय कृतपरिकरः शूरो बोधिसत्त्वः । प्रतिपक्षेण यो यस्मिन् प्रतिपक्ष उक्तः यथा रागादावशुभादि, तेन तद्विपरीतविधानेनेत्यर्थः । सदा सर्वकालम्, यदा यदा संक्लिष्टं प्रतीयते । उग्रपरिपृच्छायां[१] गृहिणं बोधिसत्त्वमधिकृत्योक्तम्—

तेन सुरामैरेयमद्यप्रमादस्थानात् प्रतिविरतेन भवितव्यम्, अमत्तेन अनुन्मत्तेन अचपलेन अचञ्चलेन अभ्रान्तेन अमुखरेण अनुन्नतेन उपस्थितस्मृतिनासंप्रजन्येन । इति ॥ 5

अत्रैव च प्रव्रजितं बोधिसत्त्वमधिकृत्योक्तम्—स्मृति संप्रजन्यस्याविक्षेपः । इति ॥

तथा आर्यतथागतगुह्यसूत्रे[२] दर्शितम्—

न खलु पुनः कुलपुत्र बोधिसत्त्वस्य वाग् रक्ता वा दुष्टा वा मूढा वा क्लिष्टा वा क्षणव्याकरणी वा स्वपक्षोत्कर्षणवचना वा परपक्षनिग्रहवचना वा आत्मवर्णानुनयवचना वा परवर्णप्रतिघातवचना वा प्रतिज्ञोत्तारणवचना वा आभिमानिकव्याकरणवचना वेति ॥ 10  P 125

एवं निष्फलस्पन्दवर्जनेन अनर्थादात्मभावस्य रक्षा प्रतिपादिता भवति । तस्मान्मया शीलसुस्थितेन अप्रकम्पेन अशिथिलेन भवितव्यमिति ॥

एतच्च समाहितचित्तस्य सिध्यति । अत इदं शमथमाहात्म्यमवगम्य तात्पर्येण भावयितव्यम् । अनेन तीव्र आदरो भवति शिक्षासु । तेनापि स्मृतिरुपतिष्ठते । उपस्थितस्मृतिर्निष्फलं वर्जयति । तस्य अनर्था न संभवन्ति । तस्मादात्मभावं रक्षितुकामेन 15 स्मृतिमूलमन्विष्य नित्यमुपस्थितस्मृतिना भवितव्यम् । एतदेवाह—

तत्रात्मभावे का रक्षा यदनर्थविवर्जनम् ।
केन तल्लभ्यते सर्वं निष्फलस्पन्दवर्जनात् ॥
एतत्सिध्येत्सदा स्मृत्या स्मृतिस्तीव्रादराद्भवेत् ।
आदरः शममाहात्म्यं ज्ञात्वातापेन जायते ॥ इति ।  20

[ शिक्षा. स. कारिका–७–८ ]

शमथमाहात्म्यं तु यथावसरमिहैव कथयिष्यते ॥

अयमत्र पिण्डार्थः अनर्थविवर्जनार्थमवधारयितव्य इति वृत्तत्रितयेनोपदर्शयन्नाह—

**सुनिश्चितं सुप्रसन्नं धीरं सादरगौरवम् ।**
**सलज्जं सभयं शान्तं पराराधनतत्परम् ॥ ५५ ॥**  25
**परस्परविरुद्धाभिर्बालेच्छाभिरखेदितम् ।**
**क्लेशोत्पादादिदं ह्येतदेषामिति दयान्वितम् ॥ ५६ ॥**
**आत्मसत्त्ववशं नित्यमनवद्येषु वस्तुषु ।**
**निर्माणमिव निर्मानं धारयाम्येष मानसम् ॥ ५७ ॥**  P 126

---

१ ŚS p. 68.  २ ŚS p. 71.

सुनिश्चितं संदेहविपर्यासरहितम् । सुप्रसन्नं सदा प्रीतिसौमनस्यबहुलम् । धीर-मचञ्चलम् । आदरः कथित एव । गौरवं आराध्येषु चित्तस्य नम्रता । ताभ्यां सह वर्तते । सलज्जं पूर्ववत् । सभयं स्खलित[ मालोक्य ]भीतम् । शान्तं संयतेन्द्रियम् । सत्त्वाराधनयत्नवत् ॥

यदेकस्य रुचिजनकं तदन्यस्य विपरीतम् । अन्योन्यविरुद्धाभिः पृथग्जनेच्छाभि-
5 रखेदितमविप्रतिसारि । कथम्? दयान्वितम् । हेतुपदमेतत् । कुतः ? यस्मात् क्लेशोत्पादान्न स्वातन्त्र्यादिदमेतत् परस्परविरुद्धचरितमेषां बालानामिति मत्वा ॥

आत्मसत्त्ववशं स्वपरायत्तं सर्वकालम् । किं सर्वत्र ? न । अनवद्येषु वस्तुषु उभय-सावद्यशून्येषु । किंवत्? निर्माणमिव निर्मितवत् । विगतमानं मानसं धारयामि । एषोऽहमिति बोधिसत्त्वो मनसि निवेशयेत् ॥

10 अस्मादपि संवेगमनसिकाराच्चित्तस्यानर्थविवर्जनेन रक्षा विधातव्येत्याह—

P 127

**चिरात्प्राप्तं क्षणवरं स्मृत्वा स्मृत्वा मुहुर्मुहुः ।**
**धारयामीदृशं चित्तमप्रकम्प्यं सुमेरुवत् ॥ ५८ ॥**

अतिचिरेण कालेन लब्धम् उक्तं क्षणवरं स्मरणेन चेतसि कृत्वा पुनः पुनरन्तरं स्थिरीकरोमि ईदृशमुक्तस्वभावम् । अप्रकम्प्यं कम्पयितुमशक्यं कामादिवितर्कपवनैः
15 पर्वतराजवत् ॥

एवमेताभ्यां शीलसमाधिभ्यामन्योन्यसंवर्धकाभ्यां चित्तकर्मपरिनिष्पत्तिः । तस्मादव-स्थितमेतत्—चित्तपरिकर्मैव बोधिसत्त्वशिक्षा इति । तेन यदुक्तम्—

चित्तरक्षाव्रतं मुक्त्वा बहुभिः किं मम व्रतैः ।

[ बोधि. ५.१८ ]

20 इति, तत् परिनिष्ठितम् ॥

पुनस्तदेकान्तमवधारयितुं कायप्रत्यवेक्षामाह—

**गृध्रैरामिषसंगृद्धैः कृष्यमाण इतस्ततः ।**
**न करोत्यन्यथा कायः कस्मादत्र प्रतिक्रियाम् ॥ ५९ ॥**

कायस्य सर्वथा क्वचिदपि व्यापारो नास्ति, स्वात्मन्यपि सामर्थ्याभावात् । अन्यथा
25 चित्तरहितो मृतस्य कायः । गृध्रादिभिर्विप्रलुज्यमान इतस्ततः प्रतिकारमात्मरक्षणार्थं किमिति न करोतीति पृच्छति सर्वसामर्थ्यविकलत्वात् । अत एव चित्तपरिकर्मैव साध्यम् । तस्मिन्
P 128
परिकर्मिते कायस्य अयत्नत एव परिकर्मसिद्धेः, तत्परतन्त्रत्वात्तस्येत्युक्तं भवति ॥

एवं सर्वथानुपयोगिनि काये सापेक्षतां निरस्यन्नाह—

**रक्षसीमं मनः कस्मादात्मीकृत्य समुच्छ्रयम् ।**
30 **त्वत्तश्चेत्पृथगेवायं तेनात्र तव को व्ययः ॥ ६० ॥**

हे मनः, अनात्मकमेव आत्मत्वेन स्वीकृत्य मांसास्थिपुञ्जं कायसंज्ञकं कस्मात्कारणात् त्वं रक्षसि ? किमेवमिति चेत्, भवतो यदि भिन्न एवायं कायः, तेन अस्यापचये तव किमपचीयते ?

पूर्वमेव चिरं स्वीकृत इति चेदाह—

**न स्वीकरोषि हे मूढ काष्ठपुत्तलकं शुचिम् ।** 5
**अमेध्यघटितं यन्त्रं कस्माद्रक्षसि पूतिकम् ॥ ६१ ॥**

हे मूढ, मोहविजृम्भितमेतद् भवतः । शुचिं पवित्रम् । अयं च अशुचिः । इद-मेवाह–अमेध्येति । पूतिकं शतनधर्मकम् ॥

स्यादेतत्– किमन्यस्मिन्नसन्नपि दोष उच्यते इत्यत्राह—

**इमं चर्मपुटं तावत्स्वबुद्ध्यैव पृथक्कुरु ।** 10 P 129
**अस्थिपञ्जरतो मांसं प्रज्ञाशस्त्रेण मोचय ॥ ६२ ॥**
**अस्थीन्यपि पृथक्कृत्वा पश्य मज्जानमन्ततः ।**
**किमत्र सारमस्तीति स्वयमेव विचारय ॥ ६३ ॥**

चर्ममयं पुटम् । स्वमतिविशेषेण पृथक् कुरु स्वकायादपसारय । अस्थिघटितपञ्जराद् यन्त्रात् प्रज्ञात्मकेन शस्त्रेण मांसकर्तनेन । तदनन्तरमस्थीन्यपि खण्डशः पृथग् भिन्नानि 15 कृत्वा मज्जानं पश्य अवलोकय । यदि अन्तरं कायः चतुर्महाभूतिकः मातापित्रशुचिकलल-संभूतः दुःखमयः कृतघ्नश्चेति विस्तरेण प्रतिपादयिष्यतीति[१] किमत्र सारमस्ति विज्ञप्रशास्तं न्याय्यं वा, इत्यात्मनैव विचारय ॥

**एवमन्विष्य यत्नेन न दृष्टं सारमत्र ते ।**
**अधुना वद कस्मात्त्वं कायमद्यापि रक्षसि ॥ ६४ ॥** 20

एवं कथितनयेन । साधूक्तमिति चेत्, अधुना वद कस्मात् त्वमद्यापि सर्वगुण-विकलमपि कायं रक्षसि ? एवं विद्वानपि ॥

तथापि अस्ति किंचिदत्रोपादेयमिति चेदाह—

**न खादितव्यमशुचि त्वया पेयं न शोणितम् ।**
**नान्त्राणि चूषितव्यानि किं कायेन करिष्यसि ॥ ६५ ॥** 25 P 130

यदस्ति, न तदुपयुक्तमिति संक्षेपार्थः । अतः किमनुपयोगिना कायेन करिष्यसि ? अत्र आसङ्गो न युक्त इत्यर्थः ॥

अन्यप्रयोजनाभावादिदमेवोचितमुत्पश्यामः इत्याह—

**युक्तं गृध्रशृगालादेराहारार्थं तु रक्षितुम् ।**
**कर्मोपकरणं[२] त्वेतन्मनुष्याणां शरीरकम् ॥ ६६ ॥** 30

---

१ See BCA. IX. 58–60; 79–88. २ Minayef करणत्वं तन्मनु°; T कर्मोप-करणं त्वेतन्मनु°.

यस्मात् कर्मणि केनचित् सहकारिभावेनोपयुज्यते इति रक्ष्यते ॥

तथापि नात्राभिनिवेशः कार्य इत्याह—

एवं ते रक्षतश्चापि मृत्युराच्छिद्य निर्दयः।
कायं दास्यति गृध्रेभ्यस्तदा त्वं किं करिष्यसि ॥ ६७ ॥

5 आच्छिद्येति बलात्। भवतो गृहीत्वा निष्कृपो मृत्युस्तव कायं गृध्रेभ्यो दास्यति, तदापि न कश्चित्प्रतिकारो भविष्यति इत्यभिप्रायः ॥

स्यादेतत्—यद्यपि एवम्, तथापि भक्ताच्छादनमात्रेणापि परिपालनीय इत्यत्राह—

P 131 न स्थास्यतीति भृत्याय न वस्त्रादि प्रदीयते।
कायो यास्यति खादित्वा कस्मात्त्वं कुरुषे व्ययम् ॥ ६८ ॥

10 यदि नाम भृत्यकर्मकरणं तथापि तत्रानवस्थायिस्वभावे विचक्षणो ज्ञात्वैव प्रवर्तते, एवं प्रकृतेऽपि तद्धर्मिणि केनाभिप्रायेण हे मनः, त्वं कुरुषे व्ययमुपकरणोपक्षयम्?

तत् किं सर्वथैव निरवकाशोऽयं कर्तव्यः? नेत्याह—

दत्वास्मै वेतनं तस्मात्स्वार्थं कुरु मनोऽधुना।
न हि वैतनिकोपात्तं सर्वं तस्मै प्रदीयते ॥ ६९ ॥

15 वेतनं कर्ममूल्यम्। तावन्मात्रं दत्वा अस्मै गत्वरशरीराय, कर्मोपकरणत्वात्, स्वप्रयोजनमनुविधेयं हे मनः। अनेनैवोपार्जितं कस्मादस्मै न दीयते इति चेत्, न हि यस्मात् यत्किंचित् कर्मकरेणोपात्तं सर्वं तस्मै कर्मकराय प्रदीयते इति न्यायोऽस्ति ॥

तस्मादेवमुपस्तम्भमात्रं दत्वा—

काये नौबुद्धिमाधाय गत्यागमननिश्रयात्।
20 यथाकामंगमं कायं कुरु सत्त्वार्थसिद्धये ॥ ७० ॥

P 132 काये नौबुद्धिं कृत्वा प्रवृत्तिनिवृत्तिहेतोः इच्छायत्तं कायं कुरु सत्त्वार्थानुष्ठानाय निष्पत्तये वा। हे मनः इति प्रकृतमभिसंबध्यते ॥

इति कायप्रत्यवेक्षया तत्स्वभावमुपयोगं च विचार्य परिनिश्चितकायप्रयोजनमुपसंहरन्नाह—

25 एवं वशीकृतस्वात्मा नित्यं स्मितमुखो भवेत्।
त्यजेद् भ्रृकुटिसंकोचं पूर्वाभाषी जगत्सुहृत् ॥ ७१ ॥

उक्तनीत्या आयत्तीकृतः आत्मा चित्तकायलक्षणः। सर्वदा प्रसन्नवदनो भवेत्। भ्रूललाटसंकोचं च प्रसादहानिकरं त्यजेत्। पूर्वमेव असंचोदित एव परेण स्वागतादिवादैः संतोषणशीलो भवेत्। सर्वसत्त्वानामकारणबान्धवश्च ॥

30 इत्यपि शिक्षा अनर्थवर्जनाय कार्येत्याह—

सशब्दपातं सहसा न पीठादीन् विनिक्षिपेत्।
नास्फालयेत्कपाटं च स्यान्निःशब्दरुचिः सदा ॥ ७२ ॥

सहसा त्वरितमेव निष्प्रयोजनं हस्तदण्डादिना कपाटं च नाकोटयेत् । संक्षेपतः निःशब्दाभिरतिर्भवेत् ॥

कः एवं सति गुणः स्यादित्याह—

वको विडालश्चौरश्च निःशब्दो निभृतश्चरन् ।
प्राप्नोत्यभिमतं कार्यमेवं नित्यं यतिश्चरेत् ॥ ७३ ॥ 5

एते सर्वे निःशब्दा अनुद्धताश्च विहरन्तो विवक्षितमर्थं लभन्ते । व्रतिनापि तथैव समाधानकण्टकपरिहारेण विहर्तव्यम् ॥ P 133

इत्यपि शिक्षितव्यमित्याह—

परचोदनदक्षाणामनधीष्टोपकारिणाम् ।
प्रतीच्छेच्छिरसा वाक्यं सर्वशिष्यः सदा भवेत् ॥ ७४ ॥ 10

कौकृत्यविनोदनाववादानुशासनीसमर्थानां विनयादिकोविदानाम् अप्रार्थितहितैषिणां हितविधायकं वचनं मूर्ध्ना गृह्णीयात् । न तेषु स्वचित्तं दूषयितव्यम्, नाप्यवमानना कार्येति भावः । सर्वसत्त्वेषु गुरुगौरवधिया समाचरितव्यमिति सर्वं सर्वेभ्यः शिक्षेत् ॥

ईर्ष्यामलप्रक्षालनामाह—

सुभाषितेषु सर्वेषु साधुकारमुदीरयेत् । 15
पुण्यकारिणमालोक्य स्तुतिभिः संप्रहर्षयेत् ॥ ७५ ॥

परकीयगुणवर्धनवचनेषु तत्परितोषणाय साधु साधु, भद्रकमिदम्, इति शब्दमध्याशयेनोच्चारयेत् । कुशलकर्मकारिणमपि दृष्ट्वा साधु कृतम्, धन्यो भवान् सुकृतकर्मकारी, इत्यादिभिः स्तुतिवचनैः प्रोत्साहयेत् ॥

लपनाशङ्कां निरस्यन्नाह— 20

परोक्षं च गुणान् ब्रूयादनुब्रूयाच्च तोषतः । P 134
स्ववर्णे भाष्यमाणे च भावयेत्तद्गुणज्ञताम् ॥ ७६ ॥

परगुणान् सद्भूतानपि परोक्षं ब्रूयान्न समक्षम् । अन्यथा लपनां कश्चिन्मन्येत । परेण तु तत्समक्षमन्यस्य गुणे भाष्यमाणे तदनुवादकतया समक्षमपि ब्रूयात् । अन्यथा नास्य रुचिरत्रेति मत्वा स्वचित्तं प्रदूषयेत् परः । स्वगुणे पुनः केनचिद् गुणपक्षपातिना 25 प्रसन्नेन समक्षं परोक्षं च कीर्त्यमाने चित्तस्योन्नतिं निवारयंस्तस्यैव गुणाभिधायकस्य गुणानुरागितां मनसि कुर्यात् ॥

परगुणामर्षणं वारयन्नाह—

सर्वारम्भा हि तुष्ट्यर्थाः सा वित्तैरपि दुर्लभा ।
भोक्ष्ये तुष्टिसुखं तस्मात्परश्रमकृतैर्गुणैः ॥ ७७ ॥ 30

सर्वेषां हीनमध्योत्कृष्टानां सत्त्वानाम् । सर्वे वा उपक्रमाः दुःखपरिहारेण तुष्ट्यर्थाः । सर्वारम्भपरिश्रमेण तुष्टिरेवोत्पादयितव्येत्यर्थः । सा च तुष्टिर्धनविसर्गैरपि दुर्लभा, स्याद्वा न वेति । इह पुनरयत्नसिद्धोपस्थिता कस्मात्परिहीयत इति मत्वा भोक्ष्ये अनुभविष्यामि संतोषसुखम् अन्ययत्ननिष्पादितैर्गुणैरुपनामितम् । न हि प्रियपुत्रगुणैरक्षमायुक्ता । इति
5 भावनया परगुणश्रवणाच्चित्तकार्कश्यमपकुर्यात् ॥

अत्रैवोपचयमाह—

P 135

**न चात्र मे व्ययः कश्चित्परत्र च महत्सुखम् ।**
**अप्रीतिदुःखं द्वेषैस्तु महद्दुःखं परत्र च ॥ ७८ ॥**

नैव अस्मिन्नर्थे प्रवृत्तिमतो मम इहलोके वा उपक्षयलेशोऽपि संभवति । उपचयः
10 पुनर्विंद्यत एवेति दर्शयति—परत्र च महत्सुखं परगुणाभिनन्दनात् । एवमक्रियमाणे पुनरपचयो दृश्यते, उभयलोकेऽपि दुःखं परगुणासहनात् ॥

तस्मात् सर्वकल्मषपरित्यागेन इयमुचिता कर्मकारिता शिक्षणीयेत्याह—

**विश्वस्तविन्यस्तपदं विस्पष्टार्थं मनोरमम् ।**
**श्रुतिसौख्यं कृपामूलं मृदुमन्दस्वरं वदेत् ॥ ७९ ॥**

15 सर्वविघ्नविनिर्मुक्तत्वाद्विश्वस्तम् । आनुपूर्व्या व्यवस्थितपदम् । असंदिग्धार्थम् । मनःप्रह्लादनकरम् । श्रवणाप्यायकम् । करुणारसनिष्यन्दभूतं न रागादिनिदानम् । मृदुस्वरमकर्कशवचनम् । मन्दस्वरं यावता ध्वनिना प्रतिपाद्यस्य प्रतीतिः स्यात्, न ततो न्यूनं नातिरिक्तमुदीरयन् ॥

**ऋजु पश्येत्सदा सत्त्वांश्चक्षुषा संपिबन्निव ।**
20 **एतानेव समाश्रित्य बुद्धत्वं मे भविष्यति ॥ ८० ॥**

अवक्रमकुटिलं परमप्रीतिरसभरावनतेन चक्षुषा तृषित इव शीतलजल परमाह्लादकरं
P 136
संपिबन्निव सत्त्वान् व्यवलोकयन् । न रक्तेन न दुष्टेन मुग्धेन । परमोपकारका ह्येते । कुतः ? यस्मादेतान् सत्त्वान् समासाद्य दुर्लभलाभं बुद्धत्वं मे भविष्यति उत्पत्स्यते । एवं च विहरन् अयत्नेऽपि सत्त्वार्थसमर्थो भवत्येव । यदुक्तम्—

25 सर्वत्राचपलो मन्दमितस्निग्धाभिभाषणात् ।
आवर्जयेज्जनं भव्यमादेयश्चापि जायते ॥ इति ।

[ शिक्षा. स. कारिका—१० ]

एतदेव[1] च बोधिसत्त्वस्य कृत्यं यदुत सत्त्वावर्जनं नाम । यथा धर्मसंगीतिसूत्रे आर्यप्रियदर्शनेन बोधिसत्त्वेन परिदीपितम्—

30 तथा तथा भगवन् बोधिसत्त्वेन प्रतिपत्तव्यं यत्सहदर्शनेन सत्त्वाः प्रसीदेयुः । तत्कस्माद्धेतोः ? न भगवन् बोधिसत्त्वस्यान्यत् करणीयमस्ति अन्यत्र सत्त्वावर्जनात् । सत्त्वपरिपाक एवेयं भगवन् बोधिसत्त्वस्य धर्मसंगीतिरिति ॥

---

१ ŚS p. 70.

एवमक्रियमाणे को दोष इति चेत्—

अनादेयं तु तं लोकः परिभूय जिनाङ्कुरम्।
भस्मच्छन्नं यथा वह्निं पच्येत नरकादिषु ॥ इति।

[ शिक्षा. स. कारिका–११ ]

तस्मात् सत्त्वाराधनमेव बोधिसत्त्वस्य कर्म उपकारिक्षेत्रमसाधारणं पुण्यप्रसूति- 5 P 137
हेतुरिति ॥

तत्प्रसङ्गेन अन्यदपि दर्शयन्नाह—

सातत्याभिनिवेशोत्थं प्रतिपक्षोत्थमेव च।[१]
गुणोपकारिक्षेत्रे च दुःखिते च महच्छुभम् ॥ ८१ ॥

समादानेन क्रियमाणम्। अभिनिवेशोत्थं तीव्रप्रसादजनितम्। प्रतिपक्षोत्थं क्लेश- 10
प्रतिपक्षशून्यतादिभावनाप्रसूतम्। गुणक्षेत्रं बुद्धबोधिसत्त्वादि। उपकारिक्षेत्रं मातापितादि। दुःखिता ग्लानादयः। एतेषु स्वल्पमपि कृतमप्रमेयशुभहेतुरुपजायते ॥

इदमपि बोधिसत्त्वेनाभ्यसनीयमित्याह—

दक्ष उत्थानसंपन्नः स्वयंकारी सदा भवेत्।
नावकाशः प्रदातव्यः कस्यचित्सर्वकर्मसु ॥ ८२ ॥ 15

दक्षः सर्वत्र पटुप्रचारः। उत्थानसंपन्नः कौसीद्यापनयनाद् वीर्यसमन्वागतः। अत P 138
एव स्वयमेव सर्वं करणीयम्, न परापेक्षा क्वचिदपि कर्मणि कार्या। इदमेव नावकाश इत्यादिना दर्शयति ॥

पारमिताभ्यासेऽनर्थविवर्जनायानुपूर्वकारितामाह—

उत्तरोत्तरतः श्रेष्ठा दानपारमितादयः। 20
नेतरार्थं त्यजेच्छ्रेष्ठामन्यत्राचारसेतुतः ॥ ८३ ॥

उपर्युपरितः। दानाच्छीलं श्रेष्ठम्, शीलात् क्षान्तिरित्यादयः। अतोऽवरपारमिता-हेतोरुत्तरं न त्यजेत्। तद्विरोधेन न सेवेतेति भावः। किं सर्वथा? नेत्याह—अन्यत्रेति। बोधिसत्त्वानां य आचारः शिक्षासंवरलक्षणः स एव कुशलजलरक्षणाय सेतुबन्धो विहितः, तस्मादन्यत्र तं विहाय। स यथा न भिद्यते इत्यर्थः ॥ 25

तस्मात्संभारमुपादित्सुना करुणापरतन्त्रेण सर्वं करणीयमुक्तमित्याह—

एवं बुद्ध्वा परार्थेषु भवेत्सततमुत्थितः।
निषिद्धमप्यनुज्ञातं कृपालोरर्थदर्शिनः ॥ ८४ ॥

एवमनुत्तरं ज्ञात्वा सत्त्वानां हितसुखविधानाय नित्यमारब्धवीर्यो भवेत्। प्रति-षिद्धार्थे प्रवृत्तौ कथं न सापत्तिक इति चेत्, न। क्वचिन्निषिद्धमपि सत्त्वार्थविशेषं प्रज्ञा- 30

१ Minayef reads प्रतिपक्षार्थम् for °पक्षोत्थम्.

P 139 चक्षुषा पश्यतः करणीयतया अनुज्ञातं भगवता। सनिःसरणं च भगवतः शासनम्। तच्चापि न सर्वस्य, अपि तु कृपालोः करुणाप्रकर्षप्रवृत्तितया तत्परतन्त्रस्य परार्थैकरसस्य स्वप्रयोजनविमुखस्य। इति प्रज्ञाकरुणाभ्यामुद्भूतपरार्थवृत्तेरुपायकुशलस्य प्रवर्तमानस्य नापत्तिः। अत्र च उपालिपरिपृच्छायामापत्त्यनापत्तिविभागो वेदितव्यः। तथा उपाय-
5 कौशल्यसूत्रे ज्योतिष्कमाणवकाधिकारे॥

एषा रक्षात्मभावस्य भैषज्यवसनादिभिः।

[शिक्षा. स. कारिका–१३]

इत्येतत् प्रतिपादयितुमाह—

विनिपातगतानाथव्रतस्थान् संविभज्य च।
10 भुञ्जीत मध्यमां मात्रां त्रिचीवरबहिस्त्यजेत्॥ ८५॥

भैषज्यवसनादिभिरात्मभावो हि परिपालनीयः परार्थोपयोगित्वात्। यथोक्तं प्राक्[1]— तत्र द्विविधं भैषज्यं सततभैषज्यं ग्लानप्रत्ययभैषज्यं च। तत्र सततभैषज्य-
P 140 मोदनादि। तदर्थं पिण्डाय गोचरे चरता ग्रामप्रवेशे यथोक्तशिक्षायां स्मृतिमाधाय चरितव्यम्। ततो लब्धात् पिण्डपातात् चतुर्थभागविभक्तात् विनिपातगताननाथव्रतस्थान्
15 संविभागिनः कुर्यात्। एकं प्रत्यङ्गं विनिपातिनाम्। द्वितीयमनाथानाम्। तृतीयं सब्रह्मचारिणां दत्वा चतुर्थमात्मना परिभुञ्जीत। स परिभुञ्जानो न रक्तः परिभुङ्क्ते असक्तः, अगृद्धः, अनध्यवसितः, अन्यत्र यावदेवास्य कायस्य स्थितये यापनायै। मध्यमां मात्राम्। तथा च परिभुङ्क्ते यथा नातिसंलिखितो भवति, नातिगुरुकायः। तत्कस्य हेतोः? अतिसंलिखितो हि कुशलपक्षपराङ्मुखो भवति, अतिगुरुकायो मिद्धावष्टब्धो भवति। तेन तं
20 पिण्डपातं परिभुज्य कुशलपक्षाभिमुखेन भवितव्यम्। इति आर्यरत्नमेघेऽभिहितम्। आर्यरत्नराशावपि[2]—

परिभुञ्जता च एवं मनसिकार उत्पादयितव्यः—सन्ति अस्मिन् काये अशीतिकृमि-
P 141 कुलसहस्राणि, तानि अनेनैवोजसा सुखं विहरन्तु। इदानीं चैषामामिषेण संग्रहं करिष्यामि। बोधिप्राप्तश्च पुनर्धर्मेण संग्रहं करिष्यामि। इति विस्तरः॥

25 पुनरत्रैवोक्तम्[3]—

द्वयोरहं काश्यप श्रद्धादेयमनुजानामि। कतमयोर्द्वयोः? युक्तस्य मुक्तस्य च। इति॥

अनया दिशा सर्वपरिभोगाः सत्त्वार्थमधिष्ठातव्याः। अन्यथा—

आत्मतृष्णोपभोगात्तु क्लिष्टापत्तिः प्रजायते॥ इति॥

[शिक्षा. स. कारिका–१३]

---

१ Cf ŚS p. 71 etc. २ ŚS p. 72. ३ ŚS p. 76.

यथोक्तं चन्द्रप्रदीपसूत्रे—

ते भोजनं स्वादुरसं प्रणीतं
लब्ध्वा च भुञ्जन्ति अयुक्तयोगाः ।
तेषां स आहारु वधाय भोति
यथ हस्तिपोतान बिसा अधौतकाः ॥ 5

[=समाधि. ९. २९]

विस्तरेण चैतच्छिक्षासमुच्चये[1] द्रष्टव्यम् ॥

ग्लानभैषज्यं तु यामिकं साप्ताहिकं यावज्जीविकमिति त्रिविधम् । एतच्च भिक्षुविनये प्रतिपादितं तत्रैवावधार्यम् ॥

वसनादिभिरात्मरक्षामाह—त्रिचीवरबहिस्त्यजेत् । इति । सचेदागत्य कश्चिद् बोधि- 10 सत्त्वं पात्रचीवरं याचेत, तेन अतित्यागो न कर्तव्यः । किं तु यत्तदनुज्ञातं भगवता—त्रिचीवरं श्रमणकल्पः, ततोऽतिरिक्तं च यद्भवेत्, त्यक्तव्यमर्थिने, नान्यथा । उक्तं च बोधिसत्त्वप्रतिमोक्षे—सचेत्पुनः कश्चिदागत्य पात्रं वा चीवरं वा याचेत, सचे-त्तस्यातिरिक्तं भवेद् बुद्धानुज्ञातात्त्रिचीवरात्, यथापरित्यक्तं दातव्यम् । सचेत्पुनस्तस्य ऊनं त्रिचीवरं भवेत् यन्निश्रित्य ब्रह्मचर्यावासः, तन्न परित्यक्तव्यम् । तत्कस्माद्धेतोः? अविसर्जनीयं 15 हि त्रिचीवरमुक्तं तथागतेन । सचेच्छारिपुत्र बोधिसत्त्वस्त्रिचीवरं परित्यज्य याचनगुरुको भवेत्, न तेन अल्पेच्छता आसेविता भवेत् । इति ॥

P 142

अतित्यागं निषेधयन् पुनरात्मरक्षामुपदर्शयन्नाह—

सद्धर्मसेवकं कायमितरार्थं न पीडयेत् ।
एवमेव हि सत्त्वानामाशामाशु प्रपूरयेत् ॥ ८६ ॥ 20

सतां सत्पुरुषाणां बोधिसत्त्वानां धर्मः । लौकिकलोकोत्तरपरहितसुखविधानम् । तत्सेवकं कायम् अल्पार्थनिमित्तं न पीडयेत् । अन्यथा महतोऽर्थराशेर्हानिः स्यात् । अत एव पूर्वस्मिन् हेतुपदमेतत् । कुतः पुनरेवम्? यस्मादनेनैव सुकुमारोपक्रमेण संवर्धमानः शीघ्रमेव सत्त्वानां हितसुखसंपादनसमर्थो भवति ॥

P 143

यत एवं तस्मात्— 25

त्यजेन्न जीवितं तस्मादशुद्धे करुणाशये ।
तुल्याशये तु तत्त्याज्यमित्थं न परिहीयते ॥ ८७ ॥

स्वशरीरशिरोदानादि न कर्तव्यमिति निषिद्धम् । कदा? अशुद्धे मित्रामित्रेतर-सर्वव्यसनिजनसाधारणप्रवृत्ते कृपाचित्ते । अल्पारब्धेन हि वीर्येण स्वपरहितार्थस्य बाधा स्यात् । समप्रवृत्ते पुनराशये स्वपरात्मनोऽतिरिक्ते वा न निषिध्यते । यदुक्तम्—तथा 30 स्वपरबोधिपक्षश्रुताद्यन्तरायकरौ त्यागात्यागौ न कार्यौ । अधिकसत्त्वार्थशक्तेस्तुल्यशक्तेर्वा

---

[1] Cf. ŚS p. 80.

बोधिसत्त्वस्य अधिकतुल्यकुशलान्तरायकरौ त्यागात्यागौ न कार्याविति सिद्धं भवति। इदमेव च संधाय बोधिसत्त्वप्रातिमोक्षेऽभिहितम्—यस्तु[1] खलु पुनः शारिपुत्र अभिनिष्क्रान्तगृहावासो बोधिसत्त्वो बोध्यङ्गैरभियुक्तः, तेन कथं दानं दातव्यम्, कतरं दानं दातव्यम्, कियद्रूपं दानं दातव्यम्। पेयालं। धर्मदायकेन भवितव्यम्। यश्च शारिपुत्र गृही बोधिसत्त्वो गङ्गानदीवालिकासमानि बुद्धक्षेत्राणि सप्तरत्नपरिपूर्णानि तथागतेभ्योऽर्हद्भ्यः सम्यक्संबुद्धेभ्यो दानं दद्यात्, यश्च शारिपुत्र प्रव्रज्यापर्यापन्नो बोधिसत्त्वः एकां चतुष्पदिकां गाथां प्रकाशयेत्, अयमेव ततो बहुतरं पुण्यं प्रसवति। न शारिपुत्र तथागतेन प्रव्रजितस्य आमिषदानमनुज्ञातम्। पेयालं। यस्य पुनः शारिपुत्र पात्रागतः पात्रपर्यापन्नो लाभो भवेद्धार्मिको धर्मलब्धः, तेन साधारणभाजिना भवितव्यं सार्धं सब्रह्मचारिभिरिति॥

तत्रैवाह—यस्तु खलु पुनः शारिपुत्र अनभिनिष्क्रान्तगृहावासो बोधिसत्त्वः, तेन धर्म आसेवितव्यः। तत्र तेनाभियुक्तेन भवितव्यमिति। अन्यथा हि एकसत्त्वार्थसंग्रहार्थं महतः सत्त्वराशेस्तस्य च सत्त्वस्य बोधिसत्त्वाशयपरिकर्मान्तरायान्महतोऽर्थस्य हानिः कृता स्यादिति॥

अनेनोपायकौशलेन विहरन् न बोधिमार्गात्परिभ्रश्यते। अयमभिप्रायः—दत्तः पूर्वमेव अनेन आत्मभावः सर्वसत्त्वेभ्यः। केवलमकालपरिभोगात्परिरक्षणीयः। अतो न मात्सर्यस्यावकाशः। नापि प्रतिज्ञातार्थहानिरिति। यदुक्तम्—

> भैषज्यवृक्षस्य सुदर्शनस्य
> मूलादिभोग्यस्य यथैव बीजम्।
> दत्वापि संरक्ष्यमकालभोगात्
> संबुद्धभैषज्यतरोस्तथैव॥ इति॥

सत्त्वाशयरक्षणादप्यात्मा रक्षितव्य इत्याह—

> **धर्मं निर्गौरवे स्वस्थे न शिरोवेष्टिते वदेत्।**
> **सच्छत्रदण्डशस्त्रे च नावगुण्ठितमस्तके॥ ८८॥**

देवमनुष्यपूजितो हि भगवतो धर्मः। ततोऽवध्यायन्ति देवतादयो गौरवमकुर्वतो धर्मप्रकाशनात्। निषिद्धं चैतद्भगवता इति तदाज्ञातिक्रमे सापत्तिको भवेत्। न वस्त्रादिबद्धशिरसि। सहशब्देन त्रिष्वपि संबन्धः। तथोत्तरीयादिना पिहितशीर्षे। प्रत्येकं स्वस्थ इति संबन्धनीयम्। ग्लाने पुनरनापत्तिः। उपलक्षणं चैतत्। न स्थितेन सुप्ताय निषण्णाय वा, न निषण्णेन सुप्ताय, न चानासनेन निषण्णाय। नोत्पथयायिना मार्गयायिने, नाग्रगामिने पृष्ठगामिना, नाप्यलंकारयुक्ताय। इत्यादयोऽपि द्रष्टव्या इति॥

इदमप्यनर्थविवर्जनाय मूलापत्तिकारणमकरणीयमित्याह—

> **गम्भीरोदारमल्पेषु न स्त्रीषु पुरुषं विना।**

---

[1] ŚS p. 80.

गम्भीरो दुर्मेधसामगाधत्वात् । उदारश्च प्रकर्षपर्यन्तत्वात् । तादृशं च धर्ममल्पेषु असंस्कृतबुद्धिषु हीनाधिमुक्तिषु वा न वदेदिति प्रकृतेन संबन्धः । न मातृग्रामस्य एकाकी रहोगतो धर्मं वदेत् । वदन् सापत्तिको भवति । न दोषः पुरुषो यदि स्यात् ॥

हीनोत्कृष्टेषु धर्मेषु समं गौरवमाचरेत् ॥ ८९ ॥

श्रावकयानभाषितेषु वा महायानभाषितेषु वा धर्मेषु तुल्यं चित्तप्रसादादिकं 5 कुर्यात् । अन्यथा सद्धर्मप्रतिक्षेपः स्यात् ॥

नोदारधर्मपात्रं च हीने धर्मे नियोजयेत् ।
न चाचारं परित्यज्य सूत्रमन्त्रैः प्रलोभयेत् ॥ ९० ॥

गम्भीरोदारधर्मभाजनं च सत्त्वं निमित्तज्ञैर्ज्ञात्वा न श्रावकयानादिधर्मेष्ववतारयेत् । न च आचारं शिक्षासंवरकरणीयतां मुक्त्वा सूत्रान्तादिपाठेनैव तव शुद्धिर्भविष्यति इति 10 P 147 धर्मकामं प्रभावयेत् । आह चात्र–पुनरपरोऽनर्थो रत्नकूटे[1] दृष्टः–अपरिपाचितेषु सत्त्वेषु विश्वासो बोधिसत्त्वस्खलितम् । अभाजनीभूतेषु उदारबुद्धधर्मप्रकाशना बोधिसत्त्वस्खलितम् । उदाराधिमुक्तिकेषु सत्त्वेषु हीनयानप्रकाशना बोधिसत्त्वस्खलितमिति ॥

आर्यसर्वधर्मवैपुल्यसंग्रहे[2] सूक्ष्मोऽप्यनर्थ उक्तः–सूक्ष्मं हि मञ्जुश्रीः सद्धर्मप्रतिक्षेपकर्मावरणम् । यो हि कश्चिन्मञ्जुश्रीः तथागतभाषिते धर्मे कस्मिंश्चित् शोभनसंज्ञां करोति, 15 क्वचिदशोभनसंज्ञाम्, स सद्धर्मं प्रतिक्षिपति । तेन सद्धर्मप्रतिक्षेप्त्रा तथागतोऽभ्याख्यातो भवति, संघोऽपवादितो भवति, य एवं वदति–इदं युक्तमिदमयुक्तम् । इति विस्तरः ॥

आर्याकाशगर्भसूत्रे[3] च मूलापत्तिप्रस्तावे चोक्तम्–पुनरपरमादिकर्मिको बोधिसत्त्वः केषांचिदेवं वक्ष्यति–किं भोः प्रातिमोक्षविनयेन ? शीलेन सुरक्षितेन शीघ्रं त्वमनुत्तरायां P 148 सम्यक्संबोधौ चित्तमुत्पादयस्व । महायानं पठ । यत्ते किंचित् कायवाङ्मनोभिः 20 क्लेशप्रत्ययादकुशलं कर्म समुदानीतम्, तेन ते शुद्धिर्भविष्यत्यविपाकम्, यावद्यथा पूर्वोक्तम् । इयमादिकर्मिकस्य बोधिसत्त्वस्य तृतीया मूलापत्तिरिति ॥

अतः इदमपि प्रातिमोक्षनिषिद्धं नाचरणीयमित्याह—

दन्तकाष्ठस्य खेटस्य विसर्जनमपावृतम् ।
नेष्टं जले स्थले भोग्ये मूत्रादेश्चापि गर्हितम् ॥ ९१ ॥ 25

खेटस्य श्लेष्मणो विसर्जनमपावृतं न कुर्यात् । जले स्थले भोग्ये उपभोग्ये मूत्रपुरीषादेरपि कुत्सितम् । अत्रापि देवताद्यवध्यानादपुण्यं प्रसवेत् ॥

मुखपूरं न भुञ्जीत सशब्दं प्रसृताननम् ।
प्रलम्बपादं नासीत न बाहू मर्दयेत्समम् ॥ ९२ ॥

मुखं पूरितं कृत्वा महत्कवलग्रहणात् । सशब्दं सुकसुनिकादिशब्देन । [ प्रसृताननं ] 30 दूरं विदारितमुखम् । प्रलम्बपादं भूम्याद्यलग्नपादं खट्वाद्यारोहणे सति नासीत । द्वावपि बाहू सममेकस्मिन् काले न मर्दयेत् । क्रममर्दने न दोषः । सति प्रत्यये ॥ P 149

---

१ ŚS p. 34. २ ŚS p. 56. ३ ŚS p. 37–38
बोधि. १०

नैकयान्यस्त्रिया कुर्याद्यानं शयनमासनम् ।

एकया अद्वितीयया अन्यस्त्रिया । गृहिप्रव्रजितयोरिदमिह साधारणमित्यन्यग्रहणम् । न कुर्याद्यानादि । संक्षेपेण संकलय्य दर्शयन्नाह—

लोकाप्रसादकं सर्वं दृष्ट्वा पृष्ट्वा च वर्जयेत् ॥ ९३ ॥

5 लोकानां यत् प्रसादजनकं न भवति, तत् सर्वं दृष्ट्वा शास्त्रे व्यवहारे वा । पृष्ट्वा विज्ञान् । वर्जयेत् । अनेनैतद्दर्शितं भवति—दृष्टेऽपि यद्बाधाकरमेवंविधं तद्वर्जयेत् आपत्तिर्भवतीति । यदुक्तम्—

रत्नमेघे जिनेनोक्तस्तेन संक्षेपसंवरः ।
येनाप्रसादः सत्त्वानां तद्यत्नेन परित्यजेत् ॥ इति ॥

10 [ शिक्षा. स. कारिका—१२ ]

P 150 यथाह[1]—कतमे च ते बोधिसत्त्वसमुदाचाराः? यावदिह बोधिसत्त्वो नाधःस्थाने विहरति, नाकाले । नाकाले भाणी भवति । नाकालज्ञो भवति । नादेशज्ञो भवति । यतोनिदानमस्यान्तिके सत्त्वा अप्रसादं प्रतिसंवेदयेयुः । स सर्वसत्त्वानुरक्षया आत्मनश्च बोधिसंभारपरिपूरणार्थं सम्यगीर्यापथो भवति, मृदुभाणी मन्दभाणी असंसर्गबहुलः प्रविवेका-
15 भिमुखः सुप्रसन्नमुखः इति ॥

न बोधिसत्त्वेन अवमन्यना क्वचिदपि कर्तव्येत्याह—

नाङ्गुल्या कारयेत्किंचिद्दक्षिणेन तु सादरम् ।
समस्तेनैव हस्तेन मार्गमप्येवमादिशेत् ॥ ९४ ॥

एकया अङ्गुल्या तर्जन्यादिकया न किंचिदुपदर्शयेत्, अपि तु समस्तेनैव समग्रेणैव
20 हस्तेन । दक्षिणेन न वामेन । मार्गमपि कथयेत् । आस्तां तावत्सगौरवं वस्तु ॥

लोकाप्रसादनिवारणायाह—

न बाहूत्क्षेपकं कंचिच्छब्दयेदल्पसंभ्रमे ।
अच्छटादि तु कर्तव्यमन्यथा स्यादसंवृतः ॥ ९५ ॥

न भुजमुत्क्षिप्य कंचिदाह्वयेत्, अल्पप्रयोजनतारतम्ये । महति पुनरदोषः ।
P 151 25 अच्छटादिशब्दं तु कुर्यात् । तदकरणेऽसमाहितचारितायामसंवृतः स्यात् । एतावता औद्धत्यपरिहारोऽपि दर्शितो भवति ॥

स हि शय्यां परिकल्पयन्नेवं परिकल्पयेदित्युपदर्शयन्नाह—

नाथनिर्वाणशय्यावच्छयीतेप्सितया दिशा ।
संप्रजानंल्लघूत्थानः प्रागवश्यं नियोगतः ॥ ९६ ॥

30 भगवतो महानिर्वाणशय्यामिव शय्यां परिकल्पयेत् । अभिमतया दिशा शिरो विधाय, दक्षिणेन पार्श्वेन, पादस्योपरि पादमाधाय, दक्षिणं बाहुमुपधानं कृत्वा, वामं च

१ ŚS p. 70.

प्रसार्य जङ्घोपरि निवेश्य, चीवरैः सुसंवृतकायः, स्मृतः, संप्रजानानः, उत्थानसंज्ञी, आलोकसंज्ञी, शयितः, नाचित्तकमिद्धावष्टब्धः । न च निद्रासुखमास्वादयेत्, न च पार्श्वसुखम् अन्यत्र यावदेवैषां महाभूतानां स्थितये यापनायै इति । लघूत्थानः शीघ्रमेवोत्तिष्ठेत् । न तु जृम्भिकां गात्रमोटनं कुर्वन्नालस्योपहितश्चिरेण । एतेभ्य एव सर्वेभ्यः पूर्वमेव ॥ P 152

इदमपरमभिसंक्षिप्य कथयन्नाह— 5

**आचारो बोधिसत्त्वानामप्रमेय उदाहृतः ।**
**चित्तशोधनमाचारं नियतं तावदाचरेत् ॥ ९७ ॥**

आचारः शिक्षणीयम् । अप्रमेयः असंख्येयः बोधिसत्त्वप्रातिमोक्षादिषु प्रदर्शितः । तत्संग्रहरूपं प्रथमतः चित्तशोधनमेव आचारमाचरेत् । नियतमवश्यंतया ॥

सामान्यापत्तिशोधनायाह— 10

**रात्रिंदिवं च त्रिस्कन्धं त्रिष्कालं च प्रवर्तयेत् ।**
**शेषापत्तिशमस्तेन बोधिचित्तजिनाश्रयात् ॥ ९८ ॥**

त्रिष्कृत्वो रात्रेः । त्रिष्कृत्वो दिवसस्य । त्रिस्कन्धः त्रयाणां स्कन्धानां पापदेशना-पुण्यानुमोदनाबोधिपरिणामनानां समाहारः । त्रिस्कन्धं प्रवर्तयेत् । शेषा मूलाया अन्याः । अथवा, संचिन्त्य कृता याः प्रतिकृताः ताभ्योऽन्याः स्मृतिसंप्रमोषेण असंप्रजानता वा 15 कृताः । तासां प्रशमः प्रतिकरणं तेन त्रिस्कन्धपरिवर्तनेन बोधिचित्तस्य जिनानां च भगवतां समाश्रयणाच्च ॥

एतेन विदूषणासमुदाचारादयो दर्शिता भवन्ति ॥

तत्र पापशोधनं चतुर्धर्मकसूत्रे[१] देशितम्— P 153

चतुर्भिर्मैत्रेय धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्वः कृतोपचितं पापमभिभवति । 20 कतमैश्चतुर्भिः ? यदुत विदूषणासमुदाचारेण, प्रतिपक्षसमुदाचारेण, प्रत्यापत्तिबलेन, आश्रय-बलेन च । तत्र विदूषणासमुदाचारः अकुशलं कर्म कृत्वा विप्रतिसाररूपात्सविगर्हणा पापदेशना, तदनुष्ठानं तत्समुदाचारः । तत्र प्रतिपक्षसमुदाचारः अकुशलप्रतिपक्षः कुशलम्, तत्समुदाचारः, कृत्वाप्यकुशलं कर्म कुशले कर्मण्यत्यन्तमभियोगः । तत्र प्रत्यापत्तिबलं संवरसमादानादकरणसंवरलाभः । तत्राश्रयबलं बुद्धधर्मसंघशरणगमनम्, अनुत्सृष्ट- 25 बोधिचित्तता च । स बलवत्संनिश्रयेण न शक्यते पापेनाभिभवितुम् । एभिर्मैत्रेय चतुर्भिर्धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्वः कृतोपचितं पापमभिभवतीति ॥

विशेषतस्तु बोधिसत्त्वापत्तीनां गुर्वीणां लघ्वीनां च देशना आर्योपालिपरिपृच्छाया-[२] मुक्ताः । ताः शिक्षासमुच्चये द्रष्टव्याः ॥

सर्वापत्तयो बोधिसत्त्वेन पञ्चत्रिंशतां बुद्धानां भगवतामन्तिके रात्रिंदिवमेकाकिना 30 देशयितव्याः । तत्रेयं देशना—अहमेवंनामा बुद्धं शरणं गच्छामीत्यारभ्य यावत् संघं शरणं गच्छामि, नमः शाक्यमुनये तथागतायार्हते सम्यक्संबुद्धाय । नमो वज्रप्रमर्दिने इत्यारभ्य यावत्— P 154

---

१ ŚS p. 89.  २ ŚS p. 92.

उपैमि सर्वान् शरणं कृताञ्जलिः।

इति विस्तरमुक्त्वाह[1]—इति हि शारिपुत्र बोधिसत्त्वेन इमान् पञ्चत्रिंशतो बुद्धान् प्रमुखान् कृत्वा सर्वतथागतानुगतैर्मनसिकारैः पापविशुद्धिः कार्या। तस्यैवं पापविशुद्धस्य त एव बुद्धा भगवन्तो मुखान्युपदर्शयन्ति। पेयालं। न तत् शक्यं सर्वश्रावकप्रत्येकबुद्ध-
5 निकायैरापत्तिकौकृत्यस्थानं विशोधयितुं यद्बोधिसत्त्वस्तेषां बुद्धानां भगवतां नामधेयधारण-परिकीर्तनेन रात्रिंदिवं त्रिस्कन्धकधर्मपर्यायप्रवर्तनेन आपत्तिकौकृत्यान्निःसरति, समाधिं च प्रतिलभते॥

एतत्साकल्येन शिक्षासमुच्चये वेदितव्यम्॥

P 155 उक्तो विदूषणासमुदाचारः। प्रतिपक्षसमुदाचारप्रत्यापत्तिबले अपि विस्तरेण
10 शिक्षासमुच्चयादेव द्रष्टव्ये। आर्यमैत्रेयविमोक्षे[2] तु बोधिचित्तेन पापविशुद्धिरुक्ता। तच्चोक्तमेव प्राक्। जिनाश्रयात् पापविशुद्धौ सूकरिकावदान[3]मुदाहार्यम्।

ये बुद्धं शरणं यान्ति न ते गच्छन्ति दुर्गतिम्।
प्रहाय मानुषान् कायान् दिव्यान् कायांल्लभन्ति ते॥

एवं धर्मं संघं चाधिकृत्य पाठः। अनेनाश्रयबलमुक्तम्॥

15 पुनरनियमेन दर्शयन्नाह—

**या अवस्थाः प्रपद्येत स्वयं परवशोऽपि वा।**
**तास्ववस्थासु याः शिक्षाः शिक्षेत्ता एव यत्नतः॥ ९९॥**

स्वयमात्मना परायत्तो वा सत्त्वार्थक्रियायां प्रवृत्तः॥

किं पुनरेवमनियमेनाभिधीयत इत्याह—

20 **न हि तद्विद्यते किंचिद्यन्न शिक्ष्यं जिनात्मजैः।**
**न तदस्ति न यत्पुण्यमेवं विहरतः सतः॥ १००॥**

यस्मात् सर्वाकारं सर्ववस्तुतत्त्वमधिगम्य सर्वेषां हितसुखविधानार्थमुद्यच्छद्भिर्बुद्ध-सुतैः न तदस्ति किंचित्, यन्न शिक्षितव्यम्। अन्यथा सर्वाकारः सर्वसत्त्वानामर्थः कर्तु-
P 156 मशक्यः। पुण्यसंभारोऽपि एवं विचरतोऽपर्यन्त एव स्यात्॥

25 इयमपि शिक्षापदमुद्रा अवधारयितव्येत्याह—

**पारंपर्येण साक्षाद्वा सत्त्वार्थं नान्यदाचरेत्।**
**सत्त्वानामेव चार्थाय सर्वं बोधाय नामयेत्॥ १०१॥**

अन्ततः स्वयमाहारादिक्रियया परप्रेरणया अपरापरदूतप्रेरणया वा, साक्षात् स्वयमेव आमिषदानादिना वा, यत् सत्त्वानां हितसुखहेतुर्न भवति, तन्न कुर्यात् कारयेद्वा। न चैत-
30 देव केवलम्। किंचित् सत्त्वानामेव संसारदुःखपतितानां ततो निःसरणाय सर्वं कुशलमूल-मनुत्तरायां सम्यक्संबोधौ परिणामयेत्॥

एतावता श्लोकद्वयेन पुण्यवृद्धिरुपदर्शिता भवति॥

---

१ ŚS p. 95. २ GV p. 502. ३ DA p. 121.

यदुक्तं कल्याणमित्रानुत्सर्गादिति [ शिक्षा. स. कारिका–६ ] तदाह—

**सदा कल्याणमित्रं च जीवितार्थेऽपि न त्यजेत् ।**
**बोधिसत्त्वव्रतधरं महायानार्थकोविदम् ॥ १०२ ॥**

कल्याणकर्मणि अभ्युदयनिःश्रेयसप्राप्तिलक्षणे मित्रमसाधारणो बन्धुः, तत् काय-जीवितविप्रणाशभयभीतोऽपि न त्यजेत् । कल्याणमित्रानुशंसाश्च प्रज्ञापारमितायामार्याष्ट-साहस्रिकायां [ अष्ट. ३० ] सदाप्ररुदितपरिवर्ताद्वेदितव्याः । चतुर्धर्मकसूत्रेऽप्युक्तम्—कल्याणमित्रं भिक्षवो बोधिसत्त्वेन महासत्त्वेन यावज्जीवं न त्यक्तव्यमपि जीवितहेतोरिति । अपरित्याज्यस्य कल्याणमित्रस्य लक्षणमाह—बोधिसत्त्वशिक्षासंवरे व्यवस्थितम् । महायानार्थ-पण्डितम् । एतादृशं सुदुर्लभम् ॥ 5 P 157

कल्याणमित्रस्य पर्युपासनपरिज्ञानार्थमाह— 10

**श्रीसंभवविमोक्षाच्च शिक्षेद्यद्गुरुवर्तनम् ।**

श्रीसंभवविमोक्षात्[2] आर्यगण्डव्यूहपरिवर्तात् कल्याणमित्रपर्युपासनं शिक्षेत् जानी-यात् । यथोक्तमार्यगण्डव्यूहे आर्यश्रीसंभवेन—कल्याणमित्रसंधारिताः कुलपुत्र बोधिसत्त्वा न पतन्ति दुर्गतिषु । यावत्—संचोदकाः कल्याणमित्रा अकरणीयानाम् । संनिवारकाः प्रमादस्थानात् । निष्कासयितारः संसारपुरात् । तस्मात्तर्हि कुलपुत्र एवंमनसिकाराप्रति-प्रस्रब्धेन कल्याणमित्राण्युपसंक्रमितव्यानि । पृथिवीसमचित्तेन सर्वभारोद्वहनापरितसनतया । वज्रसमचित्तेन अभेद्याशयतया । चक्रवालसमचित्तेन सर्वदुःखासंप्रवेधनतया । लोकदाससम-चित्तेन सर्वकर्मसमादानाविजुगुप्सनतया । रजोहरणसमचित्तेन मानाभिमानविवर्जनतया । यानसमचित्तेन गुरुभारनिर्वाहनतया । अश्वसमचित्तेन अक्रुध्यनतया । नौसमचित्तेन गमनागमनापरितसनतया । सुपुत्रसदृशेन कल्याणमित्रमुखवीक्षणतया । आत्मनि च ते कुलपुत्र आतुरसंज्ञोत्पादयितव्या कल्याणमित्रेषु च वैद्यसंज्ञा, अनुशासनीषु भैषज्यसंज्ञा, प्रतिपत्तिषु व्याधिनिर्घातनसंज्ञा । आत्मनि च ते कुलपुत्र भीरुसंज्ञोत्पादयितव्या, कल्याण-मित्रेषु शूरसंज्ञा, अनुशासनीषु प्रहरणसंज्ञा, प्रतिपत्तिषु शत्रुनिर्घातनसंज्ञा ॥ 15 P 158 20

यदुक्तं सूत्राणां च सदेक्षणादिति [ शिक्षा. स. का.–६ ], तदुपदर्शयितुमाह—

**एतच्चान्यच्च बुद्धोक्तं ज्ञेयं सूत्रान्तवाचनात् ॥ १०३ ॥** 25

एतदिह शास्त्रे प्रतिपादितम्, अन्यद्यदिह नोक्तम् । बुद्धेन भगवता बोधिसत्त्वानां करणीयतया निर्दिष्टम्, तन्नानासूत्रान्तार्थपरिचयाद् वेदितव्यम् ॥ P 159

एतदेव दर्शयति—

**शिक्षाः सूत्रेषु दृश्यन्ते तस्मात्सूत्राणि वाचयेत् ।**

शिक्षा बोधिसत्त्वानां हेयोपादेयलक्षणाः । सूत्रेषु महायानसूत्रान्तेषु रत्नमेघादिषु । यत एवं तस्मात् । इदं तु विशेषनिर्देशमाह— 30

**आकाशगर्भसूत्रे च मूलापत्तीर्निरूपयेत् ॥ १०४ ॥**

---

१ ŚS p. 26.   २ GV. p. 462.

आर्याकाशगर्भसूत्रे[1] क्षत्रियस्य मूर्धाभिषिक्तस्य पञ्च मूलापत्तयो निर्दिष्टाः। तथा सामान्येन एका मूलापत्तिः। तथा आदिकर्मिकस्य बोधिसत्त्वस्य अष्टौ मूलापत्तय इति। तथा च तत्रोक्तम्—पञ्च कुलपुत्र क्षत्रियस्य मूर्धाभिषिक्तस्य मूलापत्तयः याभिर्मूलापत्तिभिः क्षत्रियो मूर्धाभिषिक्तः सर्वाणि पूर्वावरोपितानि कुशलमूलानि झोषयति। वस्तुपतितः
5 पराजितः सर्वदेवमनुष्यसुखेभ्यः अपायगामी भवति। कतमाः पञ्च ? यः कुलपुत्र क्षत्रियो
P 160 मूर्धाभिषिक्तः स्तौपिकं वस्तु अपहरति सांघिकं वा चातुर्दिशसंघे निर्यातितं वा, स्वयं वा अपहरति हारयति वा। इयं प्रथमा मूलापत्तिः। एवं त्रियानभाषितधर्मप्रतिक्षेपात् द्वितीया। प्रव्रजितस्य शीलवतो दुःशीलस्य वा काषायापहरणात्, गृहस्थकरणात्, कायप्रहारात्, चारके प्रक्षेपात्, जीवितवियोजनाद्वा तृतीया। पञ्चानन्तर्येष्वन्यतमकरणाच्चतुर्थी। मिथ्या-
10 दृष्टेः, दशाकुशलकर्मपथसमादानात्, परसमादापनाद्वा पञ्चमीति ॥

तथा ग्रामभेदादिकरणात् सर्वेषां साधारणी चैका। तत्रैवोक्तम्[2]—

आदिकर्मिकाणां महायानसंप्रस्थितानां कुलपुत्राणां कुलदुहितॄणां च अष्टौ मूलापत्तयः, याभिर्मूलापत्तिभिः स्खलिता आदिकर्मिका महायानसंप्रस्थिताः सर्वाणि पूर्वारोपितानीत्यादि पूर्ववत्। कतमा अष्टौ ? ये सत्त्वाः पूर्वदुश्चरितहेतुना अस्मिन् क्लिष्टे पञ्चकषाये लोके
15 उत्पन्नाः, ते इत्वरकुशलमूलाः। यावत्, तेषामिदं परमं गम्भीरं शून्यताप्रतिसंयुक्तं सूत्रान्तं
P 161 यावद्विस्तरेणाग्रतः स्मारयन्ति प्रकाशयन्ति। ते हि अकृतश्रमा बालपृथग्जनाः शृण्वन्त उत्र-स्यन्ति, यावद् विवर्तयन्ति अनुत्तरायाः सम्यक्संबोधेश्चित्तम्, श्रावकयाने चित्तं प्रणिदधति। एषा आदिकर्मिकस्य बोधिसत्त्वस्य मूलापत्तिः प्रथमा, यया मूलापत्त्या इत्यादि पूर्ववत्। तस्माद्बोधिसत्त्वेन परसत्त्वानां परपुद्गलानामाशयानुशयं प्रथमं ज्ञात्वा यथाशयानां सत्त्वाना-
20 मनुपूर्वेण धर्मदेशना कर्तव्येति। सोपायायाः सम्यक्संबोधेर्विनिवर्त्य हीनयाने परस्य चित्तमुत्पादयतो द्वितीया। प्रातिमोक्षशिक्षासंवरं विहाय महायाने चित्तोत्पादमात्रेण तत्पठनेन चास्य शुद्धिप्रकाशनात् तृतीया। श्रावकादियानस्य तत्फलस्य गोपननिन्दा-प्रकाशनात्, महायाने सर्वशुद्धिप्रकाशनात्, परेषां तद्वचनकरणाच्चतुर्थी। कीर्तिलाभादि-हेतोः महायानपठनादिना, तथा तत्प्रत्ययात् परेषां कुत्सानिन्दादिभाषणात्, आत्मो-
25 त्कर्षणात्, उत्तरमनुष्यधर्मोपगमात् पञ्चमी। पाठमात्रेण गम्भीरधर्माधिगमप्रकाशनात्, परेषां तथैव समादापनात् षष्ठी। क्षत्रियस्य पुरोहितामात्यचण्डालैर्यै भिक्षवो दण्डिता अर्थदण्डेन सांघिकं स्तौपिकं वा चातुर्दिशसांघिकं वा द्रव्यमपहृत्य तेभ्य एवोपनामयन्ति। ते च क्षत्रिया उभयेऽपि मूलापत्तिमापद्यन्ते। इयं सप्तमी। धर्माधर्मविवादनापूर्वं शिक्षा-
P 162 प्रणयनात्, तन्मूलाचारविपन्नानां सत्कारात्, प्रहाणिकानामुपभोगपरिभोगाण्यन्यत्र परिणाम-
30 नात् उभयेऽपि मूलापत्तिमापद्यन्ते। इयमष्टमी ॥

आसां[3] च मूलापत्तीनां सुखग्रहणार्थं शास्त्रकारोपदर्शिताः संग्रहकारिका उच्यन्ते—

रत्नत्रयस्वहरणादापत्पाराजिका मता।
सद्धर्मस्य प्रतिक्षेपाद् द्वितीया मुनिनोदिता ॥

---

१ ŚS p. 37. २ ŚS p. 37. ३ ŚS p. 41

दुःशीलस्यापि वा भिक्षोः काषायस्तैन्यताडनात् ।
चारके वा विनिक्षेपादपप्रव्राजनेन च ॥
पञ्चानन्तर्यकरणान्मिथ्यादृष्टिग्रहेण च ।
ग्रामादिभेदनाद्वापि मूलापत्तिर्जिनोदिता ॥
शून्यतायाश्च कथनात्सत्त्वेष्वकृतबुद्धिषु ।     5
बुद्धत्वप्रस्थितानां तु संबोधेर्विनिवर्तनात् ॥
प्रातिमोक्षं परित्याज्य महायाने नियोजनात् ।
शिष्ययानं न रागादिप्रहाणायेति वा ग्रहात् ॥     P 163
परेषां ग्रहणाद्वापि पुनः स्वगुणकाशनात् ।
परपंसनतो लाभसत्कारश्लोकहेतुना ॥     10
गम्भीरक्षान्तिकोऽस्मीति मिथ्यैव कथनात्पुनः ।
दण्डापयेद्वा श्रमणान् दद्याद्वा शरणत्रयात् ॥
गृह्णीयाद्दीयमानं वा शमथत्याजनात्पुनः ।
प्रतिसंलीनभोगं च स्वाध्यायिषु निवेदनात् ॥
मूला आपत्तयो ह्येता महानरकहेतवः ।     15
आर्यस्याकाशगर्भस्य स्वप्ने देश्याः पुरःस्थितैः ॥
बोधिचित्तपरित्यागाद्याचकायाप्रदानतः ।
तीव्रमात्सर्यलोभाभ्यां क्रोधाद्वा सत्त्वताडनात् ॥
प्रसाद्यमानो यत्नेन सत्त्वेषु न तितिक्षते ।
क्लेशात्परानुवृत्त्या वा सद्धर्माभासवर्णनात् ॥ इति ॥     20

तस्मिन्नेव सूत्रे समुद्धरणमासामुक्तम् ॥

शिक्षासमुच्चयेऽपि बोधिसत्त्वानां करणीयमुपदिष्टमिति तदपि निरूपणीयमित्याह—

**शिक्षासमुच्चयोऽवश्यं द्रष्टव्यश्च[१] पुनः पुनः ।**     P 164
**विस्तरेण सदाचारो यस्मात्तत्र प्रदर्शितः ॥ १०५ ॥**

शिक्षासमुच्चयोऽपि स्वयमेभिरेव कृतः । अवश्यं नियमेन । द्रष्टव्यः पुनः पुनरसकृत् । 25 अभ्यसनीय इति भावः । कुतः? यस्मात् सतां बोधिसत्त्वानाम् । आचरणमाचार इतिकर्तव्यता । तत्र शिक्षासमुच्चये । विस्तरेण प्रबन्धेन । प्रदर्शितः विस्पष्टीकृत्य प्रकाशितः, तस्मात् ॥

यदि तस्याभ्यासेऽशक्तिः, तदा—

**संक्षेपेणाथवा तावत्पश्येत्सूत्रसमुच्चयम् ।**

नानासूत्रैकदेशानां वा समुच्चयमेभिरेव कृतं संक्षेपेण पश्येत् व्यवलोकयेत् ग्रन्थतो- 30 ऽर्थतो वा । अत्रापि पूर्वकमेव प्रयोजनम् । यदि वा—

---

१ Minayef. द्रष्टव्यस्तु for द्रष्टव्यश्च.

आर्यनागार्जुनाबद्धं द्वितीयं च प्रयत्नतः ॥ १०६ ॥

आर्यनागार्जुनपादैर्निबद्धं द्वितीयं शिक्षासमुच्चयं सूत्रसमुच्चयं च पश्येत् प्रयत्नतः आदरतः । यदिह न दृश्यते, तत् तत्र दृश्यते इति भावः ॥

नियमेन शिक्षादर्शनेऽपि साकल्येन सर्वेषामुपयोगमाह—

P 165　5　यतो निवार्यते यत्र यदेव च नियुज्यते ।

तल्लोकचित्तरक्षार्थं शिक्षां दृष्ट्वा समाचरेत् ॥ १०७ ॥

यतो हेयादकरणीयान्निवार्यते, न करणीयमेतदिति प्रतिषिध्यते । यत्र शिक्षासमुच्चये सूत्रसमुच्चये वा । यदेव कर्म कर्तव्यतया नियुज्यते विधीयते, तत् प्रसिद्धं विहितं वा । लोकानां चित्तमाशयः तस्य रक्षार्थम्, तद्यथा विकोपितं न स्यात् । शिक्षां दृष्ट्वा शिक्षा-10 समुच्चयादिषु । प्रतिपादं समाचरेत्, यत्र यद्यथा युज्यते, तत्र तथा व्यवहरेत् । अन्यथा अर्थसंमूढव्यवहारस्य आपत्तिकश्मलता स्यात् ॥

एतावता आत्मभावस्य शुद्धिराख्याता । यदाह—

आत्मभावस्य का शुद्धिः पापक्लेशविशोधनम् ।

संबुद्धोक्त्यनुसारेण यत्नाभावे त्वपायगः ॥ इति ॥

15　　　　[ शिक्षा. स. कारिका—१९ ]

यदुक्तम्—सदा स्मृतिसंप्रजन्यचारिणा भवितव्यमिति, ततः स्मृतेः स्वनाम्नैव स्वरूपं प्रतीतम् । संप्रजन्यस्य तु न ज्ञायते कीदृशमिति, तत्स्वरूपप्रतिपत्तये प्राह—

एतदेव समासेन संप्रजन्यस्य लक्षणम् ।

यत्कायचित्तावस्थायाः प्रत्यवेक्षा मुहुर्मुहुः ॥ १०८ ॥

P 166　20　यत्कायावस्थायाः चित्तावस्थायाश्च सर्वेर्यापथेषु प्रत्यवेक्षा निरूपणं सर्ववारं यथा प्रतिपादितं प्राक् ॥

सर्वमेतदुक्तशिक्षाकौशलं कर्मणा निष्पादयितव्यं न वचनमात्रेणेति नियमयितुमाह—

कायेनैव पठिष्यामि वाक्पाठेन तु किं भवेत् ।

चिकित्सापाठमात्रेण रोगिणः किं भविष्यति ॥ १०९ ॥

25　मनःपूर्वंगमत्वात् कायव्यापारस्य, सोऽप्यनेनैव प्रतिपादितः । प्रतिपत्त्या सर्वं संपादयिष्यामि, न तु शब्दमात्रघोषणया निष्फलत्वादिति बोधिसत्त्वेन यतितव्यम् । कथमिव? वैद्यकशास्त्राध्ययनमात्रेण तत्क्रियामकुर्वतो व्याधिग्रस्तस्य किं फलं निष्पत्स्यते? तावन्मात्रेण रोगस्य तस्याविनिवृत्तेः । न किंचिदिति भावः । तस्मात् सर्वमेतत् क्रियानुष्ठानेन निष्पादयितव्यमिति ॥

30　इति प्रज्ञाकरमतिविरचितायां बोधिचर्यावतारपञ्जिकायां

संप्रजन्यरक्षणं नाम पञ्चमः परिच्छेदः ॥

# ६ क्षान्तिपारमिता नाम षष्ठः परिच्छेदः ।

तदेवं बहुधा शीलविशुद्धिं प्रतिपाद्य आत्मभावादीनां रक्षां शुद्धिं प्रतिपाद्य शुभ- P 167
विशुद्धिं प्रतिपादयितुम्, यच्चोक्तम्—

क्षमेत श्रुतमेषेत संश्रयेत वनं ततः ।
समाधानाय युज्येत भावयेदशुभादिकम् ॥ 5

[ शिक्षा. स. कारिका– २० ]

इत्येतच्च अभिधातुमुपक्रमते सर्वमित्यादिना—

**सर्वमेतत्सुचरितं दानं सुगतपूजनम् ।**
**कृतं कल्पसहस्रैर्यत्प्रतिघः प्रतिहन्ति तत् ॥ १ ॥**

सर्वमेतदिति शीलसंवरसमादानप्रसूतम् । सुचरितं कुशलं कर्म । दानं त्रिविधम् । 10
सामान्येन सुगतपूजनमपि त्रिविधम् । कृतम् उपार्जितमनेकैः कल्पसहस्रैर्यत् तत् सर्वं प्रतिघः सत्त्वविद्वेषः प्रतिहन्ति निर्दहति वह्निलव इव तृणसंघातम् ॥

[1]आर्यमञ्जुश्रीविक्रीडितसूत्रे चाह–प्रतिघः प्रतिघ इति मञ्जुश्रीः कल्पशतोपचितं कुशलं प्रतिहन्ति, तेनोच्यते प्रतिघ इति ॥ P 168

[2]आर्यसर्वास्तिवादिना पठ्यते–पश्यथ भिक्षव एतं भिक्षुं केशनखस्तूपे सर्वाङ्गेन 15
प्रणिपत्य चित्तमभिप्रसादयन्तम् ? एवं भदन्त । अनेन भिक्षवो भिक्षुणा यावती भूमिराक्रान्ता, अधश्चतुरशीतियोजनसहस्राणि, यावत् काञ्चनवज्रमण्डलान्तरे यावन्त्यो वालिकाः, तावन्त्यनेन भिक्षुणा चक्रवर्तिराज्यसहस्राणि परिभोक्तव्यानि । यावत् । अथायुष्मानुपालिर्येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्–यदुक्तं भगवता अस्य भिक्षोरेवं महान्ति कुशलमूलानि । कुत्रेमानि भगवन् कुशलानि तनुत्वं परिक्षयं पर्यादानं गच्छन्ति ? नाहमुपाले एवं क्षतिमुपहतिं च समनुपश्यामि यथा सब्रह्मचारी सब्रह्मचारिणोऽन्तिके दुष्टचित्तमुत्पादयति । तत्रोपाले इमानि महान्ति कुशलमूलानि तनुत्वं परिक्षयं पर्यादानं गच्छन्ति । तस्मात्तर्हि उपाले एवं शिक्षितव्यं यद्दग्धस्थूणायामपि चित्तं न प्रदूषयिष्यामः, प्रागेव सविज्ञानके काये इति ॥ P 169

अत एवाह— 25

**न च द्वेषसमं पापं न च क्षान्तिसमं तपः ।**
**तस्मात्क्षान्तिं प्रयत्नेन भावयेद्विविधैर्नयैः ॥ २ ॥**

न च द्वेषेण समं पापमशुभं पुण्याभिभवहेतुरस्ति । न च क्षान्त्या तितिक्षया समं तुल्यं तपः । सुमहत्परिश्रमसाध्यत्वात् सुकृतम् । यत एवम्, तस्मात् क्षान्तिं क्षमां सर्वतात्पर्येण भावयेदभ्यसेत् । विविधैर्नानाप्रकारैरुपायैर्वक्ष्यमाणैः ॥ 30

---

१ ŚS p. 83. २ DA p. 122.

दृष्टधर्म एव द्वेषस्य दोषान् वृत्तत्रयेणोपदर्शयन्नाह—

मनः शमं न गृह्णाति न प्रीतिसुखमश्नुते ।
न निद्रां न धृतिं याति द्वेषशल्ये हृदि स्थिते ॥ ३ ॥

पूजयत्यर्थमानैर्यान् येऽपि चैनं समाश्रिताः ।
5 तेऽप्येनं हन्तुमिच्छन्ति स्वामिनं द्वेषदुर्भगम् ॥ ४ ॥

सुहृदोऽप्युद्विजन्तेऽस्माद् ददाति न च सेव्यते ।
संक्षेपान्नास्ति तत्किंचित् क्रोधनो येन सुस्थितः ॥ ५ ॥

P 170 शमं प्रशमं न गृह्णाति नाश्रयते । अनुपशान्त एव सदा द्वेषानलप्रज्वलितत्वात् न प्रीतिसुखं सौमनस्यसुखमश्नुते आप्नोति, तेनैवाक्रान्तत्वात् । न निद्रां न धृतिं चित्तसुखं 10 लभते कायचित्तसंतापकारिणि द्वेषशल्ये हृदयनिवासिनि । पूजयति सत्करोति लाभसत्कारैर्यान् । येऽपि चानुजीविनः, एवं द्वेषिणं स्वामिनमपकर्तुमिच्छन्ति । किमिति ? द्वेषदुर्भगम् अप्रियमिति हेतुपदमेतत् । सुहृदो मित्राण्यपि उद्विजन्ते उत्त्रसन्ति अस्माद् द्वेषिणः । दानोन्मुखोऽपि भृत्यवर्गैर्न सेव्यते नोपगम्यते । किं बहुना ? इदमिह संक्षेपेणावधार्यताम्—नास्ति तदुपशमकारणं किंचिद्येन कोपनः सुखं लभेत ॥

15 चित्तस्य कर्कशावस्था द्वेषः । तस्योद्भूतवृत्तिस्तु क्रोधः, यद्वशात् दण्डादिग्रहणं क्रियते । इति अनयोर्भेदेऽपि द्वयोरपि परिहर्तव्यतया अभेदेनैव निर्देशः ॥

एवमिह दृष्टधर्मेऽपि द्वेषदोषानवगम्य तत्परित्यागाय यत्नवता भवितव्यमित्याह—

एवमादीनि दुःखानि करोतीत्यरिसंज्ञया ।
यः क्रोधं हन्ति निर्बन्धात् स सुखीह परत्र च ॥ ६ ॥

P 171 20 एवं यथोक्तप्रकारेण दुःखानि जनयति यस्मात्, तस्माद् यः सुकृतात्मा निर्बन्धात्, गाढाभिनिवेशात् । आरब्धवीर्य इत्यर्थः । स सुखी इहलोके परलोके च ॥

इदानीं द्वेषोपघाताय तत्कारणमुपहन्तुं व्यवस्थां कुर्वन्नाह—

अनिष्टकरणाज्जातमिष्टस्य च विघातनात् ।
दौर्मनस्याशनं प्राप्य द्वेषो दृप्तो[1] निहन्ति माम् ॥ ७ ॥
25 तस्माद्विघातयिष्यामि तस्याशनमहं रिपोः ।

आत्मात्मीयग्रहप्रसूते इष्टानिष्टे । आत्मात्मीययोः सुखसाधनमिष्टम्, तद्विपरीतमनिष्टम्, इति कल्पनाकृतमेवैतत् । न तु परमार्थतः किंचिदिष्टमनिष्टं वा संभवति । तस्मान्मिथ्याभिनिवेशवासनावशात् अनिष्टस्य करणात्, इष्टस्य चोपहननाद् दौर्मनस्यं मानसं दुःखमुपजायते, तस्मात् तत्कारिणि तद्विरोधिनि वा द्वेष उत्पद्यते । इति दौर्मनस्यमेव बलवद्भोजनं

---

१ Minayef reads दृष्टो for दृप्तो.

लब्धसामर्थ्यः सन् द्वेषो निहन्ति माम् इति निश्चित्य तत्पुष्टिकारणं च हनिष्यामि प्रथमतः । तस्मिन् हते सुखमेव । तस्य हननात्, समूलघातं हतस्य पुनरुत्थानायोगाच्च ॥

ननु कोऽयमत्यर्थमभिनिवेशो भवत इत्याह—

यस्मान्न मद्वधादन्यत्कृत्यमस्यास्ति वैरिणः ॥ ८ ॥

यस्मात् मम वधं विहाय रात्रिंदिवमपरं न किंचिद् द्वेषस्य वैरिणः करणीयमस्ति ॥ 5 P 172

एवं द्वेषदोषान् विभाव्य सर्वोपायेन तद्विपक्षभूतां क्षान्तिमुत्पादयेत् । तत्र क्षान्तिस्त्रिविधा धर्मसंगीतिसूत्रेऽभिहिता[1] । तद्यथा—दुःखाधिवासनाक्षान्तिः, धर्मनिध्यानक्षान्तिः, परापकारमर्षणक्षान्तिश्च । तत्र तावद्दुःखाधिवासनाक्षान्तिमधिकृत्याह—

अत्यनिष्टागमेनापि न क्षोभ्या मुदिता मया ।

दौर्मनस्येऽपि नास्तीष्टं कुशलं त्ववहीयते ॥ ९ ॥ 10

दुःखाधिवासनाक्षान्तिविपक्षः अनिष्टागमप्राप्तदुःखभीरुता, इष्टविघातप्राप्तश्च सुखाभिष्वङ्गः । ताभ्यां दौर्मनस्यम् । ततो द्वेषो लीनचित्तता वा । अत एवाह चन्द्रप्रदीपसूत्रे[2]—सुखेऽनभिष्वङ्गः, दुःखेऽवैमुख्यम् । इति । रत्नमेघसूत्रेऽप्युक्तम्[3]—य इमे आध्यात्मिकाः शोकपरिदेवदुःखदौर्मनस्योपायासाः, तान् क्षमते अधिवासयतीति ॥

P 173

अतो यदि नाम मम शिरश्छिद्यते, तथापि न क्षोभ्या न विकोपयितव्या मुदिता 15 मया । मुदिता हि दौर्मनस्यप्रतिपक्षः । दुःखागमेऽपि प्रमुदितचित्तस्य दौर्मनस्यानवकाशात्, इति दौर्मनस्यनिरासाय मुदिता यत्नेन रक्षितव्या । कुतः ? दौर्मनस्येऽपि कृते इष्टविघाते सति नास्तीष्टं नाभिलषितं सेत्स्यति । अयं तु विशेषः स्यात्—कुशलं पुनरुपहन्यते ॥

मुदिता च आर्याक्षयमतिसूत्रे[4] वर्णिता—तत्र कतमा मुदिता ? या बुद्धधर्माणामनुस्मरणात् प्रीतिः प्रसादः प्रामोद्यं चित्तस्यानवलीनता अनवमृद्यता अपरितर्षणता, सर्वकाम- 20 रतीनामपकर्षणात् सर्वधर्मरतीनां प्रतिष्ठानम्, चित्तस्य प्रामोद्यम्, कायस्यौद्बिल्यम्, बुद्धेः संप्रहर्षणम्, मनस उत्प्लवः, तथागतकायाभिनन्दनरतिः । इति विस्तरः ॥

किं चेदमविचारयतो दौर्मनस्यमुत्पद्यते इत्याह—

यद्यस्त्येव प्रतीकारो दौर्मनस्येन तत्र किम् ।

अथ नास्ति प्रतीकारो दौर्मनस्येन तत्र किम् ॥ १० ॥ 25

यदि च इष्टविघातनिवर्तनाय अनिष्टोपनिपातप्रतिषेधाय च प्रतीकारः उपायान्तरमस्ति, तदा दौर्मनस्येन तत्र किम् ? तदेव अनुष्ठीयताम् । अथ नास्ति, तदापि दौर्मनस्येन तत्र किम् ? न किंचित् प्रयोजनम् । उपायाभावात् सर्वथा गतमेतत् । इति विचार्य दौर्मनस्यनिवर्तनमेव वरम् ॥ P 174

अभ्यासाद् दुःखमबाधकं भवतीति प्रसाधयितुमुपक्रमते— 30

दुःखं न्यक्कारपारुष्यमयशश्चेत्यनीप्सितम् ।

प्रियाणामात्मनो वापि शत्रोश्चैतद्विपर्ययात् ॥ ११ ॥

---

१ ŚS p. 100. २ ŚS p. 100. ३ ŚS p. 100. ४ ŚS p. 102.

दुःखं कायिकं मानसिकं चेति द्विविधम् । तत्र कायिकं दण्डादिघातज़म् । मानसिकं न्यक्कारादिनिमित्तम् । तत्र न्यक्कारो धिक्कारः । पारुष्यं मर्मघट्टनावचनम् । अयशश्च अकीर्तिः वैगुण्यप्रकाशनम् । इत्येतत्सर्वमनभिलषितम् । यदि परेषां शिवं ननु ? तदर्थमाह—प्रियाणाम् । आत्मीयत्वेन ये स्वीकृताः, प्रेमस्थानं तेषामात्मनश्च । दुःखादिकारकस्य 5 पुनः शत्रोरेतद्विपर्ययात् । तस्य दुःखादिकमभीष्टमेव ॥

तत्र दुःखसहिष्णुतां तावन्निराकर्तुमाह—

कथंचिल्लभ्यते सौख्यं दुःखं स्थितमयत्नतः ।

दुःखेनैव च निःसारः चेतस्तस्माद् दृढीभव ॥ १२ ॥

P 175 महता प्रयत्नेन कुशलपक्षमुपसेव्य कदाचित् कर्हिचित् सुदुर्लभं संसारे सास्रवं 10 सुखं लभ्यते । दुःखं तु सर्वदा सुलभम्, अयत्नसिद्धत्वात्, इति तदभ्यासो न दुष्करः, सर्वदा परिचितत्वात् । किं च । संसारनिःसरणोपायोऽपि दुःखमेव । तथापि पाथेयरूपतया तत्परिग्रहो युक्त एव । यत एवम्, तस्मात् हे चित्त, दुःखानुभवनाय दृढीभव, मा कातरतामाश्रयस्व ॥

अपि च । इदं दुःखं महार्थसाधकत्वात् सोढुमुचितम्, इति मनसि कर्तव्यम्, 15 इत्याह—

दुर्गापुत्रककर्णाटा दाहच्छेदादिवेदनाम् ।

वृथा सहन्ते मुक्त्यर्थमहं कस्मात्तु कातरः ॥ १३ ॥

दुर्गापुत्रकाः चण्डीसुताः । महानवमीसमयादिषु त्रिरात्रमेकाहं वा उपोष्य गात्रदाहच्छेदनभेदनं कुर्वन्तो दुःखां वेदनां निष्फलमेवानुभवन्ति । तथा कर्णाटदेशादिसमुद्भूता P 176 20 दाक्षिणात्या उपरिनामलिखनमात्राभिमानतः परस्परं स्पर्धमाना अनेकाभिः कारणाभिर्दुःखमनुभवन्तो जीवितमप्युत्सृजन्ति । अहं तु स्वपरात्मनोः परमदुर्लभबुद्धत्वसाधनाय कृतोत्साहः दुःखैः कस्मात् कारणात् कातरीभवामि ?

स्यादेतत्—अल्पल्पदुःखं कथंचित्सोढुं शक्यते । करचरणशिरश्छेदनादिदुःखं नरकादिदुःखं वा मुक्त्यर्थं कथं नु सोढव्यमित्यत्राह—

25 न किंचिदस्ति तद्वस्तु यदभ्यासस्य दुष्करम् ।

तस्मान्मृदुव्यथाभ्यासात् सोढव्यापि महाव्यथा ॥ १४ ॥

शास्त्राभ्यासकलादि कौशलादि मृदुमध्यातिमात्रदुःखानुभवनादि वा वस्तु न तद्विद्यते किंचित् यदभ्यासगोचरो न भवति । सर्वमेव अभ्यासादात्मसात्कर्तुं शक्यत इति भावः । यस्मात् तस्मात् अल्पल्पतरादिव्यथाभ्यासान्नरकादिमहाव्यथापि सोढुं [ शक्यते ] । 30 यथोक्तम्[1]—तत्र अल्पदुःखाभ्यासपूर्वकं कष्टकष्टतराभ्यासः सिध्यति । यथा च अभ्यासवशात्

1 Cf ŚS p. 101.

सत्त्वानां दुःखसुखसंज्ञा, तथा सर्वदुःखोत्पादेषु सुखसंज्ञाप्रत्युपस्थानाभ्यासात् सुखसंज्ञैव प्रत्युपतिष्ठते । एवं निष्पन्दफलं च सर्वधर्मसुखाक्रान्तं नाम समाधिं प्रतिलभते । उक्तं हि पितापुत्रसमागमे—　　P 177

अस्ति भगवन् सर्वधर्मसुखाक्रान्तो नाम समाधिः, यस्य समाधेः प्रतिलम्भाद् बोधिसत्त्वः सर्वारम्बणवस्तुषु सुखामेव वेदनां वेदयते न दुःखाम्, नादुःखसुखाम् । तस्य 5 नैरयिकामपि वेदनां कार्यमाणस्य सुखसंज्ञैव प्रत्युपस्थिता भवति । मानुषीमपि कारणां कार्यमाणस्य, हस्तेष्वपि छिद्यमानेषु पादेष्वपि कर्णेष्वपि नासास्वपि, सुखसंज्ञैव प्रत्युपस्थिता भवति । वेत्रैरपि ताड्यमानस्य अर्धवेत्रैरपि कशाभिरपि ताड्यमानस्य सुखसंज्ञा प्रवर्तते । बन्धनागारेष्वपि प्रक्षिप्तस्य, तैलपाचिकां वा क्रियमाणस्य, इक्षुकुट्टितिकं वा कुट्यमानस्य, नडचिप्पितिकं वा चिप्यमानस्य, तैलप्रद्योतिकं वा आदीप्यमानस्य यावत् कार्षापणच्छेदिकां 10 छिद्यमानस्य पिष्टपाचनिकां वा पाच्यमानस्य, हस्तिभिर्वा मर्द्यमानस्य सुखसंज्ञैव प्रवर्तते ॥ इति विस्तरः ॥

स्यादेवैतद् यदि प्रथमत एव मृदुव्यथाभ्यासः स्यात् । यावता स एव नास्तीति । अत्राह—

> उद्दंशदंशमशकक्षुत्पिपासादिवेदनाम् ।　　15　P 178
> महत्कण्ड्वादिदुःखं च किमनर्थं न पश्यसि ॥ १५ ॥

उद्दंशादिकृतदुःखमनर्थं किं न पश्यसि ? तदयत्नसिद्धं मृदुव्यथाभ्यासनिमित्तमस्त्येव इति भावः ॥

पुनरन्यथा स्वचित्तं द्रढयितुमाह—

> शीतोष्णवृष्टिवाताध्वव्याधिबन्धनताडनैः ।　　20
> सौकुमार्यं न कर्तव्यमन्यथा वर्धते व्यथा ॥ १६ ॥

सुकुमारतरचित्तस्य हि दुःखमतितरां बाधकं भवति, दुःखेऽपि दृढचित्तस्य विपर्ययः ॥

ननु दृढीकरणेऽपि चित्तस्य दुःखमसह्यमेवेति । अत्राह—

> केचित्स्वशोणितं दृष्ट्वा विक्रमन्ते विशेषतः ।
> परशोणितमप्येके दृष्ट्वा मूर्च्छां व्रजन्ति यत् ॥ १७ ॥　　25
> तच्चित्तस्य दृढत्वेन कातरत्वेन चागतम् ।
> दुःखदुर्योधनस्तस्माद्भवेदभिभवेद्व्यथाम् ॥ १८ ॥

न खलु दृढचित्तस्य किंचिदशक्यं नाम । तथाहि—केचिद्वीरपुरुषाः संग्रामभूमौ स्वशोणितमपि पश्यन्तोऽधिकतरं शौर्यमाभजन्ते । केचित्पुनः कातरचित्तसंततयः पररुधिर-

---

१ Cf ŚS p. 101–102.

P 179 दर्शनादपि मरणान्तिकं दुःखमनुभवन्ति। एतदुभयमपि चित्तस्य इतरेतराभ्यासविपर्ययात् इति मत्वा दुःखदुर्योधनो नाधिगम्यो भवेत्, दुःखैरप्यकम्प्यत्वात्। ततोऽभिभवेद् व्यथाम्, न पुनस्तयाभिभूयते॥

इत्थमप्यभिभवेद् व्यथामित्याह—

5 दुःखेऽपि नैव चित्तस्य प्रसादं क्षोभयेद् बुधः।
संग्रामो हि सह क्लेशैर्युद्धे च सुलभा व्यथा॥ १९॥

प्रसादं पूर्वोक्तं नावसादयेद्विचक्षणः। कुतः? यस्मात् क्लेशशत्रुभिः सह संग्रामोऽयमारब्धः। संग्रामे च व्यथा नाम न भवेदिति दुर्लभम्, व्यथा तु सुलभैव॥

ननु तथापि दुष्करमिदमतीव दृश्यत इति। अत्राह—

10 उरसारातिघातान् ये प्रतीच्छन्तो जयन्त्यरीन्।
ते ते विजयिनः शूराः शेषास्तु मृतमारकाः॥ २०॥

अभिमुखमभिभवन्तः शत्रुम्। तत्प्रहारान् वक्षःस्थलेन प्रतीच्छन्तो ये जयन्ति समरे रिपून्, ते ते शूरपुरुषाः पररिपुविजयादिह लब्धविजयाः प्रशस्यन्ते। ये पुनरन्ये छलप्रहारा-
P 180 दिभिरभिभवन्ति शत्रुम्, ते च अकिंचित्करतया मृतमारका जुगुप्सनीया एव शूरैः॥

15 इतोऽपि गुणदर्शनाद्दुःखमधिवासयितव्यमित्याह—

गुणोऽपरश्च दुःखस्य यत्संवेगान्मदच्युतिः।
संसारिषु च कारुण्यं पापाद्भीतिर्जिने स्पृहा॥ २१॥

अयमपरः शुभहेतुर्गुणो दुःखस्यास्य संबोधिमार्गानुकूलः, यद्दुःखस्य समावेशे मनसि संवेग उपजायते। तस्माच्च यौवनधनादिकृतस्य मदस्य च्युतिर्भङ्गो जायते, संसारिषु च
20 संसारदुःखपीडितेषु करुणाचित्तम्, पापस्य फलमिदमिति मत्वा पापाद् भयमकरणचित्तं च, बुद्धे च भगवति स्पृहा भक्तिः श्रद्धा चित्तप्रसादश्च। भगवानेव हि दुःखक्षयगामिनं मार्गमुपदिष्टवानिति॥

परप्रत्ययोत्पन्नदुःखाधिवासनाय परामृशन्नाह—

पित्तादिषु न मे कोपो महादुःखकरेष्वपि।
25 सचेतनेषु किं कोपः तेऽपि प्रत्ययकोपिताः॥ २२॥

पित्तादिदोषत्रयात्मकमेव शरीरम्। ते च तथाविधाहारविहारवैगुण्याद् विषमावस्थां
P 181 प्राप्ता व्याधीन् जनयन्तः सर्वदुःखहेतवो भवन्ति। तथापि न तेषु मम कोपः, अचेतनत्वात्। न ते संचिन्त्य दुःखदायकाः, किं तर्हि स्वकारणसामग्रीबलेन प्रकोपमुपागताः। यद्येवम्, सचेतनेषु किं कोपः? किं न स्यादिति चेत्, तेऽपि पूर्वकर्मापराधात् स्वकारणसामग्री-
30 प्रकोपिता दुःखदायका भवन्ति। इति पित्तादिवत् तेष्वपि न युज्यते मम क्रोधः॥

उभयत्रापि समानं कारणाधीनत्वमित्युपदर्शयन्नाह—

अनिष्यमाणमप्येतच्छूलमुत्पद्यते यथा ।
अनिष्यमाणोऽपि बलात्क्रोध उत्पद्यते तथा ॥ २३ ॥

स्वप्रत्ययोपजनितसामर्थ्येभ्यः पित्तादिभ्योऽनभिप्रेतमपि शूलमवश्यमुत्पद्यते यथा, तथा स्वहेतुमपरिणामाधिगतशक्तिभ्यो दौर्मनस्यादिभ्यः क्रोध उत्पद्यते, इति साधारणमनयो- 5 र्हेतुप्रत्ययाधीनत्वम् ॥

अथ स्यात्—उक्तमत्र सचेतनाः संचिन्त्य तथाविधानिष्टकारिणः, न तु पुनरितरे तथेत्याह—

कुप्यामीति न संचिन्त्य कुप्यति स्वेच्छया जनः ।
उत्पत्स्य इत्यभिप्रेत्य क्रोध उत्पद्यते न च ॥ २४ ॥ 10

तत्प्रत्ययसामग्रीमन्तरेण कुप्यामीत्येवं बुद्धिपूर्वकं संचिन्त्य न जनः स्वैरं प्रकुप्यति । क्रोधोऽपि उत्पत्स्य इत्यभिसंधाय स्वातन्त्र्येण नैवोत्पद्यते ॥

तस्मादिदमेवात्र प्रमाणसिद्धमित्याह— P 182

ये केचिदपराधाश्च पापानि विविधानि च ।
सर्वं तत्प्रत्ययबलात् स्वतन्त्रं तु न विद्यते ॥ २५ ॥ 15

इदंप्रत्ययतामात्रसमुपस्थितस्वभावं सर्वमिदम् । न तु स्वातन्त्र्यप्रवृत्तं किंचिदपि विद्यते ॥

न च प्रत्ययसामग्र्या जनयामीति चेतना ।
न चापि जनितस्यास्ति जनितोऽस्मीति चेतना ॥ २६ ॥

प्रत्ययसामग्र्यपि न स्वकार्यं जनयन्ती संचिन्त्य जनयति । सा हि स्वहेतुपरिणामोपनिधिधर्मतया तथाविधं कार्यं जनयति न तु संचिन्त्य । न चापि जनितस्य कार्यस्यापि 20 अनया सामग्र्या जनितोऽस्मीति चेतना मनसिकारोऽस्ति । तस्मान्निर्व्यापारतया सर्वधर्माणाम्, अस्मिन् सति इदं भवति, अस्योत्पादादिदमुत्पद्यते, इति इदंप्रत्ययतामात्रमिदं जगत्, नात्र कश्चित्स्वतन्त्रः संभवति । हेतुप्रत्ययाधीनत्वात्सर्वधर्माणाम् ॥

स्यादेतत्—अस्त्येव स्वतन्त्रं यथा सांख्यानां प्रधानमात्मा च, नैयायिकानामाकाशादयः । तत् किमुच्यते न किंचित्स्वतन्त्रमिह विद्यते, इत्याशङ्क्याह— P 183 25

यत्प्रधानं किलाभीष्टं यत्तदात्मेति कल्पितम् ।
तदेव हि भवाभीति न संचिन्त्योपजायते ॥ २७ ॥

यत्तद्भवतां सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रधानमित्यभिमतम् । किलेति प्रमाणासंगतमेतदित्यरुचिं प्रकाशयति । यदपि तद्वस्तु किंचिदात्मेति कल्पितमध्यवसितं प्रमाणासंगतमेव । आह—यस्मात्तदेव स्वयमेव तदपरकारणाभावाद् भवामि समुत्पद्य इति 30 नाभिसंधाय जायते ॥

कुतः ? यस्मात्—

**अनुत्पन्नं हि तन्नास्ति क इच्छेद्भवितुं तदा।**

तत् प्रधानादि प्रागसदेव। असतश्च वन्ध्यासुतादेरिव का भवितुमुत्पत्तुमिच्छा भवेत्? अथ नासदुत्पद्यते किंचित्, केवलमव्यक्तावस्थातो व्यक्तावस्थायां परिणाममात्रम्। 5 यद्येवम्, परिणामोऽपि कथमसन्नुत्पद्यते व्यक्तावस्था वा? परिणामस्य व्यक्तावस्थायाश्च तत्स्वभावत्वे तस्याप्युत्पत्तिप्रसङ्गः। व्यतिरेके संबन्धाभावः। संबन्धकल्पनायां च अनवस्था। परतो विस्तरेण प्रधानं निराकरिष्यते [९. १२७–१३८]॥

P 184 स्यादेतत्—आत्मन्ययमदोष एव। न हि तस्य वयमुत्पादमिच्छामः। सर्वदा नित्यस्वभावतया अनुत्पन्न एवासौ। भवतु नाम एवम्। तथापि सर्वथा खरविषाणकल्प 10 एवासौ, उत्पादाभावात्। ततो नात्रापि निवर्तते—

अनुत्पन्नं हि तन्नास्ति क इच्छेद्भवितुं तदा। इति।

भावेऽपि वा नास्य स्वात्मन्यपि प्रभुत्वमस्ति। प्रकृत्युपनामितमेव हि विषयमपि स भुङ्क्ते। तदा च विषयोपभोगात्प्राक् तद्भोक्तृत्वमस्य नासीत्, पश्चादुत्पन्नं च तत्स्वभावमेव। अन्यथा तस्य भोक्तृत्वायोगात्। तदुत्पादे च तस्याप्युत्पाद इति कथं नात्मन उत्पाद 15 इष्यत इति। तदेवं पुनः

अनुत्पन्नं हि तन्नास्ति क इच्छेद्भवितुं तदा।

इत्यायातम्॥

अपरमपि दूषणमत्राह—

**विषयव्यापृतत्वाच्च निरोद्धुमपि नेहते॥ २८॥**

20 यद्यप्यसौ प्रधानोपहितविषयोपभोगाय प्रवर्तत इतीष्यते, तदा प्रागप्रवृत्तस्य पश्चात्प्रवृत्तिर्न युज्यते। अथ कथंचित् प्रवर्तते, तदापि विषये व्यापृतस्य निवृत्तिर्न स्यात्। एतदेवाह—निरोद्धुमपि नेहते। विषयोपभोगान्निवर्तितुमपि नोत्सहते, तदा तस्य तत्स्वभावत्वात्, तस्य च नित्यतया अनिवृत्तेः। निवृत्तौ वा अनित्यत्वप्रसङ्गात्। नैयायिकादीनामात्मनो व्यपदेशो नित्यत्वात्॥

25 विशेषमपि तस्याह—

P 185 **नित्यो ह्यचेतनश्चात्मा व्योमवत् स्फुटमक्रियः।**

अचैतन्यं सांख्यादिह विशेषः। अन्यत्र समानता। तत्र नित्यः पूर्वापरकालयोरेकस्वभावः। अचेतनश्च अचित्स्वभावः। जड इत्यर्थः। अन्यचैतन्ययोगाच्चेतयते। व्योमवद् व्यापी। अत एव स्फुटं व्यक्तमक्रियः। यदाह—

30 अन्ये पुनरिहात्मानमिच्छादीनां समाश्रयम्।
स्वतोऽचिद्रूपमिच्छन्ति नित्यं सर्वगतं तथा॥

शुभाशुभानां कर्तारं कर्मणां तत्फलस्य च ।
भोक्तारं चेतनायोगाच्चेतनं न स्वरूपतः ॥

[ तत्त्वसंग्रह–१७१–७२ ]

तथा च अकिंचित्कर एवासौ, क्वचिदपि कार्येऽनुपयोगात् । अथ अपरसहकारिप्रत्ययसंनिधौ निष्क्रियस्यापि तस्य क्रिया[ भ्यु ]पगम्यते । यदुक्तम्— 5

ज्ञानयत्नादिसंबन्धः कर्तृत्वं तस्य भण्यते । इति ।

अत्राह—

प्रत्ययान्तरसङ्गेऽपि निर्विकारस्य का क्रिया ॥ २९ ॥

ज्ञानयत्नादिप्रत्ययान्तरसंपर्केऽपि नित्यत्वान्निर्विकारस्य पूर्वस्वभावादप्रच्युतस्यात्मनः का क्रिया ? नैव क्रिया युज्यते ॥ 10

यः पूर्ववत् क्रियाकाले क्रियायास्तेन किं कृतम् । P 186
तस्य क्रियेति संबन्धे कतरत्तन्निबन्धनम् ॥ ३० ॥

यथा पूर्वमक्रियाकाले तथा क्रियाकालेऽपि यः, तेन कारकस्वभावविकलेन क्रियायाः किं कृतम्, येन प्रत्ययान्तरसङ्गे तस्य क्रिया व्यवस्थाप्येत ? अपि च । उभयसंबन्धाभावात् तस्य आत्मनः क्रियेयमिति संबन्धे कतरत्तदन्यनिमित्तम् ? नैवास्ति किंचित् ॥ 15

विस्तरेण चात्मनो निराकरिष्यमाणत्वात् [ ९. ५८–६० ] ईश्वरस्य च [ ९. ११९–१२६ ], न स्वतन्त्रः कश्चिदपि संभवति । एवमस्वातन्त्र्यं सर्वत्र प्रसाध्योपसंहरन्नाह—

एवं परवशं सर्वं यद्वशं सोऽपि चावशः ।
निर्माणवदचेष्टेषु भावेष्वेवं क्व कुप्यते ॥ ३१ ॥

एवमुक्तनयेन परवशं परायत्तं सर्वं बाह्याध्यात्मिकं वस्तुजातम् । तर्हि यद्वशे 20 तदपरायत्तं भविष्यतीति चेत्, न । यद्वशं सोऽपि चावशः स्वहेतुपरतन्त्रः । एवं स हेतुरपि स्वहेतोरित्यनादिसंसारपरंपरायां न स्ववशिता क्वचिदपि संभवति । अतो निर्व्यापाराः सर्वधर्मा इति । कः कस्मै द्रुह्यति परमार्थतः येनापराधिनि क्वचित् कस्यचिदपराधे तस्य द्वेषो युक्तः । इदमेवाह–निर्माणवत् सर्वव्यापारकल्पनाविगमात्, अचेष्टेषु निरीहेषु सर्वधर्मेषु एवं सत्सु क्व कुप्यताम् ? न युज्यते प्रेक्षावतां क्वचिदपि कोप इति भावः ॥ 25 P 187

स्यादेतत्–एवं हि एकं समर्थयतो द्वितीयं विघटते इत्याशङ्कयन्नाह—

वारणापि न युक्तैवं कः किं वारयतीति चेत् ।

समर्थितन्यायेनैव वारणापि निवर्तनमपि निर्माणवदचेष्टेषु भावेषु न युक्ता । एवमिति यदा किंचिदपि स्वतन्त्रं न दृश्यते, सर्वं प्रत्ययसामग्रीं प्रतीत्य जायते, तदा वारणापि न

---

१ Minayef reads निर्वाणवत्, but one of the Mss. used by him reads निर्माणवत् which is supported by Tibetan translation. The Com. also reads निर्वाणवत्. Compare 5.57 for our reading.

युक्ता । यदि वा—मैवम्, तथापि कथं न युक्ता ? को वारयति, स्वतन्त्रः कर्ता किं निषेध्यं स्वतन्त्रप्रवृत्तं वारयतीति चेत् । अयमभिप्रायः—न हि समानेऽपि न्याये क्वचित् प्रवृत्तिः क्वचिन्निवृत्तिर्युज्यते । एकत्र निवृत्तौ सर्वत्रैव निवृत्तिर्युक्ता, न तु क्वचिदेव, न्यायस्य सामान्यत्वात् । तस्माद्युक्तमेतत्—वारणा न युक्तेति ॥

5 यद्येवं मन्यसे, अत्रोत्तरमाह—

P 188 **युक्ता प्रतीत्यता यस्माद्दुःखस्योपरतिर्मता ॥ ३२ ॥**

युक्ता वारणा, कुतः ? प्रतीत्यता, इदं प्रतीत्येदमुत्पद्यते इति प्रतीत्यसमुत्पन्नता यस्मादस्ति निर्व्यापारेष्वपि भावेषु, अतो वारणा युक्ता, ततो न व्याघातः । एतदुक्तं भवति—यद्यपि निर्व्यापाराः सर्वधर्माः, तथापि प्रतीत्यसमुत्पादवशात् पारतन्त्र्यमुपदर्शितम्—
10 एवं परवशं सर्वम् [ ६. ३१ ] इत्यादिवचनात् । ततः अविद्यादिप्रत्ययबलादुत्तरोत्तरः कार्यप्रवाहः संस्कारादिरूपः प्रवर्तते, पूर्वपूर्वनिवृत्तौ निवर्तते । एतच्च उत्तरत्र [ ९. ७५ ] विस्तरेण प्रतिपादयिष्यते । तस्माद्दुःखस्य संसारस्य उपरतिर्निवृत्तिरभिमता । अतो द्वेषादिपापप्रवृत्तिवारणा संगच्छते । तां प्रतीत्य तथाविधमभ्युदयनिःश्रेयसस्वभावं फलमुत्पद्यते ॥

सांप्रतं प्रकृतमेव योजयन्नाह—

15 **तस्मादमित्रं मित्रं वा दृष्ट्वाप्यन्यायकारिणम् ।**
**ईदृशाः प्रत्यया अस्येत्येवं मत्वा सुखी भवेत् ॥ ३३ ॥**

यस्मात् प्रतीत्यजं सर्वम्, तस्मादमित्रेतरं [ अमित्रमितरं च ] अपकारिणं प्रतीत्य सुखमेवालम्बनीयम् । कुतः ? ईदृशा अपकारकरणशीलहेतवः अस्य अमित्रस्य इतरस्य वा, इति एवं निश्चित्य सुखी भवेत्, दौर्मनस्यं न कुर्वीत ॥

20 किं च । दुःखोपनिपातेन चित्तक्षोभेऽपि न दुःखस्य निवृत्तिरस्तीत्युपदर्शयन्नाह—

P 189 **यदि तु स्वेच्छया सिद्धिः सर्वेषामेव देहिनाम् ।**
**न भवेत्कस्यचिद्दुःखं न दुःखं कश्चिदिच्छति ॥ ३४ ॥**

न हि आत्मेच्छामात्रेण अनभिमतं निवर्तते, अभिमतं चोपतिष्ठते हेतुमन्तरेण । तथात्वे सति न भवेत् कस्यचित् सत्त्वस्य दुःखम् । किमिति ? न दुःखमात्मनः कश्चि-
25 दिच्छति । स्वसुखाभिलाषिण एव हि सर्वसत्त्वाः ॥

दुःखाधिवासनाक्षान्तिमभिधाय इदानीं परापकारमर्षणक्षान्तिमुपदर्शयन्नाह—

**प्रमादादात्मनात्मानं बाधन्ते कण्टकादिभिः ।**
**भक्तच्छेदादिभिः कोपाद्दुरापरुयादिलिप्सया ॥ ३५ ॥**
**उद्बन्धनप्रपातैश्च विषापथ्यादिभक्षणैः ।**
30 **निघ्नन्ति केचिदात्मानमपुण्याचरणेन च ॥ ३६ ॥**
**यदैवं क्लेशवश्यत्वाद् घ्नन्त्यात्मानमपि प्रियम् ।**
**तदैषां परकायेषु परिहारः कथं भवेत् ॥ ३७ ॥**

असमीक्षितकारिता प्रमादः। स्वयमेव स्वकायं कण्टकस्थाणुकठल्लपाषाणशर्करादिभि-र्दुर्गमार्गेषु कर्मप्रवृत्ताः कण्टकास्तरणशयनादिभिर्वा बाधन्ते। तथा भोजनपानपरिहारा-दिभिः। किमिति ? कोपात् अगम्यपरदारधनादि लब्धुमिच्छया वा॥ P 190

उद्बन्धनमूर्ध्वलम्बनम्। प्रपातः प्रपतनं पर्वतादेः। जलाग्निप्रवेशादिभिः, विषा-पथ्यादिभक्षणैः, अत्याहारातिपानादिभिः, निघ्नन्ति मारयन्ति केचिन्मोहपुरुषा आत्मानं 5 स्वकायम्। परवधादिभिः, अपुण्याचरणेन च। परवधाभिप्रायाः संग्रामादिष्वकुशल-क्रियया च॥

यदैवमुक्तक्रमेण क्लेशवश्यत्वात् क्लेशपरतन्त्रत्वात् एते सत्त्वा आत्मानमपि प्रियं वल्लभं घ्नन्ति पीडयन्ति, तदा एषां परकायेषु परशरीरेषु अपकारविरतिः कथं स्यात्?

इत्थं च कृपापात्रमेवैते, न द्वेषस्थानमित्याह— 10

> क्लेशोन्मत्तीकृतेष्वेषु प्रवृत्तेष्वात्मघातने।
> न केवलं दया नास्ति क्रोध उत्पद्यते कथम्॥ ३८॥

पिशाचैरिव ग्रस्तेषु एषु अपकारकारिषु उक्तनयेन प्रवृत्तेषु आत्मघातने परापकार-द्वारेण वा न केवलं न तावत् कृपा नास्ति, औदासीन्यमपि साधूनां तत्रायुक्तम्। द्वेष उत्पद्यते कथं कृपास्थानेष्विति विपर्ययो महान्॥ 15

एवमपि स्वचित्तं निवारयेदित्याह— P 191

> यदि स्वभावो बालानां परोपद्रवकारिता।
> तेषु कोपो न युक्तो मे यथाग्नौ दहनात्मके॥ ३९॥

तथा हि विकल्पद्वयमत्र। बालानां पृथग्जनानां यदि एतादृश एव स्वभावः परोप-द्रवकारिता नाम, तदा न खलु स्वभावाः पर्यनुयोगमर्हन्ति—किमिति परापकारं कुर्वन्ति 20 ते? इति परिभाव्य तेषु द्वेषो न युक्तो मे। तद्यथा अग्नौ दहनस्वभावे दाहकरणात्। अन्यथा तदभावे तत्स्वभावताहानिप्रसङ्गात्॥

द्वितीयं विकल्पमधिकृत्याह—

> अथ दोषोऽयमागन्तुः सत्त्वाः प्रकृतिपेशलाः।
> तथाप्ययुक्तस्तत्कोपः कटुधूमे यथाम्बरे॥ ४०॥ 25

अथ दोषोऽयमागन्तुः अन्य एव न तत्स्वभावभूतः। सत्त्वाः पुनः प्रकृतिप्रभा-स्वरचित्तसंतानतया पेशला अकुटिलस्वभावाः। दोषा हि दुष्टस्वभावाः, न तत्स्वभावाः सत्त्वाः। तथापि अयुक्तस्तेषु सत्त्वेषु पेशलस्वभावेषु कोपः। कस्मिन्निव? कटुधूमो यथा इव अम्बरे। न हि कटुता नाम निर्मलस्याकाशस्य स्वभावः, अपि तु धूमस्य। अतश्च तद्दोषेण धूम एव दोषो युज्यते, नाकाशे प्रकृतिपरिशुद्धे। तस्माद्दोषेष्वेव कोपो युज्यते 30 न सत्त्वेषु॥

P 192 अपि च। यदेव हि प्रधानं दुःखकारणम्, तत्र युक्तो भवेत् कोपो नाप्रधाने इत्याह—

मुख्यं दण्डादिकं हित्वा प्रेरके यदि कुप्यते।
द्वेषेण प्रेरितः सोऽपि द्वेषे द्वेषोऽस्तु मे वरम्॥ ४१॥

5 काये हि दण्डप्रहारादभावितचित्तस्य दुःखं समुत्पद्यते। ततो दण्ड एव मुख्यं दुःखकारणमिति तत्रैव कोपो युक्तः। अथ परप्रेरितस्य दण्डस्य को दोषः? तेन प्रेरक एव द्वेष्यो भवति। एवं तर्हि द्वेषेण सोऽपि दण्डप्रेरकः प्रेरित इति द्वेषे द्वेषो मम युक्तो न प्रेरके॥

अपि च। नादत्तं किंचिदुपभुज्यते सुखं वा दुःखं वा। इति विचिन्त्य परापकारेऽपि न तत्र चित्तं प्रदूषयेदित्याह—

10 मयापि पूर्वं सत्त्वानामीदृश्येव व्यथा कृता।
तस्मान्मे युक्तमेवैतत्सत्त्वोपद्रवकारिणः॥ ४२॥

पूर्वं जन्मान्तरे मयापि सत्त्वानामेवंविधैव पीडा कृता यस्मात्, ऋणपरिशोधनन्यायेन उचितमेव ममैतत् परापकारकारिणः। तत्कर्मफलपरिपाकादिति भावः॥

यद्यस्य कारणं तस्मादेतदुत्पद्यते नान्यस्मादिति परामृश्य परापकारं मर्षयेदित्युप-
15 दर्शयन्नाह—

P 193 तच्छस्त्रं मम कायश्च द्वयं दुःखस्य कारणम्।
तेन शस्त्रं मया कायो गृहीतः कुत्र कुप्यते॥ ४३॥

अविकलकारणसामग्री हि सर्वकार्यस्य कारणमिति प्रमाणपरिनिश्चितम्। सा चात्र तथाविधा विद्यते। तथाहि तस्यापकारिणः शस्त्रं खड्गादि मम कायश्च, एतद्द्वयं सामग्रीरूपं
20 दुःखस्य कारणम्। इति समर्थकारणसद्भावेऽपि कार्यं कथं नोत्पद्येत? अन्यथा तत्तस्य कारणमेव न स्यात्। ततोऽन्यदपि, तत उत्पादयोगः? [=तत्सामग्रीतोऽन्यदपि कारणं स्यात्, ततः.... ]। तस्माद्यदि कारणोपनायके कुप्यते, तदा स्वात्मन्यपि कोपो युक्तः। यतः स्वयमपि दुःखकारणं वहत्युपनयति च भवान्। आत्मन्यकोपे परत्रापि न युक्त इति भावः॥

25 प्रकारान्तरेणोक्तमेवार्थं स्पष्टयन्नाह—

गण्डोऽयं प्रतिमाकारो गृहीतो घट्टनासहः।
तृष्णान्धेन मया तत्र व्यथायां कुत्र कुप्यते॥ ४४॥

शरीराकृतिरयं पक्वगण्डो मया गृहीतः। सर्वदुःखहेतुत्वात् सर्वोपमर्दसहः। आकोटनताडनादिभिरप्यभेद्यत्वात्। दुःखपरिहाराय सुखप्राप्तये च या तृष्णा अभिलाषः,
30 तदन्धेन पिहितप्रज्ञालोचनेन तस्यां व्यथायां सत्यां कुत्र कुप्यते? न हि गण्डस्य कुड्यादिसंपर्कजे दुःखे कचिद्विवेकतः कोपो युक्तः॥

अपि च । यः कार्येणानर्थी, तेन तत्कारणमेव परिहर्तव्यं भवेत् । अहं तु विपर्यस्त-मतिरिति विमर्शमुपदर्शयन्नाह— P 194

**दुःखं नेच्छामि दुःखस्य हेतुमिच्छामि बालिशः ।**
**स्वापराधागते दुःखे कस्मादन्यत्र कुप्यते ॥ ४५ ॥**

दुःखं दण्डाद्यभिघातजं नेच्छामि । तस्य पुनः कारणं शरीरं प्रत्यपकारिणं चेच्छामि । 5 बालिश इति बालधर्मो विपर्यासः । तस्मात्कारणात् स्वकाये यद्दुःखं तत् स्वापराधागतमेव । इति कस्मादन्यत्र तत्सहकारिमात्रे कुप्यते ?

आत्मवधाय स्वयं संस्कृतशस्त्रस्यैव अन्यत्र मम कोपो न युक्त इत्याह—

**असिपत्रवनं यद्वद्यथा नारकपक्षिणः ।**
**मत्कर्मजनिता एव तथेदं कुत्र कुप्यते ॥ ४६ ॥** 10

असिपत्रवनं नरकसमुद्भवम् । असय एव पत्राण्यस्येति कृत्वा । असिग्रहणं प्राधा-न्यात् । अन्यदपि शस्त्रं नारकदुःखहेतुर्यन्त्रं च । वने तस्मिन्निवासिनो गृध्रोलूकवायसादयः पक्षिणो यथा मत्कर्मजनिता एव दुःखहेतवो भवन्ति । नान्यदत्र दुःखकारणमस्ति । तथा इदमपि परशस्त्रादिकं दुःखहेतुर्मत्कर्मजनितमेव, इति कुत्र कुप्यते ?

इत्थमपि विपर्यास एवायमित्युपदर्शयितुमाह— 15 P 195

**मत्कर्मचोदिता एव जाता मय्यपकारिणः ।**
**येन यास्यन्ति नरकान्मयैवामी हता ननु ॥ ४७ ॥**

येन मदीयेन कर्मणा चोदिताः प्रेरिता एव मयि पूर्वकृतापकारे अपकारिणो जाताः सन्तो नरकान् यास्यन्ति, तेन मयैवामी अपकारिणो हता ननु । स्वचित्तं संबोधयति—न अमीभिरहं हतः । अयमभिप्रायः—यदि नाकरिष्यमहमीदृशं कर्म, तदा एतेऽपि नापकारिणोऽभविष्यन्निति मत्कृतेनैव कर्मणा अपकारिणो भवन्ति ॥ 20

उपकारिष्वेव मोहादपकारिबुद्धिर्ममेति कारिकाद्वयेन दर्शयन्नाह—

**एतानाश्रित्य मे पापं क्षीयते क्षमतो बहु ।**
**मामाश्रित्य तु यान्त्येते नरकान् दीर्घवेदनान् ॥ ४८ ॥**
**अहमेवापकार्येषां ममैते चोपकारिणः ।**
**कस्माद्विपर्ययं कृत्वा खलचेतः प्रकुप्यसि ॥ ४९ ॥** 25

एतानपकारिण आश्रित्य निमित्तीकृत्य मम पापं पूर्वजन्मकृतपरापकारजनितं क्षीयते तद्दुःखानुभवनविपाकेन क्षयं याति । क्षमतः क्षान्तिमालम्बमानस्य । बहु अनेकपर्यायेण कृतम् । मामाश्रित्य मत्कर्मचोदिताः एवमप्यपकारं कृत्वा पुनरेते नरकान् तीव्रवेदनान् दुःसहदुःखानुभवान् यान्ति । अत उक्तक्रमेण अहमेव अपकारी एषामित्यादि सुबोधम् ॥ P 196

ननु यद्यपकारी भवान्, तर्हि भवत एव नरकगमनमुचितम्, न त्वेषामित्याह—

भवेन्ममाशयगुणो न यामि नरकान् यदि।

एषामत्र किमायातं यद्यात्मा रक्षितो मया॥ ५०॥

या प्रत्यपकारनिवृत्तिनिष्ठा एतन्ममाशयमाहात्म्यं नरकगतिनिवृत्तिहेतुः। नरकान्
5 न यामि तदात्माशयमाहात्म्यबलेन। न तु पुनरेषां दुराशयतया नरकेषु ममापतनमिति भावः। एतदेवाह—एषामित्यादिना। अयमत्र समुदायार्थः—यद्यहमपकारी सन्नपि केनचिदुपायकौशलेन नरकान् न यामि, तदैषामु[म?]पकारिणां किमायातम्, किमपक्षीयते? का क्षतिरित्यर्थः। मया तावदेकेन रक्षिता न भवन्तामन्ये, रक्षित आत्मा च भवेत्। न चैतावता किंचिदेषां न्यूनाधिकं गुणदोषेषु स्यात्॥

P 197 10 ननु यदि नाम एवम्, तथापि भवतोऽपि न युक्तमात्मरक्षणमुपकारिकृतज्ञतया इत्याशङ्क्याह—

अथ प्रत्यपकारी स्यां तथाप्येते न रक्षिताः।

हीयते चापि मे चर्या तस्मान्नष्टास्तपस्विनः॥ ५१॥

यदि दण्डादिघातं कुर्वत्सु प्रत्यपकारी भवेयम्, तथापि एते रक्षिता न भवन्ति।
15 न कश्चिदेषां प्रतीकारो नरकगमनादिषु कृतः स्यात्। प्रत्युत ताडितेनापि मया न प्रतिताडितव्यम्। तथा सर्वसत्त्वेषु न मैत्रचित्तं मया निश्चि[क्षिप्त?]तव्यम्। अन्तशो न दग्धस्थूणायामपि प्रतिघचित्तमुत्पादयितव्यम्। इत्यादेर्बोधिसत्त्वचर्याया मम हानिरेव स्यात्। तस्मादेतर्हि प्रतीकारोपायाभावात्तपस्विनो वराका रक्षितुमशक्यत्वान्नष्टा दुर्गतिपतिता एव। इत्युपेक्ष्यन्ते तावदिदानीम्। पश्चात्तदुपायमधिगम्य तत्करिष्यामि यथैषां दुःखमणुमात्रकमपि
20 न स्यात्॥

तदेवं परापकारमर्षणक्षान्तिं प्रतिपाद्य अधुना धर्मनिध्यानक्षान्तिमुपदर्शयितुमाह—

मनो हन्तुममूर्तत्वान्न शक्यं केनचित्कचित्।

शरीराभिनिवेशात्तु चित्तं[2] दुःखेन बाध्यते॥ ५२॥

P 198 द्विविधं दुःखमविचारतो बाधकमुपजायते कायिकं मानसिकं चेति। तत्र मनसि
25 न कश्चिद्दण्डादिकं दातुं शक्तः, अमूर्तत्वान्मनसः। इति तदुद्भवं दुःखं परमार्थतो न संभवति। कल्पनाकृतं तु दौर्मनस्यादिकं विद्यते। एतदेव दर्शयति शरीरेत्यादिना। ममेदं शरीरमिति विकल्पाभ्यासवासनावशात् कायदुःखेन चित्तं विहन्यते॥

तत्रापि प्रतिनियतमेव दुःखकारणमित्याह—

न्यक्कारः परुषं वाक्यमयशश्चेत्ययं गणः।

30 कायं न बाधते तेन चेतः कस्मात्प्रकुप्यसि॥ ५३॥

---

१ Minayef reads आश्रयगुणः, but one of his Mss. and T support our reading. २ Poussin reads कायदुःखेन against Minayef which does not seem to be necessary.

न्यक्कारादिगणः समूहः कायस्य दुःखहेतुर्न भवति । न हि कायस्यायं कंचिदुपघातं करोतीति येन, तेन चेतः कस्माद्धेतोः प्रकुप्यसि ?

अथापि स्यात्—यदि नाम न्यक्कारादयः कायस्य बाधका न भवन्ति, तथापि तच्छ्रुत्वा मयि लोकानामप्रसन्नं चित्तमुत्पद्यते, इति मया नेष्यते इत्याशङ्क्याह—

मय्यप्रसादो योऽन्येषां स मां किं भक्षयिष्यति ।  5
इह जन्मान्तरे वापि येनासौ मेऽनभीप्सितः ॥ ५४ ॥

भवतु नाम एवम्, तथापि विचारणीयमेव । मयि न्यक्कारादिश्रवणाद् योऽयमप्रसादो जनानाम्, स किं मां भक्षयिष्यति इहलोके परलोके वा, येनासौ लोकाप्रसादो ममाप्रियः, इति विचार्य न कर्तव्योऽत्राभिनिवेशः ॥  P 199

अस्ति वा अत्राभिनिवेशकारणं लाभविघातो नामेत्याह—  10

लाभान्तरायकारित्वाद् यद्यसौ मेऽनभीप्सितः ।
नङ्क्ष्यतीहैव मे लाभः पापं तु स्थास्यति ध्रुवम् ॥ ५५ ॥

तथाहि न्यक्कारादिश्रवणादप्रसादो लोकानाम्, तस्माच्च लाभोपनामनवैमुख्यम् । ततोऽसौ न्यक्कारादिगणो ममानिष्ट इति चेत्, तदयुक्तम् । नङ्क्ष्यति विनश्वरधर्मतया अपगमिष्यति । इहैव प्रतिनियतैरेव दिनैर्मम लाभः । न तु परलोकानुबन्धी भविष्यति । तन्निमित्तं न्यक्कारादिकर्तृषु क्रुध्यतो यत्पापं तदेव परं स्थास्यति परलोकानुबन्धि भविष्यति । ध्रुवमिति अपरिभुक्ते तत्फले तस्याविनाशात् ॥  15

इदमपि चात्रालोचनीयम्—

वरमद्यैव मे मृत्युर्न मिथ्याजीवितं चिरम् ।
यस्माच्चिरमपि स्थित्वा मृत्युदुःखं तदेव मे ॥ ५६ ॥  20

इदमेव वरं श्रेष्ठं यल्लाभाभावादस्मिन्नेवाहनि मे मरणमस्तु, न तु पुनः परापकारद्वारेण लाभप्रतिलम्भान्मिथ्याजीवितं चिरं दीर्घकालम् । कुतः ? यस्माद्बहुतरकालमपि जीवित्वा मरणान्तं हि जीवितम् इत्यवश्यंभाविनो मृत्योर्दुःखं तदेव मम । यत्पश्चाद्वर्षशतात्यये भविष्यति, तदेवेदानीं मम म्रियमाणस्य इति चिरजीवितेष्वविशेषः ॥  P 200

इतोऽप्यविशेष एवेति श्लोकद्वयेन दर्शयन्नाह—  25

स्वप्ने वर्षशतं सौख्यं भुक्त्वा यश्च विबुध्यते ।
मुहूर्तमपरो यश्च सुखी भूत्वा विबुध्यते ॥ ५७ ॥
ननु[1] ( नूनं ? ) निवर्तते सौख्यं द्वयोरपि विबुद्धयोः ।
सैवोपमा मृत्युकाले चिरजीव्यल्पजीविनोः ॥ ५८ ॥

---

१ Minayef reads न तन्निवर्तते while one of his Mss. reads प्रवर्तते.

यथा कश्चित्स्वप्नोपलब्धं वर्षशतं सुखमुपभुज्य विबुध्यते, अन्यः पुनः क्षणमात्रम्। स तावन्मात्रेण सुखिनमात्मानं मन्यते। अनयोर्द्वयोरपि स्वप्नोपलब्धोपभुक्तसुखयोः प्रतिविबुद्धयोः सतोः तदुपलब्धं विनष्टं सुखं न निवर्तते, जाग्रदवस्थायां नानुवर्तते, स्मरणमात्रावशेषत्वात्। सैवोपमा स्वप्नोपलब्धसुखयोरिव पुरुषयोर्मृत्युकाले मरणसमये चिरजीविनोऽल्प-5 जीविनश्च। ननु निवर्तते सौख्यमिति स्वार्थेऽप्यण्। इत्यलं मिथ्याजीवितेन॥

अस्मादपि लाभालाभयोर्न कश्चिद्विशेष इत्युपदर्शयन्नाह—

P 201 **लब्ध्वापि च बहूंल्लाभान् चिरं भुक्त्वा सुखान्यपि।**
**रिक्तहस्तश्च नग्नश्च यास्यामि मुषितो यथा॥ ५९॥**

प्रचुरतरलाभान् लब्ध्वापि समासाद्य, चिरकालमुपभुज्य सुखान्यपि, पुनर्मृत्युमधि-10 गम्य रिक्तहस्तश्च तुच्छहस्तः। न तस्माल्लाभादीषदपि पाथेयं गृहीतम्। नापि सुखात् किंचित् परिशिष्टमवस्थितम्। कटिसूत्रकमात्रमपि न परिशेषितमिति नग्नश्च चौरैः परिमुषित इव अस्माल्लोकात्परं लोकं यास्यामि॥

स्यादेतत्—अस्त्येव विशेषो लाभस्य चीवरादीनामनुपघातादायुःसंस्काराणामुपस्तम्भाच्चिरतरकालं जीवितं स्यात्। ततश्च पूर्वकृतपापस्य विदूषणासमुदाचारादिना परि-15 क्षयं शिक्षासंवरपरिरक्षणेन बोधिचित्तसेवनादिना च कुशलपक्षस्य च वृद्धिं कुर्याम्। यदुक्तम्—

यावच्चिरं जीवति धर्मचारी
तावत्प्रसूते कुशलप्रवाहम्॥ इति॥

अतो लाभान्तरायकारिणि युक्त एव प्रद्वेष इत्याशङ्क्यन्नाह—

20 **पापक्षयं च पुण्यं च लाभाज्जीवन् करोमि चेत्।**

लाभादुक्तक्रमेण जीवन् ध्रियमाणः पापक्षयं च पुण्यं च करोमीत्यादि मन्यसे। ननु एतदितः समधिकं दोषमपश्यता अभिधीयत इत्याह—

P 202 **पुण्यक्षयश्च पापं च लाभार्थं क्रुध्यतो ननु॥ ६०॥**

लाभार्थं लाभनिमित्तं तदन्तरायकारिणि द्वेषं कुर्वतः सुकृतक्षय एवोपजायते। यदु-25 क्तम्—सर्वमेतत्सुचरितम् [ ६. १ ] इत्यादिना। अयं तु विशेषः—अक्षान्तिसमुद्भवस्य पापस्य राशिरभिवर्धते॥

अथापि स्यात्—यथाकथंचित् तावच्चिरकालं लाभाज्जीवितं स्यात्। तावतैव नः प्रयोजनमित्याह—

**यदर्थमेव जीवामि तदेव यदि नश्यति।**
30 **किं तेन जीवितेनापि केवलाशुभकारिणा॥ ६१॥**

न खलु बोधिसत्त्वस्य इतरसत्त्ववज्जीवितं निष्प्रयोजनमेवाभिलषितम्, किं तर्हि संभाराभिसंवर्धनार्थं पापक्षयार्थं च । तद् यदि सुकृतक्षयनिमित्तमेव तत् स्यात्, तदा किं तेन तादृशेन जीवितेनापि केवलाशुभकर्मकरणशीलेन ? निन्दितमेव तदिति भावः ॥

स्यादेतत्—न लाभान्तरायकारितया ममावर्णवादिनि प्रतिघचित्तमुत्पद्यते, किं तु गुणप्रच्छादनादिकर्मणा, दुःखहेतुत्वादित्याह— 5

अवर्णवादिनि द्वेषः सत्त्वान्नाशयतीति चेत्[१] ।
परायशस्करेऽप्येवं कोपस्ते किं न जायते ॥ ६२ ॥

अयशोभिधायिनि योऽयं भवतो विद्वेषः, सोऽवर्णवादी दोषाविष्करणाद्गुणप्रच्छादनाच्च त्वां नाशयति । इति मत्वा चेद्यदि तन्निमित्तकः । अथवा । सत्त्वान् लोकान्नाशयति । अवर्णवादेन मयि निग्राहयति । स्वयमप्रसन्नचित्तस्तेषामपि चित्तमप्रसादयतीत्यर्थः । इति 10 अवर्णवादिनि द्वेषश्चेत्, उच्यते । तदा योऽपि परेषामन्यसत्त्वानामयशः प्रकाशयति, तत्रापि कोपस्ते किं न जायते ? सोऽपि च अवर्णवादी सत्त्वान्नाशयति । तदस्मिन्नपि युक्तरूप एव कोपः ॥ P 203

अत्रोत्तरमाशङ्कयन्नाह—

परायत्ताप्रसादत्वादप्रसादिषु ते क्षमा । 15

परेषु अन्येषु सत्त्वेषु आयत्त आश्रितोऽप्रसादोऽस्य । अन्यसत्त्वान् विषयीकृत्य समुत्पन्न इति । तस्य भावस्तत्त्वं तस्मात् । पराश्रिताप्रसादत्वादप्रसादिषु अप्रसन्नचित्तेषु अवर्णवादिषु तव क्षमा क्षान्तिरुत्पद्यते । आत्मचित्तमेव पृच्छति । अत्राह—

क्लेशोत्पादपरायत्ते क्षमा नावर्णवादिनि ॥ ६३ ॥

यदि यः परायत्ताप्रसादः तत्र क्षमा भवतो भवति, तदा स्वस्मिन्नवर्णवादिनि किं न 20 क्षमा ? किंरूपे ? क्लेशोत्पादनपरायत्ते क्लेशानामुत्पादपरतन्त्रे । परायत्ताप्रसादत्वं क्षमाहेतुः तुल्यमुभयत्रापि इत्यर्थः ॥

प्रतिमाद्युपघातकारिषु श्रद्धावशादपि प्रतिघचित्तं नोत्पादयितव्यमित्याह— P 204

प्रतिमास्तूपसद्धर्मनाशकाक्रोशकेषु च ।
न युज्यते मम द्वेषो बुद्धादीनां न हि व्यथा ॥ ६४ ॥ 25

नाशका विकोपयितारः । आक्रोशका दोषबुद्ध्या वैरूप्याभिधायिनः । तेषु न युक्तो मम द्वेषः । कुतः ? यस्माद्बुद्धादीनां बोधिसत्त्वार्यश्रावकप्रत्येकबुद्धानां वितथाभिनिवेशप्रसूतात्मग्राहनिवृत्तेरभिष्वङ्गाभावान्न व्यथा चित्तपीडालक्षणं दौर्मनस्यं नास्ति । इति भावः । अतः प्रतिमाविनाशकेषु द्वेषचित्तं नोत्पादयितव्यम् । तथा विरुद्धधर्मकारिषु करुणैव तु युज्यते तेषु साधूनाम् । अन्यथा तत्र विशेषाभावात् पापमेव केवलमुपजायते । यदि 30 पुनर्धर्मतो निवारयितुं शक्यते, तदा न दोषः ॥

---

१ The Com. suggests two readings: स त्वां and सत्त्वान्.

यदपि च धर्मकामतया गुरुमातापित्राद्युपघातकारिषु द्वेषचित्तमुत्पद्यते, तदपि विनिवार्यमेवेत्याह—

**गुरुसालोहितादीनां प्रियाणां चापकारिषु ।**
**पूर्ववत्प्रत्ययोत्पादं दृष्ट्वा कोपं निवारयेत् ॥ ६५ ॥**

P 205 5 गुरवो धर्ममार्गोपदेष्टारोऽकुशलपक्षनिवर्तयितारः । सालोहिताः सोदराः । अन्येऽपि ज्ञातिसगोत्रबान्धवादयः । तेषामपकारिषु । तथा प्रियाणां प्रेमस्थानानां चापकारिषु कोपं निवारयेदिति संबन्धः । कथम्? पूर्ववत्प्रत्ययोत्पादं दृष्ट्वा । यदुक्तम्—ये केचिदपराधाश्च [ ६. १५ ] इत्यादिना । अतः सर्वेऽप्यमी पूर्वकर्मोपजनितमेव फलमुपभुञ्जते । नात्र कश्चित् प्रतीकारहेतुरस्ति । तदनेन यथा अपरसमये देवगुरुद्विजातिमातापितृप्रभृतीनामर्थे पापं 10 कुर्वतोऽपि न दोष इति मतम्, न तथा इहाभिमतमित्युक्तं भवति ॥

किं च । इदमपि वस्तुतत्त्वं मनसि कुर्वता न सत्त्वेषु चित्तं दूषयितव्यमित्याह—

**चेतनाचेतनकृता देहिनां नियता व्यथा ।**
**सा व्यथा चेतने दृष्टा क्षमस्वैनां व्यथामतः ॥ ६६ ॥**

समस्तकार्यस्य अन्वयव्यतिरेकाभ्यां जनकत्वेनावधारितं सामग्रीलक्षणं कारणम् । 15 सा च सामग्री वस्तुधर्मतया काचित् कचित् समर्थस्वभावा । तत्र चेतनेन कृता हस्तपादादिप्रहारेण । अचेतनेन दण्डशस्त्ररोगादिना । तत्रापि चेतनावद्व्यापारोऽस्त्येव । साक्षात् पारंपर्यकृतस्तु विशेषः । स्वयमेव यदृच्छया वा लोष्टकुड्याद्यभिघातजनिता वा देहिनां शरीरिणां नियता व्यथा नियमेन समुत्पद्यते । नान्यदितो व्यथाकारणमस्ति । सा चैवं द्विविधकारणसामग्रीप्रसूतापि चेतने सविज्ञानके काये दृष्टा प्रमाणपरिनिश्चिता । P 206 20 अतस्तदेव तदुत्पत्तिस्थानं नान्यत् । अचेतने वेदनायोगात् । ततो यद् यस्योत्पत्तिस्थानं तत् तत्रैव भवति नान्यत्र, यथा पङ्के पङ्कजं न स्थले । अतः अस्मान्न्यायात् क्षमस्व सहस्व एनामनन्तरकथितोभयरूपां व्यथाम् ॥

तदानीमुभयोरपि साधारणदूषणतया कचिदपि कोपो न युक्त इति कथयितुमाह—

**मोहादेकेऽपराध्यन्ति कुप्यन्त्यन्ये[1] विमोहिताः ।**
25 **ब्रूमः कमेषु निर्दोषं कं वा ब्रूमोऽपराधिनम् ॥ ६७ ॥**

आत्मात्मीयग्राहाभिनिवेशविपर्यासादेके केचिदपराध्यन्ति दण्डादिना । समाक्रोशादि वा वदन्तः सदोषमात्मानं कुर्वन्ति । अन्ये पुनस्तदपराधेन कुप्यन्ति । विमोहिता मोहादेव स्वकृतकर्मफलसंबन्धमननुसरन्तोऽविद्यावरणात्, प्रतिताडनाक्रोशादिकमारभन्ते । इत्थं ब्रूमः— कम् एषु क्लेशराक्षसावेशवशीकृतेषु निर्दोषम्, कं वा ब्रूमोऽपराधिनम्? उभयेषामपि 30 साधारणदोषत्वात् ॥

---

१ Minayef reads: अन्येऽपि मोहिताः for अन्ये विमोहिताः.

इदमपि च आत्मगतमेव चिन्तयता प्रतिघचित्तं निवर्तयितव्यमित्याह—

कस्मादेवं कृतं पूर्वं येनैवं बाध्यसे परैः ।
सर्वे कर्मपरायत्ताः कोऽहमत्रान्यथाकृतौ ॥ ६८ ॥

कस्मात्कारणात् किमित्येवम् एतत्फलं हेतुकर्म कृतम् । येनेति लोकोक्तिरेषा P 207 यदित्यस्यार्थे । यदेवम् । यदि वा येन कर्मसामर्थ्येन हेतुना । आक्रोशबन्धनताडनादिभिः 5 बाध्यसे पीड्यसे परैरन्यैः । ननु यदि नाम एवम्, तथापि प्रतीकारो युक्त इत्याह—सर्वे इत्यादि । सर्वे दुःखहेतवः कर्मप्रत्ययोपजनितप्रवृत्तयः इति कोऽहमत्र अन्यथाकृतौ तत्फलनिवर्तनाय ? न कश्चित् । फलदानोन्मुखस्य कर्मणः केनचिन्निवर्तयितुमशक्यत्वात् ॥

इदं पुनरत्र युक्तरूपमित्याह—

एवं बुद्ध्वा तु पुण्येषु तथा यत्नं करोम्यहम् । 10
येन सर्वे भविष्यन्ति मैत्रचित्ताः परस्परम् ॥ ६९ ॥

एते सत्त्वाः कर्मक्लेशपरायत्ताः परस्परमसमञ्जसकर्मकारिणो निवर्तयितुमशक्या इति । एवं बुद्ध्वा ज्ञात्वा पुनः पुण्येषु कुशलेषु कर्मसु तथा यत्नं करोम्यहम्, तेन प्रकारेण वीर्यं समारभे, येन तथाविधं सामर्थ्यं प्रतिलभ्य सन्मार्गे प्रवर्तिताः सन्तः सर्वे मैत्रचित्ता हितसुखविधानतत्पराः परस्परमन्योन्यं भविष्यन्ति ॥ 15

द्रोहचित्तं विनिवर्त्य प्रियवस्तूपघातकारिणि लौकिकोदाहरणेन द्वेषं निवर्तयेदिति श्लोकद्वयमुपदर्शयन्नाह—

दह्यमाने गृहे यद्वदग्निर्गत्वा गृहान्तरम् । P 208
तृणादौ यत्र सज्येत तदाकृष्यापनीयते ॥ ७० ॥
एवं चित्तं यदासङ्गाद्दह्यते द्वेषवह्निना । 20
तत्क्षणं तत्परित्याज्यं पुण्यात्मोद्दाहशङ्कया ॥ ७१ ॥

एकस्मिन् गृहेऽग्निना दह्यमाने यथा तस्माद् गृहादन्यद् गृहं गृहान्तरं गत्वा । अग्निर्यत्र तृणकाष्ठादौ सज्जते लगति, तदन्तर्गतमन्यदपि वस्तु मा धाक्षीदिति शङ्कया तदाकृष्यापनीयते, पृथक् कृत्वा निर्धार्यते, इति दृष्टक्रमं प्रकृतेऽपि योजयन्नाह । एवमुक्तोदाहरणन्यायेन चित्तं मनो यस्य वस्तुन आसङ्गादासक्तो दह्यते परितप्यते द्वेषवह्निना 25 प्रतिघानलेन तदासङ्गस्थानं वस्तु तत्क्षणं न कालान्तरपरिलम्बेन परित्याज्यं तत्राभिनिवेशः परिहर्तव्यः । किं कारणम् ? पुण्यस्यात्मा शरीरम् । पुण्यस्कन्ध इति यावत् । तस्य उक्तक्रमेण उद्दाहः परिक्षयो मा भूत् । अन्यथा गृहान्तर्गतपदार्थवत् प्रद्वेषवह्निः तमपि दहेत् ॥

अपि च । लाभ एवायं लब्धः, यन्मनुष्यदुःखैर्नरकफलं कर्म विपच्यते इति प्रतिपादयन्नाह— 30

मारणीयः करं छित्त्वा मुक्तश्चेत्किमभद्रकम् ।
मनुष्यदुःखैर्नरकान्मुक्तश्चेत्किमभद्रकम् ॥ ७२ ॥

P 209 यो हि मारणमर्हति, स यदि हस्तमात्रं छित्त्वा मुच्यते, तदा न काचित् क्षतिरस्य । प्रत्युत लब्धलाभमात्मानं मन्यते अत्यल्पमिदं मरणदुःखात् करच्छेदनदुःखमिति । तथा योऽपि मनुष्यदुःखं ताडनबन्धनतिरस्कारादिकृतमनुभूय नरकदुःखाद्विमुक्तो भवति, तस्यापि न किंचिदपचीयते । न किंचिदिदं दुःखं नरकदुःखात्, सुखमेव तत् । ततो यदि 5 विचक्षणः स्यात्, तदा सौमनस्यमेवात्र युक्तमस्य ॥

अथापि स्यात्—न मया स्वल्पमात्रेऽपि दुःखे क्षमा कर्तुं शक्यत इति, अत्राह—

**यद्येतन्मात्रमेवाद्य दुःखं सोढुं न पार्यते ।**
**तन्नारकव्यथाहेतुः क्रोधः कस्मान्न वार्यते ॥ ७३ ॥**

खटचपेटलोष्टादिप्रहारकृतमीषन्मात्रमपि दुःखमिदानीं सोढुं मर्षितुं न पार्यते न 10 शक्यते । तदत्र भवन्तं पृच्छामः—यदि एवमेव, तदयं नारकदुःखसंवर्तनीयः क्रोधः कोपः कस्मात्कारणान्न वार्यते ? अयमेव हि अतितरां नरकेषु दुःखदायक इति दुःखभीरूणामेव क्रोधं निवर्तयितुं युक्तं स्यात् ॥

किं च । यद्यपि सोढुं न शक्यते, तथापि तद्धेतुककर्मसंभवादनिच्छतोऽपि दुःखमापतिष्यति भवतः । न च किंचित्फलमुत्पत्स्यते । मर्षणात् पुनस्तस्य महार्थलाभो P 210 15 भविष्यतीति वृत्तद्वयेन शिक्षयितुमाह—

**कोपार्थमेवमेवाहं नरकेषु सहस्रशः ।**
**कारितोऽस्मि न चात्मार्थः परार्थो वा कृतो मया ॥ ७४ ॥**
**न चेदं तादृशं दुःखं महार्थं च करिष्यति ।**
**जगद्दुःखहरे दुःखे प्रीतिरेवात्र युज्यते ॥ ७५ ॥**

20 कोपनिमित्तमेव । एवमेव निष्फलमेव । नरकेषु संजीवादिषु । सहस्रशः अनेकवारम् । अहं कारितः छेदनभेदनपाटनादिकारणाभिः पीडितः । एवं दुःखमनुभवतापि मया न च नैव आत्मार्थः दृष्टादृष्टफलसाधनः कृतो निष्पादितः । परस्य अन्यस्य वा अर्थः सुखविधानलक्षणः । इति निष्प्रयोजनमेव नारकदुःखसहस्रशः परिभवो जातः । तदद्यापि न तथैव ममासहिष्णुता युक्तेत्याह—इदं दुःखं नैव तादृशं यादृशं नरकसमुद्भवम् । अथ च 25 महार्थं सर्वसत्त्वहितसुखविधानभूतं बुद्धत्वं साधयिष्यति । अतो जगतो दुःखहरे त्रिजगत्पर्यापन्नसर्वसत्त्वदुःखप्रशमनकरे दुःखे प्रीतिरेवात्र युज्यते नारुचिरिति भावः ॥

परगुणश्रवणेर्ष्यामलप्रक्षालनायाह—

P 211 **यदि प्रीतिसुखं प्राप्तमन्यैः स्तुत्वा गुणोर्जितम् ।**
**मनस्त्वमपि तं स्तुत्वा कस्मादेवं न हृष्यसि ॥ ७६ ॥**

30 गुणाधिकं स्तुत्वा यदि प्रीतिसुखं कैश्चित् प्राप्तम्, तदा हे मनः त्वमपि तद्गुणसंवर्णनेन किमिति हर्षसुखं नानुभवसि ? किमकाण्डमेव तदीर्ष्यानलज्वालायामात्मसंतानमिन्धनीकरोषि ?

ननु सर्वसुखमासङ्गात्मतया निषिद्धमेव सेवितुम्। ततः अहं सर्वसुखवैमुख्यादिदमपि नोपाददे। वक्ष्यति हि—

यत्र यत्र रतिं याति मनः सुखविमोहितम्।
तस्मात्सहस्रगुणितं दुःखं भूत्वोपतिष्ठते॥ इति।

[बोधि० ८. १८] 5

आह—

**इदं च ते हृष्टिसुखं निरवद्यं सुखोदयम्।**
**न वारितं च गुणिभिः परावर्जनमुत्तमम्॥ ७७॥**

न हि सर्वं हृष्टिसुखमपाकृतम्, अपि तु यत् सावद्यमकुशलहेतुः। इदं च परगुणाश्रयं हृष्टिसुखं निरवद्यं तव, न च अकुशलहेतुः। अतः सुखोदयं सुखस्योदयोऽस्मादिति 10 कृत्वा। अत एव न वारितं च गुणिभिर्भगवच्छासनविधिज्ञैः। अयमपरोऽस्य गुणः, यत् P 212 परावर्जनमुत्तमं परगुणेषु प्रीत्या। गुणेषु एवमयं मत्सरीति मन्यमाना अन्येऽपि सत्त्वा आवर्जिता भवन्ति, अतो युक्तमेवात्र प्रीतिसुखमुपादातुम्॥

स्यादेतत्—न परगुणेषु अक्षमा काचिन्मम। किं तर्हि तावत्तस्यैव सुखमेतदिति मया सोढुमशक्यमिति। अत्राह— 15

**तस्यैव सुखमित्येवं तवेदं यदि न प्रियम्।**
**भृतिदानादिविरतेर्दृष्टादृष्टं हतं भवेत्॥ ७८॥**

तस्यैव स्तुतिकर्तुः सुखमिति एवमनेनाभिप्रायेण भवतो यदि इदं परगुणस्तुतिप्रतिसमुद्भवं सुखं न प्रियम्, तदा अतिसंकटे पतितोऽसि। कथम्? भृतिदानादिविरतेः। यदपि च भवतः स्वात्मसुखनिमित्तं स्वभृत्यादिषु भृतिदानं कर्ममूल्यदानम्, तथा उपकारकारिणि 20 प्रत्युपकारकरणम्। इत्यादेर्विरतेर्वैमुख्यात्, तदपि न कर्तव्यमेव स्यात् परसुखविद्वेषिणा। यतस्तेनापि तस्य सुखमेव संपत्स्यते। ततो दृष्टमैहिकं फलम्, अदृष्टं पारलौकिकम्। उभयमपि हतं भवेत् परसुखसंपदमर्षिणा॥

किं च। मिथ्योत्तरमेवेदं भवत इति प्रतिपादयन्नाह—

**स्वगुणे कीर्त्यमाने च परसौख्यमपीच्छसि।** 25
**कीर्त्यमाने परगुणे स्वसौख्यमपि नेच्छसि॥ ७९॥**

यदि कश्चिद्भवतो गुणमुदीरयति, तदा तस्य परस्यानिष्टमपि सौख्यमिच्छसि। अथ P 213 परगुणाननुवर्णयति, तदा पुनरीर्ष्याशल्यवितुद्यमानमानसः स्वसौख्यमपि नेच्छसि। आस्तां तावत् परसौख्यमित्यपिशब्दः। तस्मात् परसुखसंपदीर्ष्यैव भवतः, न स्तावकसुखासहिष्णुता॥

यदुक्तम्— 30

तस्यैव सुखमित्येवं तवेदं यदि न प्रियम्। इति।

[बोधि० ६.७८]

तत्र विशेषेण दूषणमाह—

बोधिचित्तं समुत्पाद्य सर्वसत्त्वसुखेच्छया।
स्वयं लब्धसुखेष्वद्य कस्मात्सत्त्वेषु कुप्यसि ॥ ८० ॥

इदमतिगर्हितमेव विशेषेण समुत्पादितबोधिचित्तस्य, यत् परसुखसंपदसहिष्णुता 5 नाम। यतः सर्वसत्त्वाः त्रैधातुकान्तश्चराः समस्तसुखसंपत्तिसंतर्पिता बुद्धत्वमधिगम्य मया कर्तव्याः इति मनसिकारेण बोधिचित्तमुत्पाद्यते। तदुत्पाद्य कस्मात् सत्त्वेषु कुप्यते? अद्य इदानीम्। किंभूतेषु प्रसादस्थानेषु? स्वचित्तमभिप्रसाद्य स्वयमात्मनैव प्राप्तसुखेषु। इति अकरणीयमेव तत् परसुखवैमुख्यचित्तं बोधिसत्त्वस्येति भावः॥

P 214 यः पुनरुत्पादितबोधिचित्तोऽपि परस्य लाभसत्कारसंपत्तिमभिसमीक्ष्य तदीर्ष्या- 10 कषायितहृदयः तेनैव शोकेन दह्यते, तस्य परिभाषणार्थमाह—

त्रैलोक्यपूज्यं बुद्धत्वं सत्त्वानां किल वाञ्छसि।
सत्कारमित्वरं दृष्ट्वा तेषां किं परिदह्यसे[1] ॥ ८१ ॥

अथवा स्यादेतत्—न खलु मया तत्सुखमेव न मृष्यते, किं तर्हि तदुद्भावितान्यगुण- श्रवणाभिप्रसन्नमानसैः तेषामुपनामितं लाभसत्कारमित्यत्राह—त्रैलोक्येत्यादि। त्रयो लोका 15 एव कामरूपारूप्यधातुलक्षणाः लोकप्रसिद्ध्या वा स्वर्गादिस्वभावाः त्रैलोक्यम्, तत्समुदायो वा। तस्य पूजामर्हतीति पूज्यमभ्यर्चनीयम्। अनेन सर्वातिशायित्वं प्रतिपादितम्। तथाभूतं बुद्धत्वं सत्त्वानां किल वाञ्छसि। किलेत्यनेन विपर्ययं दृष्ट्वा अरुचिं प्रकाशयति। सत्कार- मित्युपलक्षणम्। लाभमपि। शेषं सुबोधम्॥

लाभमभिसंधायाह—

20 पुष्णाति यस्त्वया पोष्यं तुभ्यमेव ददाति सः।
कुटुम्बजीविनं लब्ध्वा न हृष्यसि प्रकुप्यसि ॥ ८२ ॥

P 215 त्वया पोषणीयं प्रियपुत्रकादिकं त्वदीयं यः पुष्णाति, स तुभ्यमेव ददाति। तवैव तेनोपचयः कृतो भवेत्। अतः त्वत्कुटुम्बजीविनं त्वदीयं कुटुम्बं जीवयति यः, तं तथा- विधं पुरुषं लब्ध्वा प्राप्य प्रहृष्यसि न? काका पृच्छति—प्रकुप्यसि, न प्रहृष्यसे चेत्यर्थः। 25 तथा प्रकृतेऽपि येन सर्वसत्त्वा आत्मीयत्वेन गृहीताः, तस्य तत्सुखैः सुखमेवोचितमिति॥

स्यादेतत्—बुद्धत्वमेव त्वया तेषां प्रतिज्ञातम्, न तु पुनरन्यसुखमित्याशङ्क्याह—

स किं नेच्छसि सत्त्वानां यस्तेषां बोधिमिच्छति।

ननु एतदपि न सम्यक्। यस्मात्—

जगदद्य निमन्त्रितं मया
30 सुगतत्वेन सुखेन चान्तरा॥

[ बोधि० ३. ३३ ]

---

1 Minayef reads: परिवृज्यसे.

इति प्रतिज्ञातम् । भवतु नाम एवम्, तथापि यः समुत्पादितबोधिचित्तः तेषां सत्त्वानां बोधिं बुद्धत्वमिच्छति, स किमन्यलौकिकलोकोत्तरमर्थजातं नेच्छति ? अथ नैवमिष्यते, तदा बोधिचित्तमपि हीयते इत्याह—

बोधिचित्तं कुतस्तस्य योऽन्यसंपदि कुप्यति ॥ ८६ ॥

बोधिचित्तं कुतस्तस्य ? मिथ्यैव बोधिचित्तप्रतिज्ञस्य । कस्य ? योऽन्यसंपदि कुप्यति । 5
इतरविभूतौ लाभसत्कारप्रसूतायाम्, इति मर्मचोदना बोधिसत्त्वस्य कुशलकर्मनिवृत्तिहेतुः ॥ P 216

अपि च । अपरस्य लाभसत्कारसंपदभावेऽपि न भवतस्तद्भावसंभवः । तत्किमकारणमेव तद्विद्वेषिणा आत्मघाताय यत्नः क्रियते इति प्रतिपादयन्नाह—

यदि तेन न तल्लब्धं स्थितं दानपतेर्गृहे ।
सर्वथापि न तत्तेऽस्ति दत्तादत्तेन तेन किम् ॥ ८४ ॥ 10

यदि नाम तेन तत्र अक्षमाविषयेण सत्त्वेन तद्दीयमानं वस्तु न लब्धम्, तथापि स्थितं दानपतेर्गृहे । भवतस्तु किं तस्माज्जातम् ? सर्वथापि तेन लब्धेन गृहावस्थितेन वा न तद्वस्तु तवास्ति । इति दत्तादत्तेन ते किम् ? न किंचित् प्रयोजनं भवतः । अतस्तत्र उपेक्षैव युक्ता विदुषः ॥

किं च । इदमपि तावत् परिभाव्यतामित्युपदर्शयन्नाह— 15

किं वारयतु पुण्यानि प्रसन्नान् स्वगुणानथ ।
लभमानो न गृह्णातु वद केन न कुप्यसि ॥ ८५ ॥

योऽसौ अतिप्रसन्नैर्दायकदानपतिभिर्लाभसत्कारैः पूज्यते, स किं वारयतु पुण्यानि पूर्वजन्मकृतानि विपाकोन्मुखानि, यद्वशात्तस्य लाभसत्काराः । उत प्रसन्नान् दायकदानपतीन् वारयतु, अथ स्वगुणान् वारयतु, यानाश्रित्य एषां प्रसादो जातः । मा प्रसादमप्येषां जनयिष्यथेति । अथवा । लभमानोऽपि तेभ्यो न स्वीकरोतु । ब्रूहि केन प्रकारेण अत्र न भवतोऽपरितोषः स्यात् । तत्र पुण्यादीनां वारयितुमशक्यत्वात् लभ्यमानाग्रहणेऽपि सर्वथापि न तत्तेऽस्तीत्यादिना बाधकस्योक्तत्वादिति न किंचित् परितोषकारणमस्ति ॥ P 217 20

अथापि स्यात्—परस्यैव लाभसत्कारसंपत्तिरस्ति, न मम । अथ मम नास्ति, तदा परस्यापि मा भूत्, इत्येतन्ममासंतुष्टिनिबन्धनमित्याशङ्क्याह— 25

न केवलं त्वमात्मानं कृतपापं न शोचसि ।
कृतपुण्यैः सह स्पर्धामपरैः कर्तुमिच्छसि ॥ ८६ ॥

सुबोधम् । "यत् किंचिद्दुःखं तत्सर्वं पापसमुद्भूतम् । अभिलाषविघातोऽपि दुःखम् । यदपि पर्येषमाणो न लभते, तदपि दुःखम्" इति वचनात् । यद्वक्ष्यति—

अभिलाषविघाताश्च जायन्ते पापकारिणाम् । इति । 30

[ बोधि० ७. ४१ ]

---

१ Minayef reads अपरां for अपरैः.

यत् किंचित् सुखं तत् सर्वं पुण्यप्रसूतम्। इति सुखाभिलाषिणा शुभे कर्मणि उद्योगः करणीयः। यद्वक्ष्यति—

पुण्यकारिसुखेच्छा तु... इत्यादि।

[बोधि० ७. ४२–४३]

P 218 5 इति कथं कृतपुण्यैः सह स्पर्धा युज्यते? सुकृतक्रियायामेव तत्सुखाभिलाषिणां स्पर्धा युक्तेत्यर्थः॥

अपि च। इदमपि प्रष्टव्योऽसि—

**जातं चेदप्रियं शत्रोस्त्वत्तुष्ट्या किं पुनर्भवेत्।**

तव शत्रोर्द्वेषविषयस्य त्वदभिलाषमात्रेण अप्रियमनिष्टं जातमुत्पन्नं चेद् यदि, 10 एतावता भवतः किं पुनर्भवेत्? भवतु तावत् तस्यानिष्टम्, अन्यस्य तु भवतु, मा वा। मम किंचिदेव तावन्मात्रेण प्रयोजनमिति पराभिप्रायमाशङ्क्याह—

**त्वदाशंसनमात्रेण न चाहेतुर्भविष्यति॥ ८७॥**

तवाशंसनम् इच्छा। अभिलाष इति यावत्। तावन्मात्रेण न चाहेतुः, न विद्यते हेतुरस्य, इत्यहेतुरर्थो भविष्यति॥

15 अप्रियस्य भवतु नाम एवमित्यभ्युपगम्योच्यते—

**अथ[1] त्वदिच्छया सिद्धं तद्दुःखे किं सुखं तव।**

यदि नाम तवेच्छया सिद्धं निष्पन्नमप्रियं शत्रोः, तथापि तस्य दुःखे समुत्पन्ने किं सुखं तव? न किंचित्। निष्प्रयोजनमिदमभिप्रेतमिति यावत्। ननु इदमेव प्रयोजनं यत् तद्दुःखे मम संतुष्टिरित्यत आह—

P 219 20 **अथाप्यर्थो भवेदेवमनर्थः को न्वतः परः॥ ८८॥**

एवमपि परदुःखपरितोषे यदि अर्थः प्रयोजनं भवेत्, तदा अतः परः अनर्थः को नु? नुरित्यतिशये। अयमेवानर्थो महानित्यर्थः॥

कथं पुनरयमनर्थ इत्याह—

**एतद्धि बडिशं घोरं क्लेशबाडिशिकार्पितम्।**

25 **यतो नरकपालास्त्वां क्रीत्वा पक्ष्यन्ति कुम्भिषु॥ ८९॥**

यस्मादेतदिदमेवंविधं परानर्थचित्तं बडिशं घोरं महाभयंकरम्। किंभूतम्? क्लेशबाडिशिकार्पितम्। क्लेशा एव बडिशेन चरन्तीति बाडिशिकाः तैरर्पितमादत्तम्। यतः क्लेशबाडिशिकात्। बाडिशिकादिव मत्स्यम्। नरकपाला यमपुरुषाः त्वां क्रीत्वा पक्ष्यन्ति पक्ष्यन्ते। क्वचिन्नीत्वेति पाठः। कुम्भिषु नरकविशेषेषु। तस्मादत्राभिलाषं मा 30 कार्षीरिति भावः॥

---

[1] Poussin and Minayef read अतः for अथ.

यदपि स्तुत्यादिविघाते दुःखमुत्पद्यते, तदपि अविवेचयत एवेत्युपदेशयन्नाह—

**स्तुतिर्यशोऽथ सत्कारो न पुण्याय न चायुषे ।**
**न बलार्थं न चारोग्ये न च कायसुखाय मे ॥ ९० ॥**
**एतावांश्च भवेत्स्वार्थो धीमतः स्वार्थवेदिनः ।** P 220

पञ्चप्रकार एवार्थः पुरुषार्थत्वेनाभिमतो विदुषाम् । तद्यथा—पुण्यम्, आयुर्वृद्धिः, 5 बलवृद्धिः, आरोग्यलाभः, कायसुखं चेति । न चैतेषु क्वचिदुपयुज्यन्ते स्तुत्यादयः । इयानेव हि स्वार्थो भवतो भवेत् प्रज्ञावतः स्वार्थवेदिनः । अन्यस्य पुनरन्यथापि भवेत्, इति आत्मनि परामृशति । जानन्तु यद्यपि स्वार्थम्, तथापि स्वार्थवेदिनः अनुपायत्वात् पृथगुपदर्शितः । धीमत इत्यनेन तदसङ्गतया तदपि कथितम् ॥

ननु मानसमपि सुखमस्ति, तेन अवधारणमयुक्तमित्यत्राह— 10

**मद्यद्यूतादि सेव्यं स्यान्मानसं सुखमिच्छता ॥ ९१ ॥**

मानसं सुखं सौमनस्यम् । तदिच्छता मद्यं द्यूतं गणिका पारदारिकं सेवनीयं स्यात् । यत्पुनः सद्धर्मश्रवणात् सौमनस्यम्, तत् पुण्यग्रहणेन संगृहीतमित्यदोषः । तस्मात् सौमनस्यहेतुर्भवतोऽपि स्तुत्यादयो बालजनानन्दकारिणोऽनुपादेया एव ॥

इत्थमपि बालजनोल्लापकारिणः स्तुत्यादय इत्याह— 15

**यशोर्थं हारयन्त्यर्थमात्मानं मारयन्त्यपि ।**

केचिन्मोहपुरुषाः तादृशगुणात् स्वयमतिसुदूरे वर्तमाना अपि शक्रादिगुणैः स्तूयमाना वन्दिजनैरन्यैश्च प्रोत्फुल्लनयनवदना यशोर्थिनो हस्त्यश्वादिधनं तृणवत् तेभ्यः प्रयच्छन्ति । P 221 तथा तैरेव गुणैः संभावितात्मनामपि शक्रवत् शत्रुविजयसमुद्भूतं यशो मम जगति विपुलतां गमिष्यति, इत्यभिनिवेशाद्दुःसहसंग्रामारोहणान्मारयन्ति । 20

न चात्र परमार्थतः किंचित् प्रयोजनम्, अन्यत्र मिथ्याविकल्पादिति प्रतिपादयन्नाह—

**किमक्षराणि भक्ष्याणि मृते कस्य च तत्सुखम् ॥ ९२ ॥**

स्तुत्याद्यभिधायकानि अक्षराणि वर्णाः किं भक्ष्याणि चर्वितव्यानि ? यशोर्थं मृते सति कस्य च तत् सुखं यशःश्रवणसमुत्थम् ?

तस्माद्बालक्रीडासमानमेतदित्युपदर्शयन्नाह— 25

**यथा पांशुगृहे भिन्ने रोदित्यार्तरवं शिशुः ।**

यथा कश्चिद् बालो धूलिमयगृहेण परमपरितोषेण परिक्रीडमानः केनचित् तस्मिन् भग्ने महद्दुःखेन परिगृहीतः परमार्तिपीडित इव मद्गृहं भग्नमिति करुणस्वरं क्रन्दति, सैवोपमा अत्रापि इत्याह—

**तथा स्तुतियशोहानौ स्वचित्तं प्रतिभाति मे ॥ ९३ ॥** 30

तथैव स्तुतियशोहानौ विघाते स्वचित्तं दुःखमाविशत् प्रतिभासते विचारयतो मम । अत्रापि न वस्तुसता केनचिद् विप्रलम्भ इति परामर्ष्टव्यम् ॥

P 222 पुनरन्यथा विचारेण बालधर्म एवायमिति चतुर्भिः श्लोकैः परामृशयन्नाह—

शब्दस्तावदचित्तत्वात् स[1] मां स्तौतीत्यसंभवः।

शब्दो वर्णात्मको बाह्यार्थतया अचित्तः अचेतनः। तस्य भावः तस्मात्। स शब्दो मां स्तौति मदीयं वर्णमुदीरयति। असंभवः न संभवत्येतत्। तत् कथं सौमनस्यं जायते 5 इत्याह—

परः किल मयि प्रीत इ[2]त्येतत्प्रीतिकारणम्॥ ९४॥

अन्यः पुरुषश्चेतनात्मकः। किलेति निरर्थकमेतदपीत्यरुचिप्रतिपादकम्। मयि प्रीतः अभिप्रसन्नः इत्येतदभिसंधानं प्रीतिकारणम्।

तत्राप्येवमसंबन्धात्केवलं शिशुचेष्टितम्।

10 [बोधि० ६. ९७]

इति संबन्धः॥

असंबन्धमेव कल्पयन्नाह—

अन्य[3]त्र मयि वा प्रीत्या किं हि मे परकीयया।

तस्यैव तत्प्रीतिसुखं भागो नाल्पोऽपि मे ततः॥ ९५॥

P 223 15 यस्मादन्यस्मिन् मयि वा प्रीत्या परसंतानवर्तिन्या किमायातं मम? न किंचित्। कुतः? तस्यैव ततो य एव प्रीतः स्तुतिकर्ता, तत् प्रीतिसुखं नान्यस्य। अतो भागो नाल्पोऽपि ईषदपि मम ततः परसंतानवर्तिनः प्रीतिसुखात्॥

स्यादेतत्—परसुखेनैव सुखित्वं बोधिसत्त्वानाम्। तत् किमिति ततो भागो नास्तीति? अत्राह—

20 तत्सुखेन सुखित्वं चेत्सर्वत्रैव ममास्तु तत्।

कस्मादन्यप्रसादेन सुखितेषु न मे सुखम्॥ ९६॥

यदि परसुखेन सुखित्वम्। तदा तस्मिन्नन्यत्र प्रसादेन सुखितेऽपि ममास्तु तत्सुखित्वम्। किमात्मन्यभिप्रसादेन प्रीते परस्मिन् प्रीतिः? न त्वन्यस्मिन् प्रसादेन सुखितेषु मम सुखम्॥

25 तस्माद्वचनमात्रमेवैतत्, न परमार्थ इति दर्शयितुमाह—

तस्मादहं स्तुतोऽस्मीति प्रीतिरात्मनि जायते।

तत्राप्येवमसंबन्धात् केवलं शिशुचेष्टितम्॥ ९७॥

P 224 तदन्यनिमित्ताभावात् अहं स्तुत इत्येवं विकल्पनात् प्रीतिरात्मनि जायते, न पुनः परसुखेन सुखित्वात्। तत्रापि न केवलमन्यप्रसादेन सुखिते सति। आत्मन्यपि एवमुक्त-30 क्रमेण असंबन्धादप्रत्यासत्तेः कारणात् केवलं बालविलसितमेतत्॥

---

१ ŚS. p. 141 reads मां स्तौतीति न संभवः. २ ŚS. p. 141 reads इत्ययं मे मतिभ्रमः. ३ Cf. ŚS. p. 141.

अपि च । स्तुत्यादयो मम अपचयमेव दधतीत्युपदर्शयन्नाह—

स्तुत्यादयश्च[१] मे क्षेमं संवेगं नाशयन्त्यमी ।
गुणवत्सु च मात्सर्यं संपत्कोपं च कुर्वते ॥ ९८ ॥

अमी स्तुत्यादयः मम क्षेमं कल्याणम् । अथ क्षेमं कुशलपक्षपरिपालनम् । तथा संवेगं संसारदुःखनिर्वेदनम् । नाशयन्ति घ्नन्ति । न तावन्मात्रमेव,[२] किं तु गुणवत्सु च 5 मात्सर्यम् । आत्मनि गुणाधिकमानेन परगुणप्रच्छादनात् । तद्गुणासहनतया वा संपदि लाभसत्कारादिस्वभावायां कोपं च अमर्षं कुर्वते तेष्वेव । अहमेव गुणाधिकः, ममैव सर्वा संपत्तिरुचिता नान्येषामिति मत्वा ॥

यत एते दोषाः स्तुत्यादिषु संभविनः,

तस्मात्स्तुत्यादिघाताय मम ये प्रत्युपस्थिताः । 10
अपायपातरक्षार्थं प्रवृत्ता ननु ते मम ॥ ९९ ॥

तस्मात् कारणात् । स्तुत्यादिघाताय विरोधाय ये सत्त्वा मम प्रत्युपस्थिता उद्यताः । P 225 अपायपातो नरकादिपतनम् । ततो रक्षार्थं त्राणार्थं रक्षणनिमित्तं प्रवृत्ता उद्युक्ता ननु ते मम । अतः कल्याणमित्राणि ते, नापकारिण इति ॥

लाभादिविरोधिनि सर्वथा प्रतिघचित्तमयुक्तं मम इत्युपदर्शयितुमाह— 15

मुक्त्यर्थिनश्चायुक्तं मे लाभसत्कारबन्धनम् ।
ये मोचयन्ति मां बन्धाद्द्वेषस्तेषु कथं मम ॥ १०० ॥

विमुक्तिकामस्य लाभसत्कारौ बन्धनमिव, सङ्गस्थानत्वात्, अयुक्तं नोचितं मुमुक्षोर्बन्धनम् । कल्याणमित्रकृत्यकारिणः शत्रुत्वेनाभिमता विमोचयन्ति वियोजयन्ति मां बन्धात् संसारदुःखलक्षणात् लाभादिस्वभावाद्वा । द्वेषस्तेषु परमोपकारिषु प्रीतिस्थानेषु 20 कथं मम ? न युक्त इत्यभिप्रायः ॥

कथं न युक्तमित्याह—

दुःखं प्रवेष्टुकामस्य ये कपाटत्वमागताः ।
बुद्धाधिष्ठानत इव द्वेषस्तेषु कथं मम ॥ १०१ ॥

लाभसत्काराभिष्वङ्गप्रसङ्गात् संसारदुःखैर्विमोक्तुकामस्य ये सत्पुरुषविशेषाः कपाटत्व- 25 मपद्वारत्वमागताः । कुतः ? बुद्धानामधिष्ठानतोऽनुभावादिव । द्वेषस्तेषु कथं मम ?

कुशलापघातकारिण्यपि द्वेषं निवारयन्नाह— P 226

पुण्यविघ्नः कृतोऽनेनेत्यत्र कोपो न युज्यते ।
क्षान्त्या समं तपो नास्ति नन्वेतत्तदुपस्थितम् ॥ १०२ ॥

१ Minayef reads स्तुत्यादयो न मे क्षेमं. २ Ms. एतावन्मात्रमेव. Our reading is based T.

कुशलविघातः कृतोऽनेन इत्येवं मनसि निधाय अत्र पुण्यविघातकारिणि द्वेषो न युज्यते । कस्मात् ? यतः क्षान्त्या तितिक्षया समं तुल्यं तपः सुकृतं नास्ति सर्वशुभकर्महेतुत्वात् । "न च क्षान्तिसमं तपः" ( बोधि० ६. २ ) इति वचनात् । ननु तदेवेदमयत्नत एव उपस्थितमुपनतम् । पुण्यविघ्नकारिच्छलेन पुण्यहेतुसंनिधेः ॥

5 तत्र प्रद्वेषे तु आत्मनैव पुण्यविघातः कृतो भवेदित्याह—

अथाहमात्मदोषेण न करोमि क्षमामिह ।
मयैवात्र कृतो विघ्नः पुण्यहेतावुपस्थिते ॥ १०३ ॥

अथ यदि आत्मन एव दोषेण असहिष्णुतात्मकेन न करोमि क्षमां क्षान्तिमिह विघ्नकारिणि, तदा मयैव न पुनरन्येन अत्र पुण्ये कृतो विघ्नः । कुतः ? पुण्यहेतौ पुण्य-10 विघातकारित्वेनाभिमते उपस्थिते संनिहितीभूते । अत्रेत्यस्मिन् पुण्यहेताविति वा संभाव्यते ॥

यदि पुण्यविघातकारी, कथमसौ पुण्यहेतुः ? यावत् स एव विघ्न इत्याह—

P 227 यो हि येन विना नास्ति यस्मिंश्च सति विद्यते ।
स एव कारणं तस्य स कथं विघ्न उच्यते ॥ १०४ ॥

15 यो भावः कार्याभिमतः येन कारणाभिमतेन विना नास्ति, तद्व्यतिरेके न भवति, स एव यद्भावेन भवति, नान्यः कारणं जनकः तस्य कार्याभिमतस्य, तदन्वयव्यतिरेकानुविधानात् । एवं प्रकृतेऽपि स जनक एव कथं तस्य जन्यस्य विघ्न उच्यते विघातहेतुरभिधीयते ? तथाविधेऽपि तथा व्यवहारं कुर्वतो नास्ति विप्रतिपत्तिः ॥

उक्तमेवार्थं दृष्टान्तोपदर्शनेन व्यक्तं कुर्वन्नाह—

20 न हि कालोपपन्नेन दानविघ्नः कृतोऽर्थिना ।
न च प्रव्राजके प्राप्ते प्रव्रज्याविघ्न उच्यते ॥ १०५ ॥

न यस्मात् कस्यचिद्दानपतेर्दित्साकाले एव संप्राप्तेनार्थिना याचनकेन दानविघ्नः कृतः इत्युच्यते, यतः स कारणमेव दानस्य । तथा कस्यचित् प्रव्रजितुकामस्य प्रव्राजकसमवधानं प्रव्रज्या संवरादिग्रहणस्वभावा, न च तस्या विघ्न उच्यते, अपि तु कारणमेव स तस्याः । 25 तमन्तरेण तस्या असंभवात् । एवं प्रकृतेऽपि द्रष्टव्यम् ॥

P 228 अपि च । क्षान्तिहेतुरतिदुर्लभ इति तत्समागमे प्रीतिरेव युज्यते इत्युपदर्शयन्नाह—

सुलभा याचका लोके दुर्लभास्त्वपकारिणः ।

अतिप्रचुरप्राप्तिका याचनका लोके सर्वत्र सर्वेषां दीयमानग्रहणावैमुख्यात्, न तु पुनरपकारिणः । अतस्ते दुर्लभाः शतसहस्रेषु, यदि कथंचित् कश्चित् स्याद्वा न वेति । 30 कुतः पुनरेतदेवमित्याह—

यतो मेऽनपराधस्य न कश्चिदपराध्यति ॥ १०६ ॥

यस्मादनपराधस्य निवृत्तपरापकारस्य मम निर्निमित्तं न कश्चिदेकोऽपि अपराध्यति, नापकरोति । कर्मणि षष्ठी ॥

एवमतिदुर्लभतया परमोपकारित्वाच्च अभिनन्दनीय एव अपकारीत्याह—

अश्रमोपार्जितस्तस्माद्गृहे निधिरिवोत्थितः ।
बोधिचर्यासहायत्वात् स्पृहणीयो रिपुर्मम ॥ १०७ ॥  5

यस्मात् कथंचित् प्राप्यन्ते अपकारिणः, तस्माद् गृहे प्रादुर्भूतो निधिरिव श्रममन्तरेणैवाधिगतो रिपुरभिलषणीय एव मया स्यात्, बोधिचर्यायां बुद्धत्वसंभारोपार्जने सहकारित्वाच्च ॥  P 229

एवंविधे परमपुरुषार्थे साहाय्यं भजमानस्य प्रत्युपकारकरणमेव कृतज्ञतया मम युक्तमित्युपदर्शयन्नाह—  10

मया चानेन चोपात्तं तस्मादेतत् क्षमाफलम् ।
एतस्मै प्रथमं देयमेतत्पूर्वा क्षमा यतः ॥ १०८ ॥

यस्मादसौ तत्र साहाय्यं कुर्वन् कारणमेव न विघ्नः, तस्मान्मया क्षमामभ्यस्यता, अनेन चापकारं कुर्वता, इति द्वाभ्यामेवोपार्जितम् । एतदिति यस्य साधनाय साहाय्यं भजते । क्षमाफलं धर्माधिगमलक्षणम् एतस्मै धर्मसहायाय प्रथममग्रतो दातव्यं मया 15 इति प्रणिधातव्यम् । यथा मैत्रीबलेन बोधिसत्त्वेन प्रणिहितं पञ्चकानुद्दिश्य । तत्र कारणमाह—यस्मादेतत्पूर्वा, एष एव पूर्वं कारणं यस्याः सा तथोक्ता । न हि अपकारिणमन्तरेण अन्यत् क्षान्तिकारणमस्ति ॥

युक्तमेवैतद् यदि तेनैवाभिप्रायेण असौ प्रवर्तते, केवलमपकाराशय एवायमित्याशङ्कयन्नाह—  20

क्षमासिद्ध्याशयो नास्य तेन पूज्यो न चेदरिः ।
सिद्धिहेतुरचित्तोऽपि सद्धर्मः पूज्यते कथम् ॥ १०९ ॥

क्षमा अस्य बोधिसत्त्वस्य निष्पद्यताम्, इत्याशयो नास्य अपकारोद्यतस्य । तेन कारणेन कुशलहेतुरपि यदि शत्रुः पूजनीयो न भवति, एवं तर्हि कुशलनिष्पत्तिहेतुः  P 230 निरभिप्रायोऽपि सद्धर्मः प्रवचनलक्षणः कथं पूज्यते ? सोऽपि तदाशयशून्यत्वात् पूजनीयो 25 न स्यात्, इति भावः ॥

अथ सद्धर्मस्य निरभिप्रायतया अपकाराशयोऽपि नास्ति, अस्य पुनस्तद्विपर्ययो दृश्यते, इत्याह—

अपकाराशयोऽस्येति शत्रुर्यदि न पूज्यते ।
अन्यथा मे कथं क्षान्तिर्भिषजीव हितोद्यते ॥ ११० ॥  30

अपकारः आशयः अस्य शत्रोः, इत्येवमभिसंधाय शत्रुर्यदि न पूज्यते दानमानैर्न सत्क्रियते । अन्यथेति अपकारिणि द्वेषचित्तमनिवारयतः कथं मम क्षान्तिः ? तदपकार-

मसहमानस्य प्रत्यपकारं वा कुर्वतो नैव युक्तेत्यर्थः । अन्यत्रापि कथं क्षान्तिः ? भिषजीव हितोद्यते, सुवैद्यवद् हितसुखविधायके यत्र प्रेमगौरवमेव सदा, द्वेषनिबन्धनस्य गन्धोऽपि न विद्यते ॥

द्वेषचित्तनिवर्तनाच्च क्षान्तिरुच्यते । तस्मादपकारिण्येव प्रतिघचित्तं निवर्तयतः 5 क्षान्तिरिति । एतदेव दर्शयन्नाह—

तद्दुष्टाशयमेवातः प्रतीत्योत्पद्यते क्षमा ।
स एवातः क्षमाहेतुः पूज्यः सद्धर्मवन्मया ॥ १११ ॥

यतो भिषजीव हितोद्यते क्षान्तिर्न युक्ता, अतः अस्माद्धेतोः तस्य दुष्टाशयमेव P 231 प्रतीत्य निमित्तीकृत्य समुपजायते क्षमा । न पुनः कस्यचिच्छुभाशयम् । अतः अस्मात् स 10 एव यस्याशयं प्रतीत्योत्पद्यते क्षमा क्षमाहेतुः, न तु पुनर्यो वैद्यवद्दुष्टाशयः । इति पूज्यः क्षमासिद्ध्याशयरहितोऽपि सद्धर्मवदसौ मया । एतदुक्तं भवति—किं ममानेन आशयविचारेण प्रयोजनम् ? अभिमतसाध्यसिद्धौ चेदुपयुज्यते, तावतैव ममोपादेयः स्यात् । विगुणाशयफलं तु तस्यैव, यस्यासौ विगुणाशयः । मम तु शुभोदयहेतुरेवायम्, इति कथमिव पूजनीयो न भवेदिति । तस्मात् संभारोपयोगिनि हेतौ किं स्वरूपनिरूपणेन ?

15 एतदेव संभारहेतुत्वमस्य आगमतः प्रसाधयन्नाह—

सत्त्वक्षेत्रं[1] जिनक्षेत्रमित्यतो मुनिनोदितम् ।
एतानाराध्य बहवः संपत्पारं यतो गताः ॥ ११२ ॥

संभारप्रसूतिप्रवृत्तिहेतुत्वात् सत्त्वाः क्षेत्रम् । बुद्धा भगवन्तस्तथैव क्षेत्रम् । इति एवम् । अतो बुद्धत्वकारणहेतुत्वात् अनेकप्रकारं भगवता वर्णितम् । कुतः ? यतो यस्मा- 20 देतान् सत्त्वान् जिनांश्च आराध्य आनुकूल्यानुष्ठानेन बहवो बुद्धत्वमधिगम्य सर्वलौकिक- लोकोत्तरसर्वसंपत्तिपर्यन्तं प्राप्ताः ॥

स्यादेतत्—यदि नाम सत्त्वा अपि सर्वसंपत्तिहेतवः, तथापि तथागतैः सह साधारणता न युक्तेति । अत्राह—

P 232

सत्त्वेभ्यश्च जिनेभ्यश्च बुद्धधर्मागमे समे ।
25 जिनेषु गौरवं यद्वन्न सत्त्वेष्विति कः क्रमः ॥ ११३ ॥

उभयेभ्योऽपि बुद्धधर्माणां बलवैशारद्यादीनामागमे प्रतिलम्भे तुल्ये अविशिष्टे । उभयमपि तत् प्रति हेतुत्वमविशिष्टमिति भावः । अतः साधारणेऽपि हेतुभावे जिनेषु गौरवं यद्वत्, तद्वन्न सत्त्वेषु । इत्येवं कः क्रमः परिपाटिः प्रेक्षावताम् ? नैव युक्तेत्यर्थः ॥

ननु च सत्त्वानां रागादिमलैर्हीनाशयत्वात् कारणत्वेऽपि कथं भगवत्समानता 30 युज्यते इत्याशङ्क्याह—

आशयस्य च माहात्म्यं न स्वतः किं तु कार्यतः ।
समं च तेन माहात्म्यं सत्त्वानां तेन ते समाः ॥ ११४ ॥

---

[1] Cf. धर्मसंगीतिसूत्र as quoted in ŚS p. 85 etc.

यद्यपि भगवतामपरिमितपुण्यज्ञानोपजनितमनुत्तरमिह माहात्म्यम्, तथापि उपयुक्तोपयोगित्वेन हेतुभावस्य तुल्यत्वात् समं माहात्म्यमुच्यते । तेन हेतुना ते सत्त्वाः समाः जिनैस्तुल्या उच्यन्ते इति नात्र विशेषः क्रियते ॥

यत्र पुनः प्रतिनियतात्मगतो विशेषः, तमुपदर्शयितुमाह—

मैत्र्याशयश्च[1] यत्पूज्यः सत्त्वमाहात्म्यमेव तत् । 5 P 233
बुद्धप्रसादाद्यत्पुण्यं बुद्धमाहात्म्यमेव तत् ॥ ११५ ॥

सत्त्वेषु मैत्रचित्तविहारी पुनर्यत्पूज्यते जनैः, तत्तस्यैव मैत्र्याशयस्य प्रत्यात्मगतं माहात्म्यं नान्यस्य । तथा तथागतमाहात्म्यमालम्ब्य स्वचित्तं प्रसादयतो यत्पुण्यमुत्पद्यते, तद्भगवत एव माहात्म्यमसाधारणम्, अन्यस्य तथाविधगुणाभावात् ॥

इत्यसाधारणं गुणमभिधाय प्रकृतमुपदर्शयन्नाह— 10

बुद्धधर्मागमांशेन तस्मात्सत्त्वा जिनैः समाः ।
न तु बुद्धैः समाः केचिदनन्तांशैर्गुणार्णवैः ॥ ११६ ॥

इदमत्र बीजं समतोपादाने इत्यर्थः । परमार्थतस्तु न बुद्धैर्भगवद्भिः समाः केचित् सत्त्वाः सन्ति । यदि भवेयुस्तथाविधाः, तदा तेऽपि बुद्धा एव स्युः । किंभूतैः ? गुणार्णवैः । गुणानामर्णवा गुणरत्नाकराः, अगाधापारत्वात्, तैः । पुनरपि तेषामपरमेव विशेषणमाह—अनन्तांशैः । अनन्तः अपर्यन्तः अंशः एकदेशोऽपि येषां गुणार्णवानाम्, ते तथा, तैः ॥ 15

उक्तमेवार्थं व्यक्तीकुर्वन्नाह— P 234

गुणसारैकराशीनां गुणोऽणुरपि चेत्क्वचित् ।
दृश्यते तस्य पूजार्थं त्रैलोक्यमपि न क्षमम् ॥ ११७ ॥

गुणेषु प्रधानानामेकराशयो ये भगवन्तः, तेषां गुणः अणुरपि परमाणुमात्रोऽपि । 20 गुणकणिकापीति यावत् । यदि क्वचित् सत्त्वविशेषे दृश्यते प्रतीयते, तस्य तद्गुणाधारस्य पूजानिमित्तं त्रैलोक्यमपि न क्षमम् । त्रैलोक्यजातानि रत्नादीनि न प्रतिरूपाणीति यावत् ॥

यद्येवम्, कथं तर्हि सत्त्वाराधनमुक्तमित्याह—

बुद्धधर्मोदयांशस्तु श्रेष्ठः सत्त्वेषु[2] विद्यते ।
एतदंशानुरूप्येण[3] सत्त्वपूजा कृता भवेत् ॥ ११८ ॥ 25

व्याख्यातमेतत् पूर्वम् ॥

इतोऽपि सत्त्वाराधनमुचितमित्याह—

किं च[4] निश्छद्मबन्धूनामप्रमेयोपकारिणाम् ।
सत्त्वाराधनमुत्सृज्य निष्कृतिः का परा भवेत् ॥ ११९ ॥

---

१ ŚS reads मैत्राशयश्च. Cf. ŚS. p. 87. २ Minayef reads सत्त्वस्य. ३ Minayef reads °नुरूपेण. ४ ŚS cites verses from 119 to 134 of this chapter on pp. 85-87.

निश्छद्मबन्धूनामकृत्रिमसुहृदां बुद्धानां बोधिसत्त्वानां च। अपर्यन्तोपकारिणां
P 235 निष्कृतिः तत्कृतापकारस्य निष्क्रयणं परिशोधनमिति यावत्। किमपरं भवेत् सत्त्वा-
राधनमन्तरेण। एतदेव परं निष्क्रयणमित्यर्थः॥

प्रभुचित्तानुकूलवर्तिन एव भृत्यस्य वाञ्छितं सिध्यतीत्यवगम्य सत्त्वाराधनमेवो-
5 पादेयमिति प्रतिपादयन्नाह—

**भिन्दन्ति देहं प्रविशन्त्यवीचिं**
**येषां कृते तत्र कृते कृतं स्यात्।**
**महापकारिष्वपि तेन सर्वं**
**कल्याणमेवाचरणीयमेषु॥ १२०॥**

10 करचरणशिरोनयनस्वमांसानि छित्त्वा छित्त्वा प्रदत्तानि येषां हितसुखविधानाय, तथा अवीचीमपि परदुःखदुःखिनो येषां कृते प्रविशन्ति तत्समुद्धरणाय। प्रकृतत्वाद् बुद्धा बोधिसत्त्वाः। तत्र तेषु सत्त्वेषु कृते कृतं स्यात्। अन्यथा तु कृतमपि न कृतं भवेत्। कृतशब्दोऽयमिह प्रकृताधिकारात् साधुकरणे वर्तते। येनैवम्, तेन परमापकारिष्विपि न चित्तं दूषयितव्यम्। किं तु सर्वमनेकप्रकारं कायवाङ्मनोभिर्वा कल्याणमेव हितसुखमेव
15 विधातव्यमेतेषु॥

उक्तमेव प्रसाधयन्नाह—

P 236 **स्वयं मम स्वामिन एव तावद्**
**यदर्थमात्मन्यपि निर्व्यपेक्षाः।**
**अहं कथं स्वामिषु तेषु तेषु**
20 **करोमि मानं न तु दासभावम्॥ १२१॥**

मम स्वामिन एव बुद्धादयः स्वयमेव आत्मनैव। तावदिति परामर्शे। यदर्थं येषां निमित्तम्। आत्मन्यपि स्वकायजीवितेऽपि। उक्तक्रमेण निरपेक्षा निरभिष्वङ्गाः तृणवत् परित्यजन्ति, तदहं पुनः तेषां भृत्यः तेषु सत्त्वेषु प्रभुपुत्रेष्वत्यन्तप्रियेषु कथं करोमि मानम्, किमिति जानन्नेव तान् प्रतिकूलयामि? न तु दासभावम्, न पुनर्दासीभूयाराधयामि?

25 इतोऽपि च सत्त्वापकारं परित्यज्य तदाराधनमेव कर्तव्यमित्याह—

**येषां सुखे यान्ति मुदं मुनीन्द्राः**
**येषां व्यथायां प्रविशन्ति मन्युम्।**
**तत्तोषणात्सर्वमुनीन्द्रतुष्टि-**
**स्तत्रापकारेऽपकृतं मुनीनाम्॥ १२२॥**

30 येषां सत्त्वानां प्रियपुत्राणामिव पितरो मुनीन्द्रा बुद्धा भगवन्तः सुखे कायमनो-
P 237 जन्मनि मुदं हर्षं यान्ति, येषां च दुःखे मन्युं प्रविशन्ति अपरितोषमासादयन्ति। एतच्च

अनभिमतत्वाद् भगवतामित्थमभिधीयते, न तु वाणी(सी ?)चन्दनकल्याणा(ल्पव ?)त्(?) तच्छ्रावकाणामपि प्रतिघानुनयासंभवः(?) । अन्यत् सुबोधम् ॥[1]

कथं पुनस्तत्रापकारे मुनीनामपकृतं स्यादित्यत्राह—

आदीप्तकायस्य यथा समन्ता-
न्न सर्वकामैरपि सौमनस्यम् ।　　5
सत्त्वव्यथायामपि तद्वदेव
न प्रीत्युपायोऽस्ति दयामयानाम् ॥ १२३ ॥

समन्तात् सर्वावयवानभिव्याप्य वह्निना प्रज्वलितशरीरस्य यथा पञ्चकामगुणैर्न सौमनस्यम्, कायिकमपि सुखं नास्ति, तस्य प्रज्वलितत्वादेव दुःखेनाक्रान्तत्वात्, तद्वत् तथैव सत्त्वानां व्यथायां दुःखवेदनायां न प्रीतेः सौमनस्यस्य उपायो हेतुरस्ति कृपात्मकानां 10 भगवताम् ॥

तस्मादपरिज्ञानेन क्लेशग्रहावेशवशेन वा सत्त्वापकारकर्मणा यदकुशलमुपचितम्, तदपि इदानीमुपसंहारद्वारेण वान्तीकुर्वन्नाह—

तस्मान्मया यज्जनदुःखदेन　　P 238
दुःखं कृतं सर्वमहाकृपाणाम्[2][3] ।　　15
तदद्य पापं प्रतिदेशयामि
यत्खेदितास्तन्मुनयः[4] क्षमन्ताम् ॥ १२४ ॥

यस्मादेवं सत्त्वापकारे मुनीनामपकृतं स्यात्, तस्मात् पापम् अद्य इदानीं प्रतिदेशयामि, संवेगबहुलस्तेषामेव महाकृपाणामग्रतः प्रकाशयामि । पुनरेवं संप्रजानन्न करिष्यामि, इति आयत्यां संवरमापद्ये । यदि प्रतिरूपमाचरितं तत्र मे क्षान्तिं कुर्वन्तु अनुकम्पामुपादाय ॥ 20

क्षमयित्वा सांप्रतमाराधनायेत्यादिना तदेकपरायणतामात्मनो दर्शयति—

आराधनायाद्य तथागतानां
सर्वात्मना दास्यमुपैमि लोके ।
कुर्वन्तु[5] मे मूर्ध्नि पदं जनौघा
विघ्नन्तु वा तुष्यतु लोकनाथः ॥ १२५ ॥　　25

तथागतानामभिप्रेतसंपादनाय लोके लोकविषये सर्वात्मना कायेन वाचा मनसा वा दासीभावं स्वीकरोमि । तेऽपि मे प्रसादं कुर्वन्तो मस्तके पादं निदधतु । तेषां पादं　　P 239
प्रमुदितचित्तः शिरसा धारयामि । अनेन मयि पूर्वापराधमपास्य जगतां पतिर्भगवान् संतुष्टमानसो भवतु ॥

---

१ Poussin notes that the meaning of the sentence is not clear and that T gives no help. २ ŚS महाकृपाणाम्. ३ ŚS सर्वमहादयानाम्. ४ ŚS ते मुनयः. ५ Minayef reads कुर्वन्ति.

भगवत्सु च गौरवकारिभिः सत्त्वेष्वनादरो न कर्तव्य इति प्रसाधयन्नाह—

आत्मीकृतं सर्वमिदं जगत्तैः
कृपात्मभिर्नैव हि संशयोऽस्ति[1]।
दृश्यन्त[2] एते ननु सत्त्वरूपा-
5 स्त एव नाथाः किमनादरोऽत्र ॥ १२६ ॥

सर्वत्रगधर्मधातुप्रतिवेधात् सर्वसत्त्वसमतापादनपरात्मपरिवर्तनादिना वा आत्मीकृतं स्वीकृतं सर्वमिदं जगत्, न कियदेव। तैर्बुद्धैर्भगवद्भिः करुणामयचित्तसंतानैः। सुनिश्चितमेवैतत्। अन्यथा बुद्धत्वायोगात्। तस्मात् सत्त्वरूपेण बुद्धा भगवन्त एवैते सत्त्वा दृश्यन्ते। तेन किमनादरोऽत्र मूढचेतसाम्? नैव युक्त इति भावः॥

10 अनेकार्थत्वादपि सत्त्वाराधनस्य तत्रैव यतितव्यमित्याह—

P 240

तथागताराधनमेतदेव
स्वार्थस्य संसाधनमेतदेव।
लोकस्य दुःखापहमेतदेव
तस्मान्ममास्तु व्रतमेतदेव ॥ १२७ ॥

15 स्वार्थस्य बुद्धत्वसंभारलक्षणस्यैव। लोकस्य दुःखापहं तद्धेतुत्वात्। एतदेवेति। सर्वत्र सत्त्वाराधनमिति योज्यम्॥

आगामिभयदर्शनादपि च परापकारवैमुख्यमेव अभ्यसनीयमित्युदाहरणेनोपदर्शयन्नाह—

यथैको राजपुरुषः प्रमथ्नाति महाजनम्।
विकर्तुं नैव शक्नोति दीर्घदर्शी महाजनः ॥ १२८ ॥

20 यस्य राज्ञो देशनिवासिनं तस्यासौ राजपुरुषः। महाजनं नगरनिगमग्रामकर्वटादिवास्तव्यम्। प्रमथ्नाति विमर्दयति। स च आगामिराजदण्डभयदर्शितया महाजनो वचनमात्रेणापि यावद्विकारमुपगन्तुमसमर्थः। तेन ताडितोऽपि संकुचितवृत्तिरेवास्ति॥

कस्मात्?

यस्मान्नैव स एकाकी तस्य राजबलं बलम्।

P 241

25 नैव स राजपुरुषोऽसहाय एव द्रष्टव्यः। कथं पुनरयमसहायो न भवतीत्याह—तस्येति। राज्ञो बलमेव तस्य बलम्, तत्पक्षग्रहणात्।

तथा न दुर्बलं कंचिदपराद्धं विमानयेत् ॥ १२९ ॥

तस्मात् कृशशक्तिमपि कृतापराधं नापकुर्यात्। सोऽपि न यस्मादेकाकी॥

यस्मान्नरकपालाश्च कृपावन्तश्च तद्बलम्।
30 तस्मादाराधयेत्सत्त्वान् भृत्यश्चण्डनृपं यथा ॥ १३० ॥

---

1 ŚS संशयोऽत्र. २ Minayef दृश्यन्तु एतेन तु.

तस्मादाराधयेत् सत्त्वान् । कुतः? यस्मान्नरकपालाश्च तदपकारमिव प्रत्यपकारिणोऽन्याचरन्तः (?) कृपावन्तश्च जिनादयः तत्पक्षपातिनो बलम् । कथमिवाराधयेत्? अधृष्यं राजानं सर्वानुवृत्तिकरणानुजीविनो यथा, तथा ॥

किं च। लोकप्रसिद्धित इदमेत्रमिहोक्तम्, न तु पुनः सत्त्वाप्रसत्तिफलस्य राजापराधफलेन समानता समस्तीत्याह— 5

कुपितः किं नृपः कुर्याद्येन स्यान्नरकव्यथा ।
यत्सत्त्वदौर्मनस्येन कृतेन ह्यनुभूयते ॥ १३१ ॥

किमिति काका पृच्छति । किं तद्दुःखजातमुत्पादयितुं नृपतिः समर्थो भवेत्? नैवेति भावः । किंभूतम्? येन दुःखजातेन नारकी वेदना अनुभूयते[१] ॥ P 242

तुष्टः[२] किं नृपतिर्दद्याद्यद्बुद्धत्वसमं भवेत् । 10
यत्सत्त्वसौमनस्येन कृतेन ह्यनुभूयते ॥ १३२ ॥

आस्तां भविष्यद्बुद्धत्वं सत्त्वाराधनसंभवम् ।
इहैव सौभाग्ययशःसौस्थित्यं किं न पश्यसि ॥ १३३ ॥

प्रासादिकत्वमारोग्यं प्रामोद्यं चिरजीवितम् ।
चक्रवर्तिसुखं स्फीतं क्षमी प्राप्नोति संसरन् ॥ १३४ ॥ 15

इति प्रज्ञाकरमतिविरचितायां बोधिचर्यावतारपञ्जिकायां
क्षान्तिपारमिता नाम षष्ठः परिच्छेदः ॥

---

१ This अनुभूयते is followed by अति प्र, which Poussin thinks, may be इति प्र...i. e., the colophon of the chapter. २ There is no commentary on these verses. The Tibetan translation also of this commentary is not found. The stanzas 132–134 however are authentic as they are found in the T translation of the text in Mdo, XXVI, fol. 193. They are also cited in ŚS. Cf. p. 87.

## ७ वीर्यपारमिता नाम सप्तमः परिच्छेदः ।

P 243 तदेवं विपक्षप्रतिषेधेन त्रिधा क्षान्तिं प्रतिपाद्य वीर्यं प्रतिपादयितुमाह—

एवं क्ष[1]मो भजेद्वीर्यं वीर्ये बोधिर्यतः स्थिता ।
न हि वीर्यं विना पुण्यं यथा वायुं विना[2]गतिः ॥ १ ॥

5 एवमुक्तक्रमेण क्षमायुक्तः क्षमः स्थै[3]यमभ्यस्तक्षान्तिः । भजेद्वीर्यं वीर्यमारभेत । अन्यथा दुःखासहिष्णुतया वीर्यस्य प्रस्रब्धिर्न स्यात् । कस्मात् पुनर्वीर्यमुपादीयत इत्याह । वीर्यं इत्यादि—यस्माद्वीर्ये बुद्धत्वमवस्थितम् । तद्धेतुकतया तदायत्तत्वाद्बुद्धत्वस्य । एतदपि कुतः ? यस्मान्न वीर्यमन्तरेण पुण्यं पुण्यसंभारोऽस्ति । उपलक्षणमेतत् । ज्ञानमपि द्रष्टव्यम्, वीर्यस्योभयहेतुत्वात् । तदनेन वीर्यात् पुण्यज्ञानसंभारौ, ताभ्यां च बुद्धत्वमित्युक्तं भवति ॥

10 वीर्यस्वरूपापरिज्ञानात् पृच्छति—

P 244 किं वीर्यं कुशलोत्साहस्तद्विपक्षः क उच्यते ।
आलस्यं कुत्सितासक्तिर्विषादात्मावमन्यना ॥ २ ॥

किमेतद्वीर्यं नाम ? अत्राह—कुशलोत्साहः । योऽयं कुशलकर्मणि दानादौ श्रुतादौ च समुद्यमः, तद्वीर्यमभिधीयते । अकुशले तु कौसीद्यमेव । विपक्षेणोपहतं वीर्यमनङ्गमेवाभिमत-15 सिद्धये इति तद्विपक्षमपनयनाय दर्शयितुमाह—तद्विपक्ष इत्यादि । तस्य वीर्यस्य विरुद्धो विनाशाय पक्षो विपक्षः क उच्यते ? उत्तरमाह—आलस्यमित्यादि । आलस्यं कौसीद्यं कायमनसोरकर्मण्यता । कुत्सिते जुगुप्सनीये हास्यलास्यादौ आसङ्गः । विषादो विषण्णता । दुष्करे कर्मणि चित्तस्य विनिवृत्तिः । अनध्यवसानमित्यर्थः । तेन आत्मनोऽवमन्यना अवज्ञा । अयं तद्विपक्षः ॥

20 तदालस्यनिषेधाय तत्कारणं तावदुपदर्शयितुमाह—

अव्यापारसुखास्वादनिद्रापाश्रयतृष्णया ।
संसारदुःखानुद्वेगादालस्यमुपजायते ॥ ३ ॥

संसारदुःखानुद्वेगादसंवेगात्, योऽयमव्यापारो निर्व्यापारता, तत्र तेन वा सुखास्वादः P 245 सुखाभिरामः । स च निद्रा च मिद्धाक्रमणम् । ताभ्यां मिद्धाक्रमणमपाश्रयतृष्णा अवष्टम्भ-25 नाभिलाषः, तया । आलस्यमुपजायते इति योजनीयम् । यदि वा । संसारदुःखानुद्वेगादव्यापारः, क्वचिदपि कुशलकर्मणि न प्रवृत्तिः, तस्मात् सुखास्वादः, ततो निद्रा, तस्याश्च अपाश्रयतृष्णा, तया ॥

---

१ Minayef reads क्षमी. २ Minayef विना गतिः. Our reading is based on T. ३ Ms. reads समस्ति क्षान्तिः. Our reading is based on T.

अतः संसारदुःखानुद्वेगनिवर्तनार्थमियमत्र संवेगभावना आमुखीकर्तव्येत्याह—

**क्लेशवागुरिकाघ्रातः[१] प्रविष्टो जन्मवागुराम् ।**

**किमद्यापि न जानासि मृत्योर्वदनमागतः ॥ ४ ॥**

वागुरिका मत्स्यादिवधिका जालिका उच्यन्ते कैवर्तादयः( दिभिः ? )। क्लेशा एव वागुरिकाः, तैराघ्रात आयत्तीकृतः। कथमिति चेत्, प्रविष्टो जन्मवागुराम्, निकायसभाग- 5 तोत्पत्तिरेव वागुरिका जालम्, तत् प्रविष्टः, तदन्तर्गत इत्यर्थः । इदमिह तदात्मसात्करणे कारणम्। अद्यापि एतां दशां प्राप्तोऽपि मृत्योर्मुखं प्रविष्टः सन् किमिति न वेत्सि ? जातश्चे- न्मरणमवश्यंभावीत्यर्थः ॥

इदमपरं संवेगकारणमाह—

**स्वयूथ्यान्मार्यमाणांस्त्वं क्रमेणैव न पश्यसि ।** 10 P 246

**तथापि निद्रां यास्येव चण्डालमहिषो यथा ॥ ५ ॥**

यूथं वर्गः, तत्र भवा यूथ्याः, यैः सह बाल्याद्यवस्थायां क्रीडितहसितादिना विचरितम्। तान् स्ववर्ग्यान् । चण्डालानामवश्यंमारणीयमहिषवत् । न पश्यसि ममापि इयमवस्थितिः स्यादिति ॥

अवश्यमिह कियत्कालं परिलम्ब्य मृत्युरागमिष्यति । तेन तावत्कालं सुखानुभवनमेव 15 मम युक्तमित्यत्राह—यदि नामैवम्, तथापि नावश्यंभाविनि मरणे विश्वासो युक्तः ।

**यमेनोद्वीक्ष्यमाणस्य बद्धमार्गस्य सर्वतः ।**

**कथं ते रोचते भोक्तुं कथं निद्रा कथं रतिः ॥ ६ ॥**

इति वध्यपुरुषस्येव सर्वतो वध्यघातकैरधिष्ठितस्य वध्यभूमिं नीयमानस्य निःसरण- मपश्यतः सुखासिकावलम्बनमनुचितमेव भवतः । तस्मात् संवेगतो भावनया अनया 20 हेतुनिवर्तनादालस्यमपास्य कुशलपक्षोत्साहवर्धनमनुष्ठेयम् ॥

अथापि स्यात्—यदि नाम अवश्यंभाविता मृत्योः, तथापि तत्संनिधानमवगम्य आलस्यमपहास्यामि इत्याशङ्क्याह—

**यावत्संभृतसंभारं मरणं शीघ्रमेष्यति ।** P 247

**संत्यज्यापि तदालस्यमकाले किं करिष्यसि ॥ ७ ॥** 25

संभृतः सज्जीकृतः संभारः सामग्री वधाय व्याधिजरालक्षणो येन । यावदिति लोकोक्तम् । शीघ्रं त्वरितमनभिसंधानात् । तदा मृत्युमुखान्तर्गतः असमये आलस्यं त्यक्त्वापि किं करिष्यसि ? न तदा किंचित् प्रयोजनमिति भावः ॥

अकालतामेवास्य समर्थयितुं वृत्तत्रयेणाह—

**इदं न प्राप्तमारब्धमिदमर्धकृतं स्थितम् ।** 30

**अकस्मान्मृत्युरायातो हा हतोऽस्मीति चिन्तयन् ॥ ८ ॥**

---

१ Minayef reads आघातः.

शोकवेगसमुच्छूनसाश्रुरक्तेक्षणाननान्।
बन्धून्निराशान् संपश्यन् यमदूतमुखानि च ॥ ९ ॥
स्वपापस्मृतिसंतप्तः शृण्वन्नादांश्च नारकान्।
त्रासोच्चारविलिप्ताङ्गो विह्वलः किं करिष्यसि ॥ १० ॥

5 इदं यदनागते कर्तव्यतया मनसिकृतं तन्न प्राप्तम्। इदमारब्धं यत्कार्यमादित एव कर्तुमिष्टम्। इदमर्धकृतं स्थितम्, यत् कियन्निष्पन्नं कियदनिष्पन्नम्। इति कार्यपर्यन्तमगतस्यैव अकस्मान्मृत्युरागतो मम। अहो बत अतिकष्टम्, हतोऽस्मीति विचिन्तयन् विह्वलः किं करिष्यसीत्यनागतेन संबन्धः। शोकः प्रियविप्रयोगकृतश्चित्तपरितापः। तस्य वेगोऽनिवार्य-
P 248 प्रवृत्तिः। तेन समुच्छूनानि समुन्नतानि साश्रूणि सबाष्पाणि रक्तानि ताम्रवर्णानि लोचनानि
10 येषु आननेषु तानि तथा। तथाभूतानि आननानि मुखानि येषां बन्धूनां ते तथा। तान् संपश्यन् विलोकयन्। तत्राकर्मकाधिकारात् परस्मैपदं दृशः। किंभूतान्? निराशान्। क? प्रत्युज्जीवनं प्रति त्यक्ताशान्, तत्सानाथ्यविकलान् वा। मरणसमयोपस्थितकृतान्तानुचरमुखानि च सरोषपरुषभृकुटीनि संपश्यन् विह्वलः किं करिष्यसि? स्वयंकृतपापकर्मस्मरणेन मरणसमये किमित्येवं मया कृतमिति पश्चात्तापेन तापितः। नैतावन्मात्रमेव, किं तु
15 शृण्वन्नादांश्च नारकान् तीव्रकारणानुभवनदुःखनिर्मुक्तान् विक्रोशितशब्दान् नरकसमुद्भूतान् अर्थान्तरकोपाणामेव (?)। तच्छ्रुत्वा ममाप्येवमेवावस्था इति संत्रासेन यः पुरीषोत्सर्गो विट्प्रवृत्तिः, तेनोपलिप्तगात्रः। विह्वलः अनायत्तकायवाक्चित्तप्रचारः। किं करिष्यसि सर्वक्रियासु निवृत्तव्यापारः॥

इति मत्वा स्वस्थावस्थायामेव यतितव्यम् इति शिक्षयितुमाह—

P 249 20 जीवमत्स्य इवास्मीति युक्तं भयमिहैव ते[1]।
किं पुनः कृतपापस्य तीव्रान्नरकदुःखतः ॥ ११ ॥

जीवन्त एव मत्स्याः क्रमेण भक्षणार्थं प्रायः प्राग्दिङ्निवासिभिरेव जनै रक्ष्यन्ते। जीवनोपलक्षिता मत्स्या जीवमत्स्या इति तेषामेव समयः। शाकपार्थिवादित्वान्मध्यमपदलोपी समासः। तद्वदहमपि अद्य श्वो वा नियतमेव मरिष्यामि इति मनसि कृत्वा युक्तं भयमिहैव
25 ते। इहैव संप्रजानदवस्थायामेव तवासंप्राप्तमरणस्य मरणतः, किं पुनः कृतपापस्य भवतो भयं युक्तं न भवति, इत्यपि आहार्यम्। अतिदुःसहान्नरकदुःखतः॥

निर्व्यापारसुखास्वादाभिरतमधिकृत्याह—

स्पृष्ट उष्णोदकेनापि सुकुमार प्रतप्यसे।
कृत्वा च नारकं कर्म किमेवं स्वस्थमास्यते ॥ १२ ॥

30 तप्तवारिणापि संस्पृष्टः। सुकुमारेति संबोधनम्। अतिमृदुशरीरतया सोढुमशक्तोऽसि। यद्येवम्, तदा कृत्वा चेत्यादि सुबोधम्॥

---

[1] Minayef reads मे for ते.

अपरमपि तं प्रत्याह—

निरुद्यम फलाकाङ्क्षिन् सुकुमार बहुव्यथ ।
मृत्युग्रस्तोऽमराकार हा दुःखित विहन्यसे ॥ १३ ॥

सुखहेतूत्पादनाय व्यापारशून्योऽसि । अथ च तस्य फलं सुखमभिलषसि । दुःखा- P 250
सहिष्णुरसि, अथ च बहुव्यथोऽसि सर्वदुःखाकरत्वात् । मृत्युना च वशीकृतोऽसि, अथ च 5
अमरणधर्माणमात्मानं मन्यसे । एवं च विपर्यस्तं चरितमस्य विपश्यन् करुणायमानः सखेद-
मेनमाह—हा दुःखित विहन्यसे । संमोहबहुलतया कष्टां दशां प्रविष्टोऽसि । आत्मगतमेव
वा विमृशति । एवमन्यत्रापि यथासंभवं द्रष्टव्यम् । निरुद्यमादीनि चामन्त्रितपदानि ॥

निद्रापरतन्त्रं प्रत्याह—

मानुष्यं नावमासाद्य तर दुःखमहानदीम् । 10
मूढ कालो न निद्राया इयं नौर्दुर्लभा पुनः ॥ १४ ॥

अष्टाक्षणविनिर्मुक्तं मनुष्यभावप्रतिलम्भं नावमिव अभ्युदयादिपारगमनाय प्राप्य तर
प्लवस्व दुःखमयीं महानदीम् । सर्वदुःखानि पृष्ठीकुरुष्व । वीर्यावलम्बनेनेति यावत् । हे
मोहपरवश, नायं कालो निद्रायाः, यावदियं नौः संनिहिता । यदि नेदानीमेव यत्नः
क्रियते, तदा पुनरियं दुर्गतिगतस्य नौर्दुर्लभा भविष्यति । यदुक्तम्— 15

पुनरप्येष समागमः कुतः । इति ॥

[ बोधि० १. ४ ]

एवमालस्यं निवार्य कुत्सितासक्तिं निवारयन्नाह—

मुक्त्वा धर्मरतिं श्रेष्ठामनन्तरतिसंततिम् । P 251
रतिरौद्धत्यहास्यादौ दुःखहेतौ कथं तव ॥ १५ ॥ 20

शुभकर्मणां रतिं श्रेष्ठामुत्तमाम् । किंभूताम् ? अनन्तरतिसंततिम् । सुगतिपरंपरा-
संजननादनन्ता अपर्यवसाना रतिसंततिः सुखप्रवाहो यस्याः सा तथा । अत एव उत्तमे-
त्युक्तम् । तामपहाय रतिरभिरामः, औद्धत्यमुन्नतता । कायचित्तयोः क्रीडनशीलतेति यावत् ।
हासो वागौद्धत्यम् । सरभसस्य वाग्विकार इति यावत् । आदिशब्दाद्गीतादिपरिग्रहः । तत्र
कथं रतिस्तव ? न युक्तेत्यभिप्रायः । किंभूते ? दुःखहेतौ । नरकादिदुर्गत्युपनयनाद्दुःखस्य 25
हेतुर्भवति ॥

एवं कुत्सितासक्तिमपि निराकृत्य विषादात्मावमन्यनां वीर्यविपक्षं निराकर्तुम्, अपर-
मपि च तद्विपक्षनिरसनाय प्रतिपादयन्नाह—

अविषादबलव्यूहतात्पर्यात्मविधेयता ।
परात्मसमता चैव परात्मपरिवर्तनम् ॥ १६ ॥ 30

विषादविपरीतोऽविषादः । बलानां व्यूहः समूहो वक्ष्यमाणलक्षणः । तात्पर्यं
निपुणता । आत्मविधेयता आत्मवशवर्तिता । एताः सर्वाः कृतद्वन्द्वसमासाः । यदि वा ।

P 252 एभिः सहिता आत्मविधेयता । परात्मसमतापरात्मपरिवर्तने ध्यानपरिच्छेदे [ बोधि० ८ ] वक्ष्यमाणे । इदमपि समस्तं कौसीद्यप्रहाणाय वीर्यसमृद्ध्ये प्रभवतीत्युद्देशः ॥

उद्दिष्टमेवार्थं क्रमेण निर्दिशन्नाह—

**नैवावसादः कर्तव्यः कुतो मे बोधिरित्यतः ।**

5 कुतो मे बोधिरिति, कथमहं वराकः सम्यक्संबोधिभाजनम् ? बुद्धत्वं हि तीक्ष्णेन्द्रियस्य आरब्धवीर्यस्य अपरिमितपुण्यज्ञानसंभारैः अतिदुष्करकर्मानुष्ठानैः अनेकैश्च कल्पासंख्येयैः कस्यचित् पुरुषविशेषस्य साध्यं भवति । अहं तु न तादृश इति कथं मद्विधानां तथाविधं बुद्धत्वं संभाव्येत, इत्येवमाकारमनसिकारादवसादो विषादो न कर्तव्यः, महार्थभ्रंशस्य हेतुत्वात् । यथोक्तम्—अवसादोऽप्यनर्थ इति [ शि० स० ३४ ] ॥

10 कस्मात् ?

**यस्मात्तथागतः सत्यं सत्यवादीदमुक्तवान् ॥ १७ ॥**

यस्मात् तथागतः इदं वक्ष्यमाणं सत्यमवितथमुक्तवान् कथितवान् । कथं ज्ञायते इत्याह—सत्यवादीति । ज्ञानक्रियासंभवादविपरीतवादी । अतः सत्याभिधानहेतुपदमेतत् ॥

किं तत्सत्यमुक्तवान् ?

15 **तेऽप्यासन् दंशमशका मक्षिकाः कृमयस्तथा ।**
**यैरुत्साहवशात् प्राप्ता दुरापा बोधिरुत्तमा ॥ १८ ॥**

इत्याह । तेऽपि बुद्धा भगवन्तः पूर्वं शाक्यमुनिरत्नशिखिदीपंकरप्रभृतयः संसारसागरावर्तान्तर्गताः पृथग्जनावस्थायां परिभ्रमन्त एवंभूता एवासन् बभूवुः, यैरुत्साहबलात्
P 253 वीर्योत्कर्षसामर्थ्यात् संभारान् संभृत्य प्राप्ता अधिगता दुरापा दुर्लभप्रतिलम्भा बोधिरुत्तमा
20 अनुत्तरा । आरब्धवीर्यस्य न किंचिद्दुष्करमिति भावः । इदं तत् सत्यम् ॥

अतो मम पुनरतितरां न दुर्लभा बोधिरित्याह—

**किमुताहं नरो जात्या शक्तो ज्ञातुं हिताहितम् ।**
**सर्वज्ञनीत्यनुत्सर्गाद्बोधिं किं नाप्नुयामहम् ॥ १९ ॥**

किं पुनरहं मनुष्यभूतो जन्मना । शक्तो ज्ञातुं हिताहितमिति । इदं हितमिद-
25 महितम्, शुभमशुभं च कर्मेत्युपदिष्टम्, ज्ञातुमवबोद्धुं समर्थोऽस्मि, इति विचिन्त्य सर्वज्ञस्य सर्ववस्तुतत्त्ववेदिनः नीतिर्नियः उपादेयतत्त्वप्रतिपादनम् । तस्य अनुत्सर्गादपरित्यागात् । तस्य आदानोपादानसेवनादित्यर्थः । बुद्धत्वं नाप्नुयामहम् । काक्वा पठनाद् आप्नुयामेवेति । एतद्भगवता रत्नमेघे दर्शितम् । यथोक्तम्—

इह बोधिसत्त्वो नैवं चित्तमुत्पादयति—दुष्प्राप्या बोधिर्मनुष्यभूतेन सता । इदं च
30 मे वीर्यं परीत्तं च हीनं च । कुसीदोऽहम् । बोधिश्च आदीप्तशिरश्चैलोपमेन बहून् कल्पान् बहूनि कल्पशतानि बहूनि कल्पसहस्राणि समुदाचरता समुदानेतव्या । तन्नाहमुत्सहे

P 254

१ ŚS p. 34.

ईदृशं भारमुद्वोढुम् । किं तर्हि बोधिसत्त्वेनैवं चित्तमुत्पादयितव्यम्—येऽपि तेऽभिसंबुद्धा-स्तथागता अर्हन्तः सम्यक्संबुद्धाः, येऽपि वा अभिसंभोत्स्यन्ते, तेऽपि ईदृशेनैव नयेन, ईदृश्या प्रतिपदा, ईदृशेनैव वीर्येणाभिसंबुद्धाः, यावन्न च ते तथागतभूता एवाभिसंबुद्धाः । अहमपि तथा तथा घटिष्ये, तथा तथा व्यायंस्ये सर्वसत्त्वसाधारणेन वीर्येण सर्वसत्त्वारम्बणेन वीर्येण यथाहमप्यनुत्तरां सम्यक्संबोधिमभिसंभोत्स्ये इति ॥ 5

युक्तमेवैतत्, केवलमतिदुष्करकर्मश्रवणादनध्यवसायो विनिवर्तयितुमशक्य इति विकल्पयन्नाह—

अथापि हस्तपादादि दातव्यमिति मे भयम् ।

करचरणशिरःप्रभृतिदानमन्तरेण बुद्धत्वं न प्राप्यते, इति अतिदुष्करकर्मसु प्रवृत्ति-भयादुत्साहो निवर्तत एव । इति चेन्मन्यसे स्वचित्तमेवमाह— 10

गुरुलाघवमूढत्वं तन्मे स्यादविचारतः ॥ २० ॥

तदेतद् गुरुलाघवमूढत्वमेव मे । अल्पे बहुतरं बहुतरे चाल्पतरमिति मोहवशेन अविचारतोऽविवेकान्मम स्यात्, न तु परमार्थविचारतः ॥

परमार्थविचारेण गुरुलाघवविपर्यास एवायमित्युपदर्शयन्नाह—

छेत्तव्यश्चास्मि भेत्तव्यो दाह्यः पाट्योऽप्यनेकशः । 15 P 255
कल्पकोटीरसंख्येया न च बोधिर्भविष्यति ॥ २१ ॥

संसारचारके निवसंस्तथाविधकर्मवशाच्छेत्तव्यश्चास्मि करचरणाद्यङ्गप्रत्यङ्गच्छेदनान्नर-कादिषु । तथा भेत्तव्योऽस्मि शक्तिकुन्तादिभिः । दाह्यो नरकदहनादिना । पाट्यो ज्वलित-क्रकचादिना । अनेकशः अनेकवारान् । नरकादिषु कारणामनुभवन् अपर्यन्तपथि संसारे । कल्पानां कोटीरसंख्येयाः संख्यातुमशक्याः इति । अकामस्यापि दुःखमपर्यन्तमनेकप्रकार- 20 मापतिष्यति, न च बुद्धत्वसंभाराय तत् संपत्स्यते ॥

इदं संसारापर्यन्ततया दुःखं बहुतरं निष्फलं च । बुद्धत्वप्रसाधकं पुनरल्पतरं सफलं चेत्युपदर्शयन्नाह—

इदं तु मे परिमितं दुःखं संबोधिसाधनम् ।
नष्टशल्यव्यथापोहे तदुत्पादनदुःखवत् ॥ २२ ॥ 25

यद् बुद्धत्वप्रसाधकं तदिदं दुःखं परिमितं मम प्रतिनियतकालभावितया, दुःख-[ प्रशमन ]हेतुश्च । तत्तथाभूतं शल्यं तेन व्यथा, तस्या अपोहो निवृत्तिः । तन्निमित्तं तद्व्युदासाय । यावज्जीवं तत्कृतदुःखप्रहाणायेत्यर्थः । तस्य नष्टशल्यस्योत्पाटनं शरीरा-दुद्धरणम् । अपकर्षणमिति यावत् । तेन यद्दुःखं प्रतिनियतकालमल्पतरम् । दीर्घकालिकदुःखो- P 256 पशमनिमित्तम् । तद्वत् सोढुमुचितमिदमपि दुःखम् ॥ 30

अतोऽपि समुचितमिदमित्याह—

सर्वेऽपि वैद्याः कुर्वन्ति क्रियादुःखैररोगताम्।
तस्माद्बहूनि दुःखानि हन्तुं सोढव्यमल्पकम्॥ २३॥

सर्वेऽपि न केचिदेव। लङ्घनपाचनादिकृतैर्यथेष्टाहारविहारप्रतिषेधजनितैश्च क्रिया-
5 दुःखैः रोगपीडितानामारोग्यं विदधाति। अन्यथा तत्कर्तुमशक्यम्। यत एवम्, तस्मादति-
शयेन अल्पमल्पकं दुःखं सोढव्यम्। किमर्थम्? बहूनि दुःखानि हन्तुम्। सर्वसत्त्वाना-
मात्मनश्च दीर्घकालिकसर्वदुःखप्रशमनायेत्यर्थः। एवं तावत् स्वीकर्तुं युक्तं धीमतः॥

न चेदं युक्तमपि दुष्करं कर्म आदिकर्मिकस्य प्रथममनुज्ञातं भगवतेति दर्शयन्नाह—

क्रियामिमामप्युचितां वरवैद्यो न दत्तवान्।

10 क्रियामिमां समनन्तरप्रतिपादितां दुःखोत्पादनीम्। उचितामपि सेवनीयामपि।
P 257 वरवैद्यो भगवान् सर्वथा सर्वव्याधिचिकित्सकः। प्रथमं न दत्तवान्, न कर्तव्यतया
प्रतिपादितवानादिकर्मिकस्य। कथं तर्हि रागादिव्याधीनपनयति? आह—

मधुरेणोपचारेण चिकित्सति महातुरान्॥ २४॥

सुकुमारतरेणोपचारेण उपक्रमेण। यथाक्षमं चिकित्साप्रणयनेनेत्यर्थः। चिकित्सति
15 रोगमुक्तान् करोति। महातुरान् दीर्घरोगिणो रागादिमहाव्याधिग्रस्तान्॥

कः पुनरयं मधुरोपचार इत्याह—

आदौ शाकादिदानेऽपि नियोजयति नायकः।
तत्करोति क्रमात्पश्चाद्यत्स्वमांसान्यपि त्यजेत्॥ २५॥

मात्सर्यमलापनयनार्थं सुखसुखेन संभारसंवर्धनार्थं च शक्यपरित्यागे शाकसक्तु-
20 पिण्डिकादिदानेन प्रथमतरं प्रवर्तयति नायको भगवान्। पुनस्तथोपायविशेषेण नियोजनं
करोति। तदिति लोकोक्तौ वा। यद्यथा दाता मृदुदानाभ्यासक्रमेण अधिमात्राधिमात्र-
दानाभ्यासप्रकर्षमासादयन् पश्चादुत्तरकालमकृच्छ्रेणैव स्वमांसरुधिरादिकमपि प्रसन्न एव
प्रयच्छेत्॥

कथं पुनरेतदेवमित्याशङ्क्याह—

25 यदा शाकेष्विव प्रज्ञा स्वमांसेऽप्युपजायते।
मांसास्थि त्यजतस्तस्य तदा किं नाम दुष्करम्॥ २६॥

P 258 यस्मिन् काले दानाभ्यासात् परमप्रकर्षगमनात् सर्वथापगतमात्सर्यतया शाकेष्विव
स्वमांसेऽपि निरासङ्गा बुद्धिरुपजायते, तदा स्वमांसादिदानेऽपि नाशक्यानुष्ठानबुद्धिरिति
तस्मिन् काले किं नाम दुष्करम्? नैव किंचिदित्यर्थः॥

30 अथापि स्यात्—अतिदीर्घकालं परार्थे संसरता तद्दुःखं कथमिव परिहर्तुं शक्य-
मित्यत्राह—

न दुःखी त्यक्तपापत्वात्पण्डितत्वान्न दुर्मनाः ।
मिथ्याकल्पनया चित्ते पापात्काये यतो व्यथा ॥ २७ ॥

द्विविधमेव हि दुःखं बाधकमुपजायते कायिकं मानसिकं चेति । तदेतद् द्वयमपि बोधिसत्त्वस्य न संभवति । कायवचनमनोभिः सर्वावद्यविरतेः कायिकं दुःखमस्य न जायते । युक्त्यागमाभ्यामुभयनैरात्म्यस्य च निश्चयनान्मानसमपि कुतः ? यतो मिथ्याकल्पनया 5 असद्विकल्पेन आत्मात्मीयग्रहप्रवृत्तेन भावाद्यभिनिवेशकृतेन वा चित्ते दुःखम्, पापात् प्राणातिपातादेः काये । एवं तावद्दुःखहेतुपरिहाराद्दुःखमस्य न जायते इति प्रतिपादितम् ॥

इदानीं सुखमेव केवलमस्यास्तीति प्रतिपादयन्नाह—

पुण्येन कायः सुखितः पाण्डित्येन मनः सुखि । P 259
तिष्ठन् परार्थं संसारे कृपालुः केन खिद्यते ॥ २८ ॥ 10

सुखं जातमस्य कायस्येति सुखितः । सुखं विद्यतेऽस्य मनस इति सुखि । एवमुभय-सुखसमन्वागतत्वात् कृपावान् परार्थं संसारे संसरन् केन दुःखेन खिद्यते, खेदं मन्यते ? यदि वा । केन खिद्यते ? खेदहेतोरभावान्न केनचिदिति भावः । तत् किमिदमकारण-भीरुतया वैमुख्यमुपादीयते ?

स्यादेतत्—दीर्घकालमासेवितभावितबहुलीकृतेन महता पुण्यसंभारेण सम्यक्संबोधि- 15 रधिगम्यते । तद्वरं मुमुक्षूणां शीघ्रकालतया श्रावकयानमेवाश्रयणीयं स्यादित्याशङ्क्याह—

क्षपयन् पूर्वपापानि प्रतीच्छन् पुण्यसागरान् ।
बोधिचित्तबलादेव श्रावकेभ्योऽपि शीघ्रगः ॥ २९ ॥

पूर्वकृतानि यानि पापानि तानि बोधिचित्तबलादेव क्षयीणि कुर्वन् । यथोक्तं प्राक्—

युगान्तकालानलवन्महान्ति 20
पापानि यन्निर्दहति क्षणेन । इति ।

[ बोधि० १.१४ ]

तथा बोधिचित्तबलादेव प्रतीच्छन् आददानः पुण्यसागरान् ।

यदुक्तम्—

अविच्छिन्नाः पुण्यधाराः प्रवर्तन्ते नभःसमाः । इति । 25 P 260

[ बोधि० १.१९ ]

एवंविधोपायबलजवेन महायानमारूढो बोधिसत्त्वः श्रावकेभ्योऽपि शीघ्रगः त्वरितगामी ॥

एवं सुखात्सुखं गच्छन् को विषीदेत्सचेतनः ।
बोधिचित्तरथं प्राप्य सर्वखेदश्रमापहम् ॥ ३० ॥

प्रतिपादितमेवार्थं पिण्डीकृत्य दर्शयति । एवमुक्तक्रमेण सर्वावद्यविरतेः पुराकृतपाप- 30 क्षयाच्च स्वप्नेऽपि दुर्गतिगमनाभावात् तीव्राभिप्रायेण अनेकसुखेन अहर्निशमाकाशधातुव्यापिनः

पुण्यसागरस्याभिवर्धनाच्च सुगतिपरंपरासन्मार्गावतरणबोधिचित्तं रथमिव आसाद्य। आरुह्येति यावत्। सर्वखेदैः परिक्लेशैः श्रम आयासः, तमपहन्तीति प्रतिपादितनयेन, सर्वखेदश्रमं वा अपहन्तीति तम्। सुखादेकस्मादपरमुत्तरोत्तरमधिकाधिकं सुखं देवमनुष्यसंपत्तिलक्षणं गच्छन् अनुप्राप्नुवन् को नाम प्रेक्षावान् विषादमापद्येत?

5 तदेवमनेकविधविषादनिमित्तप्रतिषेधेन अविषादं प्रतिपाद्य बलव्यूहं प्रतिपादयितुमाह—

छन्दस्थामरतिमुक्तिबलं सत्त्वार्थसिद्धये।
छन्दं दुःखभयात्कुर्यादनुशंसांश्च भावयन्॥ ३१॥

P 261 इदमप्युद्देशवाक्यमेव। छन्द इह कुशलाभिलाषः। स्थाम आरब्धदृढता। रतिः 10 सत्कर्मासक्तिः। मुक्तिरसामर्थ्ये तावत्कालमुत्सर्गः। एतच्चतुरङ्गबलम्, अनेकावयवसमुदायात्मकत्वात्, हस्त्यादिबलवत्। सत्त्वार्थसिद्धये वीर्यहेतुत्वात्, अस्य वीर्यस्य च सर्वाभिमतसाधनत्वादिति भावः। तत्र छन्दबलस्य बहुकरत्वात्, छन्दमित्यादिना अस्योत्पत्तिनिमित्तमाह— दुःखभयादिति। अशुभकर्मणो दुःखं जायत इति त्रासाच्छन्दं कुर्यात्। अनुशंसांश्च भावयन्। अनुशंसाः फलद्वारेण गुणविशेषाः। ते च अर्थात् कुशलकर्मण 15 एव। तान् भावयन्। शुभकर्मणोऽनेकप्रकारेण मधुरफलोत्पत्तिं पुनः पुनः संचिन्तयन्नित्यर्थः॥

सांप्रतं बलस्य व्यापारमुपदर्शयितुमाह—

एवं विपक्षमुन्मूल्य यतेतोत्साहवृद्धये।
छन्दमानरतित्यागतात्पर्यवशिताबलैः॥ ३२॥

एवमुक्तप्रबन्धेनेत्यादि। विपक्षमालस्यादि। उन्मूल्य प्रतिपक्षभावना विधिना 20 अपसार्य। वीर्यप्रवर्धनाय यत्नं कुर्यात्। केनोपायेनेत्यादि(ह?)—मानश्चित्तस्योन्नतिः। अयं स्थामबलस्योपबृंहणम्, स्थामबलमेव वा। तेषां बलैः सामर्थ्यैः। सामर्थ्यपर्यायोऽत्र बलशब्दः॥

तत्र तावच्छन्दोत्पादनाय प्रथममाह—

P 262 अप्रमेया मया दोषा हन्तव्याः स्वपरात्मनोः।
25 एकैकस्यापि दोषस्य यत्र कल्पार्णवैः क्षयः॥ ३३॥
तत्र दोषक्षयारम्भे लेशोऽपि मम नेक्ष्यते।
अप्रमेयव्यथाभाज्ये नोरः स्फुटति मे कथम्॥ ३४॥
गुणा मयार्जनीयाश्च बहवः स्वपरात्मनोः।
तत्रैकैकगुणाभ्यासो भवेत्कल्पार्णवैर्न वा॥ ३५॥
30 गुणलेशेऽपि नाभ्यासो मम जातः कदाचन।

सर्वसत्त्वानामुपकरणतया आत्मनश्च समस्तक्लेशप्रहाणाय निःशेषगुणोत्पादनाय च मया बोधिचित्तमुत्पादितम्। तच्च न शिथिलव्यापारसाध्यमित्यवगम्यापि यदि अनारब्ध-

वीर्यतया मन्दसमारम्भ एव तिष्ठामि, तदा दुर्गतिविनिपातमन्तरेण नान्या गतिरस्ति ममेति विचिन्त्य संवेगमामुखीकुर्वन् छन्दमुत्पादयेदिति समुदायार्थः ॥

अवयवार्थस्तु उच्यते–अप्रमेयाः प्रमातुमशक्याः। दोषाः कायवाक्चित्तसमाश्रिताः। हन्तव्याः प्रहन्तव्याः। स्वपरात्मनोः स्वात्मनः परात्मनश्च। एकैकस्यापीति। आस्तां तावद्बहूनाम्। यत्र येषु। मन्दवीर्येण कल्पार्णवैः अनेकैः कल्पशतसहस्रैः क्षयः प्रहाणं क्रियते। 5 तत्र तेषु दोषक्षयारम्भे दोषप्रहाणोत्साहे। लेशोऽपि स्वल्पमात्रमपि मम नेक्ष्यते न दृश्यते। अतः अप्रमेयव्यथाभाज्ये अपरिमितदुःखभाजनस्य मम नोरः स्फुटति हृदयं विदीर्यते। कथं केन प्रकारेण। गुणा मयेत्यादि सुबोधम्। इति विचिन्त्य संवेगमुपदर्शयति– P 263

वृथा नीतं मया जन्म कथंचिल्लब्धमद्भुतम् ॥ ३६ ॥

वृथा विफलमेव मया जन्म अक्षणविनिर्मुक्तं नीतं प्रेरितम्। वृथीकृतमिति यावत्। 10 कथंचिल्लब्धं महार्णवयुगच्छिद्रकूर्मग्रीवार्पणवत् सुचिरेण प्राप्तम्। अत एव आश्चर्यस्थानत्वादद्भुतम् ॥

इतोऽपि विफलमित्याह—

न प्राप्तं भगवत्पूजामहोत्सवसुखं मया।
न कृता शासने कारा दरिद्राशा न पूरिता ॥ ३७ ॥ 15
भीतेभ्यो नाभयं दत्तमार्ता न सुखिनः कृताः।
दुःखाय केवलं मातुर्गतोऽस्मि गर्भशल्यताम् ॥ ३८ ॥

तथागतानां सत्क्रियाभिर्महोत्सवमतिशयवदभिनन्दनम्। तेन सुखं सौमनस्यं न प्राप्तं नाधिगतं मया। नापि शासने प्रतिमास्तूपसद्धर्मादिसत्कारैः विहारारामशयनादिवस्तुप्रदानैश्च कारा पूजा कृता। नापि दरिद्राणां धनहीनानामाशा अभिलाषः सर्वोपकरण- 20 संपत्तिसंपादनेन पूरिता। नापि भीतेभ्यः सपत्नादिभयसमाकुलितेभ्यो मा भैषीरित्यभयं दत्तम्। नापि कायमनोदुःखैरार्ताः पीडिताः तदपनीय सुखिनः कृताः। इति सर्वैः सत्पुरुषधर्मैर्विरहितत्वादाह। दुःखायेत्यादि सुबोधम् ॥ P 264

कथं पुनरेतां धर्मदशां प्राप्तो भवानित्याह—

धर्मच्छन्दवियोगेन पौर्विकेण ममाधुना। 25
विपत्तिरीदृशी जाता को धर्मे छन्दमुत्सृजेत् ॥ ३९ ॥

धर्माभिलाषस्याभावेन प्राक्तनजन्मोपचितेन मम अधुना अस्मिन् जन्मनि विपत्तिरीदृशी जाता। सर्वसामर्थ्यवैकल्यस्वभावा समनन्तरकथिता समुत्पन्ना। एवं ज्ञात्वा को धर्मे छन्दमुत्सृजेत् परित्यजेत्? को नाम नोपाददीत विचक्षण इति भावः ॥

किं पुनः कुशलार्थिनां छन्दोत्पादने यत्न इत्याशङ्क्य यच्चोक्तं छन्दं दुःखभयात् 30 कुर्यात् [७.३१] इत्यादि, तद्व्यक्तीकर्तुं चाह—

कुशलानां च सर्वेषां छन्दं मूलं मुनिर्जगौ ।
तस्यापि मूलं सततं विपाकफलभावना ॥ ४० ॥

न केवलं विपत्तिपरिहारार्थम्, शुक्लधर्मोपचयार्थमपि च्छन्दोत्पादने यतितव्यमिति चकारार्थः । सर्वेषामिति न केषांचिदेव । छन्दं मूलं कारणं भगवानुक्तवान्, न तु 5 स्वयमुत्प्रेक्ष्य उच्यते इत्यर्थः । तस्यापि च्छन्दस्यापि मूलं सततं सर्वकालं विपाकफलभावना । शुभाशुभकर्मणो विपाकफलं परलोके इष्टानिष्टप्राप्तिलक्षणम्, तस्य भावना पुनःपुनरामुखीकरणम् ॥

P 265 तत्र अशुभकर्मणो विपाकफलमुपदर्शयन्नाह—

दुःखानि दौर्मनस्यानि भयानि विविधानि च ।
10 अभिलाषविघाताश्च जायन्ते पापकारिणाम् ॥ ४१ ॥

यावन्ति कायिकमानसिकानि नरकादिगतौ दुःखानि विविधानि नानाप्रकाराणि जायन्ते भवन्ति सर्वाणि पापकारिणामेव । भयानि वधबन्धनताडनादिभ्यः । पर्येषमाणस्य लाभविघातेन अभिलाषविघाताश्च ॥

सुकृतकर्मणो विपाकफलमाह—

15 मनोरथः शुभकृतां यत्र यत्रैव गच्छति ।
तत्र तत्रैव तत्पुण्यैः फलार्घेणाभिपूज्यते ॥ ४२ ॥

इष्टाशंसनविकल्पो मनोरथः, यस्य लोके मनोराज्यमिति प्रसिद्धिः शुभकृतां पुण्यकारिणाम् । यत्र यत्रैवेति वीप्सायां न क्वचिदेव । गच्छति प्रसरति । फलार्घेणेति । अभिवाञ्छितफलोपनामनमेव अर्घ इवार्घः पूजा ॥

20 तेन पुनरशुभस्य फलमाह—

पापकारिसुखेच्छा तु यत्र यत्रैव गच्छति ।
तत्र तत्रैव तत्पापैर्दुःखशस्त्रैर्विहन्यते ॥ ४३ ॥

सुखेच्छा सुखाभिलाषः । तत्पापैरिति कर्तरि तृतीया । दुःखशस्त्रैरिति करणैः । दुःखान्येव शस्त्राणीव तदिच्छाविच्छेदहेतुत्वात् ॥

P 266 25 पृथग्जनासाधारणशुभकर्मविपाकफलमसाधारणमाह—

विपुलसुगन्धिशीतलसरोरुहगर्भगता
मधुरजिनस्वराशनकृतोपचितद्युतयः ।
मुनिकरबोधिताम्बुजविनिर्गतसद्वपुषः
सुगतसुता भवन्ति सुगतस्य पुरः कुशलैः ॥ ४४ ॥

30 प्रतिलब्धमुदितादिभूमयो हि बोधिसत्त्वा अनिच्छन्तो मातृकुक्षौ नोत्पद्यन्ते, किं तर्हि सुखावत्यां विश्वदलकमलकोशेषु जायन्ते । तेषां सुखविभूतिमनेन कथयति—विपुलानि

विस्तीर्णानि सुगन्धीनि मनोज्ञगन्धानि शीतलानि शीतसुखस्पर्शानि तानि च सरोरुहाणि पङ्कजानि चेति, तेषां गर्भाणि । सरोरुहगर्भाणां वा विशेषणान्येतानि । तेषु गताः संस्थिताः प्रज्ञोपायमहाकरुणानिर्यातपुण्यज्ञानकललसंवलितसंबोधिचित्ताः सुगतसुता भवन्ति कुशलैरिति संबन्धः । कथं पुनः पद्मगर्भेषु पुष्टिं लभन्त इत्याह–मधुरेत्यादि । मधुरैः सर्वस्वराङ्गोपेततया परमसौमनस्यकारिभिः संबुद्धधर्मघोषाशनैराहारैः कृता उपचिता द्युतयो वपूंषि येषां ते तथा । कथं च ततो निर्यान्तीत्यत आह–मुनिकरेत्यादि । मुनिकरैः परिपाककालमवगम्य तथागतरश्मिभिर्बोधितानि विकासितानि च तान्यम्बुजानि चेति । ततो विनिर्गतानि निर्यातानि सन्ति लक्षणव्यञ्जनालंकृततया शोभनानि वपूंषि येषां ते तथा । तथाभूताः सन्तः सुगतसुता बोधिसत्त्वा भवन्ति जायन्ते । सुगतस्य पुरः सुखावत्याममिताभस्य भगवतोऽग्रतः । कुशलैरेकान्तशुक्लैः कर्मभिः । तदनेन मातृकुक्षौ समुत्पद्यमानानामेतद्विशेषणविपर्ययेण दुःखं वेदितव्यमित्युपदर्शितं भवति । तथा हि तत्र संकटे दुर्गन्धिनि जठरानलसंतप्ते च उत्पन्नस्य मातापित्रशुचिसंभूतस्य मातुः पीताशितैर्वान्तकल्पैः संवर्धमानस्य गर्भमलपङ्कनिमग्नस्य परिपाककाले कथंचित् कण्ठगतप्राणस्य यन्त्रनिष्पीडितस्येव ततो निर्गमनमिति प्रायेण मनुष्यभूतस्य व्यतिमिश्रकर्मविपाकफलमुक्तम् ॥

एकान्तकृष्णस्य तु विपाकफलमाह—

यमपुरुषापनीतसकलच्छविरार्तरवो
हुतवहतापविद्रुतकताम्रनिषिक्ततनुः ।
ज्वलदसिशक्तिघातशतशातितमांसदलः
पतति सुतप्तलोहधरणीष्वशुभैर्बहुशः ॥ ४५ ॥

यमपुरुषैः कालदूतैरपनीता विश्लेषिता ज्वलितमुद्गरादिप्रहारैः सकला समस्ता छविश्चर्म प्रभावो वा यस्य स तथा । अतिशयेनार्तः सन् पतति सुतप्तलोहधरणीषु । पुनरपि किंभूतः ? तीव्रानलतापेन द्रवीभूतं यत्ताम्रं तेन निषिक्ता स्नापिता तनुः कायो यस्य । अतोऽप्यपनीतसकलच्छविः । ज्वलन्तः असयः शक्तयश्च शस्त्रविशेषाः, तेषां घातशतैरनेकैः प्रहारैः शातितानि विच्छेदितानि मांसदलानि शकलानि यस्य स तथाभूतः सन् पतति । सुष्ठु तप्तासु लोहमयभूमिषु । अशुभैरकुशलैः कर्मभिः । बहुश इति बहून् वारान् । दीर्घकालेन तत्फलस्य परिक्षयात् ॥

तदेवं शुभाशुभकर्मणोर्विपाकफलं प्रतिपाद्य च्छन्दबलमुपसंहरन्नाह—

तस्मात्कार्यः शुभच्छन्दो भावयित्वैवमादरात् ।

यत एवं शुभाशुभकर्मणोर्मधुरकटुकफलविपाकः, तस्मादेवं परिभाव्य शुभच्छन्द एव आदरेणाशुभकर्म विहाय कार्यः । सांप्रतं स्थामबलं प्रतिपादयितुमाह—

वज्रध्वजस्थविधिना मानं त्वारभ्य भावयेत् ॥ ४६ ॥

वज्रध्वजसूत्रप्रतिपादितविधानेन मानं पुनः साध्यं कर्मारभ्य भावयेत्। अथवा। आरभ्य भावयेदिति गाढसमारम्भेण भावयेत्, चेतसि स्थिरं कुर्यात्, न शिथिलोपक्रमेणेत्यर्थः॥

P 269 आरम्भमेव शिक्षयितुमाह—

**पूर्वं निरूप्य सामग्रीमारभेन्नारभेत वा।**

5 पूर्वं प्रथमत एव अभिमतकार्यनिष्पादनाय सामग्रीं कारणसाकल्यं निरूप्य, तस्या बलाबलं विचार्य, आरभेत सति बले, नारभेत वा असति बले। किमेवंविचारेण प्रयोजनमिति चेदाह—

**अनारम्भो वरं नाम न त्वारभ्य निवर्तनम्॥ ४७॥**

अनारम्भो वरं नाम प्रथमत एव, न त्वारभ्य निवर्तनमशक्तत्वे सति॥

10 ननु किमत्र दूषणं येनैवं नेष्यते इत्याह—

**जन्मान्तरेऽपि सोऽभ्यासः पापाद्दुःखं च वर्धते।**

**अन्यच्च कार्यकालं च हीनं तच्च न साधितम्॥ ४८॥**

तथा क्रियमाणः अन्यस्मिन्नपि जन्मनि सोऽभ्यास इत्यारभ्य निवर्तनं नाम। प्रतिज्ञातमकुर्वतश्च पापं ततो दुःखं वर्धते। अन्यच्च हीनं नष्टं यत्परित्यज्य तदारब्धम्, कार्य-15 कालं च हीनम्। आरब्धपरित्यक्तकार्यस्य कालोऽस्य कार्यस्येति। तस्मिन् काले यदन्यत् कार्यं कर्तव्यं तदित्यर्थः। तच्च यदारभ्य परित्यक्तम्, तदपि न साधितं न निष्पादितम्। इति पञ्चप्रकारमत्र दूषणम्। तेन नेष्यत इत्यभिप्रायः॥

P 270 अथ किमयं मानः सर्वत्र न कर्तव्यः? नेत्याह—

**त्रिषु मानो विधातव्यः कर्मोपक्लेशशक्तिषु।**

20 केषु त्रिषु? तदाह—कर्मसु उपक्लेशेषु शक्तौ च। तत्र उपक्लेशाः क्षुद्रवस्तुकसंज्ञिताः क्रोधोपनाहम्रक्षप्रदाशादयः सप्त। पञ्चाशत् क्लेशा एव वा रागादय उपक्लेशा उच्यन्ते। तत्र कर्ममानं व्याख्यातुमाह—

**मयैवैकेन कर्तव्यमित्येषा कर्ममानिता॥ ४९॥**

यत्किंचिदनवद्यं कर्म आपतितं भवति सत्त्वानाम्, तत् सर्वं मयैवैकेन कर्तव्यम्। 25 नान्यस्यावकाशो दातव्य इत्यर्थः॥

एतदेव दर्शयन्नाह—

**क्लेशस्वतन्त्रो लोकोऽयं न क्षमः स्वार्थसाधने।**

**तस्मान्मयैषां कर्तव्यं नाशक्तोऽहं यथा जनः॥ ५०॥**

क्लेशैः परायत्तीकृतः सर्वोऽयं जनकायः क्वचिदपि स्वार्थसाधने समर्थो न भवति, इति P 271 30 एषां सर्वसुखोत्पादनाय मया बोधिचित्तमुत्पादितम्। यत एवम्, तस्मान्नाशक्तोऽहमीदृशं भारमुद्वोढुं यथा अयं जनः। अतो मयैवैषां सर्वं कर्तव्यम्॥

दीनेऽपि कर्मणि वैमुख्यं नोत्पादयितव्यमित्याह—

**नीचं कर्म करोत्यन्यः कथं मय्यपि तिष्ठति ।**

नीचमतिगर्हितं लोके भारोद्वहनादिकम् । मय्यपि सर्वसत्त्वानां दासभूतेऽपि तिष्ठति विद्यमानेऽपि । मत्करणीयं कथमन्यः करोति ? मयैव कर्तुमुचितमिति भावः । अथाप्रतिरूपम्, ममैव तत् कर्मेति चित्तस्योन्नतिं निवारयितुमाह— 5

**मानाच्चेन्न करोम्येतन्मानो नश्यतु मे वरम् ॥ ५१ ॥**

कोऽमुष्यपुत्रः, इदं च कर्म अतिनिहीनम्, तदयुक्तं मम कर्तुमिति मानाद्यदि न करोमि, तदा मानो नश्यतु मे वरम् । किमनेन महार्थभ्रंशकारिणा मम, न तु नीचकर्म-प्रवृत्तिः ॥

इति कर्मसु मानमभिधाय उपक्लेशेषु मानमुपदर्शयितुमाह— 10

**मृतं दुण्डुभमासाद्य काकोऽपि गरुडायते ।**
**आपदाबाधतेऽल्पापि मनो मे यदि दुर्बलम् ॥ ५२ ॥**

यदि उपक्लेशेषु निहतमानतया दुर्बलवृत्ति मम चित्तं स्यात्, तदा आपदापत्तिः आबाधते आक्रामति यथा सापत्तिकं स्यादित्यर्थः । अल्पापि मृदुप्रचारोपक्लेशजनितापि । P 272
कथमिवेत्याह—मृतमपगतप्राणं दुण्डुभं प्राप्य यथा काकोऽपि गरुडवदाचरति ॥ 15

कुतः पुनरेवमित्याह—

**विषादकृतनिश्चेष्टे आपदः सुकरा ननु ।**
**व्युत्थितश्चेष्टमानस्तु महतामपि दुर्जयः ॥ ५३ ॥**

चित्तोन्नतिविरहिते विषण्णतया मन्दकायचित्तप्रवृत्तौ आलस्योपहते मुषितस्मृतौ आपदः सुकराः सुलभाः । उत्पद्यन्त एव स्वल्पापदापि गम्यत्वात् । व्युत्थितः समुन्नत- 20 चित्ततया पुनरुत्साहसंपन्नः चेष्टमानः स्मृतिसंप्रजन्याभ्यामुपक्लेशानामनवकाशं ददानः महतामपि दुर्जयः अजय्यः स्यात् ॥

**तस्माद्दृढेन चित्तेन करोम्यापदमापदः ।**
**त्रैलोक्यविजिगीषुत्वं हास्यमापज्जितस्य[१] मे ॥ ५४ ॥**

स्थामबलावलम्बनं निगमयन् दर्शयति—यत एवं तस्मात् दृढेन चित्तेन मानसंनाहः । 25
आपद एव आपदमनर्थं करोमि सर्वथा तदनुप्रवेशं निवारयन्नुन्मूलितसंतानं करोमि । अन्यथा P 273
त्रिजगद्विजयारम्भो मम हास्यमुपहसनीयम्, आपदा आपदायत्ततया वराकिकया जितस्य गमिष्यति ॥

कीदृशमेतदित्याह—

**मया हि सर्वं जेतव्यमहं जेयो न केनचित् ।**
**मयैष मानो वोढव्यो जिनसिंहसुतो ह्यहम् ॥ ५५ ॥** 30

---

१ Minayef आवर्जितस्य.

कुतः ? यस्माज्जिना एव भगवन्तः सिंहाः सर्वमारमृगैरनभिगम्यत्वात् । तेषां सुतः अहमपि कथमन्यैः पराजितो नाम नामधेयं लप्स्ये इति मनसि निधाय मयैष मानो वोढव्यः । यथा हि सिंहकिशोरः प्रतिलब्धवैशारद्यः सर्वान्यमृगैरनभिभूत एव वने विचरति, तथा मया दृढेन भवितव्यमित्यर्थः ॥

5 स्यादेतत्—यदि एवम्, तदा येऽपि सपत्नादिविजयाय मानमुद्वहन्ति, तेऽपि मानिनः प्रशस्याः कथं न भवेयुः ? इत्यत्राह—

ये सत्त्वा मानविजिता वराकास्ते न मानिनः ।
मानी शत्रुवशं नैति मानशत्रुवशाश्च ते ॥ ५६ ॥

मानविजिताः मानेन अभिभूताः वराकास्तपस्विनः ते मानिनो भवन्त्येव । कुतः ? 10 मानी शत्रुवशं नैति न गच्छति । नासौ वैरिजनानुवृत्तिं करोतीत्यर्थः । ये भवताभिमता P 274 मानिनः, ते मानशत्रुवशाः तदायत्तप्रवृत्तयः ॥

एतदेव श्लोकद्वयेन समर्थयितुमाह—

मानेन दुर्गतिं नीता मानुष्येऽपि हतोत्सवाः ।
परपिण्डाशिनो दासा मूर्खा दुर्दर्शनाः कृशाः ॥ ५७ ॥
15 सर्वतः परिभूताश्च मानस्तब्धास्तपस्विनः ।
तेऽपि चेन्मानिनां मध्ये दीनास्तु वद कीदृशाः ॥ ५८ ॥

सप्तविधमानेषु अन्यतमेन मानेन दुर्गतिं नीता नरकादिषु पातिताः । अथ कथंचिन्मनुष्यप्रतिलम्भो भवति तेषाम्, तदा तत्रापि तन्निन्दाफलेन हतोत्सवा निरानन्दा भवन्ति । हीनदीनमनस इत्यर्थः । परपिण्डाशिनः आहारवैकल्यात् परदत्तभिक्षाहारभुजः । 20 दासाः परतन्त्रवृत्तयो भृत्याः । मूर्खाः सर्वविवेकशून्याः । दुर्दर्शनाः विरूपात्मभावा अप्रीतिजनकाश्च । कृशाः दुर्बलशरीराः सामर्थ्यरहिताश्च । सर्वतः सर्वेभ्योऽकृतापराधा अपि कायवचःपरिभवलाभिनो भवन्ति । के पुनरेवम् ? मानस्तब्धास्तपस्विनः मानेन स्तब्धाः अनम्राः । तपस्विनो वराकाः । तेऽपि चेत्, एवंभूता अपि यदि मानिनां मध्ये गण्यन्ते, तर्हि दीनाः कृपणाः कृपापात्रमित्यर्थः । पुनरन्ये दीनाः कीदृशा भवन्तीति वद ब्रूहि [ इति ] 25 चोदकमामन्त्रयते ॥

P 275 यदि एवंविधा मानिनो नोच्यन्ते, कीदृशास्तर्हि ते भवन्तीत्याह—

ते मानिनो विजयिनश्च त एव शूरा
ये मानशत्रुविजयाय वहन्ति मानम् ।
ये तं स्फुरन्तमपि मानरिपुं निहत्य
30 कामं जने जयफलं प्रतिपादयन्ति ॥ ५९ ॥

त एव मानिन उच्यन्ते ये बोधिसत्त्वाः तं स्फुरन्तमपि प्रभवन्तमपि मानवैरिणं निहत्य विधूय । कामं यथेष्टम् । उद्दामेति यावत् । जने लोके सदेवकादिके जयफलं प्रकाशयन्ति बुद्धत्वावस्थायाम् । एतादृशं तन्मानशत्रुविजयफलं यादृशमस्मासु दृश्यते इत्यभिप्रायः । त एव विजयिनश्च लब्धविजयाः । त एव शूरास्तेजस्विन इति पदद्वयं यथासंभवं योज्यम् ॥

उपक्लेशेषु मानं प्रतिपाद्य शक्तौ मानमाह— 5

**संक्लेशपक्षमध्यस्थो भवेद्दृप्तः सहस्रशः ।**

संक्लेशानां पक्षो वर्गः, तस्य मध्ये तिष्ठन् सहस्रगुणेन दृप्ततरो भवेत्, अतिशयवच्छौर्यबलमवलम्बेत । किंभूतः सन्नित्याह—

**दुर्योधनः क्लेशगणैः सिंहो मृगगणैरिव ॥ ६० ॥**

दुःखेन योध्यत इति दुर्योधनः । कथंचिदपि न पराजीयते इत्यर्थः । कथमिव ? 10 P 276 यथा हि सिंहो मृगराजः मृगकुलमध्ये महातेजोबलसमन्वागतो विहरन् वने सर्वमृगानभिभवति, न च तैरभिभूयत इति, एवं बोधिसत्त्वो दुर्योधनो भवेत् ॥

इदमपरमपि निमित्तमुद्ग्रहीतव्यमित्याह—

**महत्स्वपि हि कृच्छ्रेषु न रसं चक्षुरीक्षते ।**
**एवं कृच्छ्रमपि प्राप्य न क्लेशवशगो भवेत् ॥ ६१ ॥** 15

अतिप्रकर्षवत्सु अपि कृच्छ्रेषु दुःखेषु सत्सु रसं मधुरादिकं जिह्वेन्द्रियग्राह्यं न चक्षुरीक्षते न प्रतिपद्यते । न विषयीकरोतीत्यर्थः । तस्याविषयत्वात् । नाविषये प्रवर्तत इति भावः । एवमुक्तरसचक्षुर्न्यायेन कष्टमपि प्राप्य न क्लेशवशं गच्छेत् ॥

इत्युक्तेन प्रबन्धेन स्थामबलं विधाय रतिबलमावेदयितुमाह—

**यदेवापद्यते कर्म तत्कर्मव्यसनी भवेत् ।** 20
**तत्कर्मशौण्डोऽतृप्तात्मा क्रीडाफलसुखेप्सुवत् ॥ ६२ ॥**

कर्म संभारनिबन्धनं ध्यानाध्ययनादिलक्षणं यदेवापद्यते, क्रमकरणयोगेनापतितं भवेत्, तस्मिन्नेव कर्मणि व्यसनी भवेत् तत्क्रियारसनिमग्नचित्तः । तत्कर्मशौण्डः तत्प्रवृत्तिलम्पटः । अतृप्तात्मा पुनःपुनरभिलाषयुक्तः । क इव ? क्रीडाफलसुखेप्सुवत् द्यूतादिक्रीडाया यत्फलं सुखं तदाप्तुमिच्छुरिव ॥ 25

इतोऽपि विचारयता कर्मणि रतिरुत्पादयितव्येत्युपदर्शयन्नाह— P 277

**सुखार्थं क्रियते कर्म तथापि स्यान्न वा सुखम् ।**
**कर्मैव तु सुखं यस्य निष्कर्मा स सुखी कथम् ॥ ६३ ॥**

सर्वैरेव कर्मफलसुखलिप्सया कर्म क्रियते । अन्यथा तत्र प्रवृत्तिर्न स्यात् । तथापि एवं चेतसा प्रवृत्तावपि कस्यचित् कर्मणोऽभिवाञ्छितफलं स्यात्, कस्यचित् पुनर्न स्यात् । 30 निष्फलारम्भस्यापि संभवात् । तथापि कर्मारम्भात् पुनः फलसंभावनया नैव निवर्तते

जनः । यस्य पुनः कर्मैव सुखम्, न तदुत्तरमपरसुखाभिलाषः, स निष्कर्मा कर्मविरहितः कथं सुखी स्यात् ? न कथंचिदित्यर्थः ॥

इदमपि भावयता कर्मण्यभिनिवेष्टव्यमित्याह—

**कामैर्न तृप्तिः संसारे क्षुरधारामधूपमैः ।**
5 **पुण्यामृतैः कथं तृप्तिर्विपाकमधुरैः शिवैः ॥ ६४ ॥**

रूपादिविषयैः । संसार इति संसरति पुनः पुनः । अभूतैरतृप्तिः अनाप्यायनम् । किंभूतैः ? क्षुरधारामधूपमैः क्षुरधारायां यन्मधु मधुरसं यदास्वाद्य तृष्णावशाज्जिह्वोच्छेदनो- P 278 त्तरकालं दुःखमुपजायते, तेनोपमा उपमानं यादृशं येषां ते । आपातमात्रमाधुर्येऽपि परिणतिदुःखेन कटुकरसत्वात्तेषामित्यभिप्रायः । पुण्यान्येव अमृतानीव, तैः कथं तृप्तिरस्तु ? 10 किंविशिष्टैः ? विपाकमधुरैरभ्युदयफलसुखहेतुतया परिणामेन मधुररसत्वात् । परमसुखजनकैः शिवैः कल्याणकारिभिर्निःश्रेयसावाहकतया । अजरामरफलदानपरत्वात् सर्वदुःखनिर्वर्तकै- रित्यर्थः । अत एव पुण्यामृतैरित्यत्र हेतुपदमेतत् ॥

तस्मादित्युपसंहारेण पुनः कर्माभिरामं द्रढयन्नाह—

**तस्मात्कर्मावसानेऽपि निमज्जेत्तत्र कर्मणि ।**
15 **यथा मध्याह्नसंतप्त आदौ प्राप्तसराः करी ॥ ६५ ॥**

तस्य आरब्धस्य कर्मणः अवसानेऽपि निमज्जेत्, तदभिनिवेशरसनिमग्न एव विमुञ्चेत् । कथमिव ? यथा ग्रीष्मसमये मध्यंदिनवर्तिनि सूर्ये सर्वतो जलमलभमानश्च आतापतापितो हस्ती परमाभिनिवेशसंयुक्तः अतिशयवदाह्लादकारिशीतलजलपरिपूरितं ह्रदमासाद्य प्रथमतो निमज्जति तथा इति समुदायार्थः । प्राप्तं सरो येन स तथा । पश्चात्कर्म- 20 धारयः । आदावित्यस्य निमज्जतीत्यनेन संबन्धः ॥

इदानीं रतिबलं व्याख्याय मुक्तिबलं व्याख्यातुमाह—

**बलनाशानुबन्धे तु पुनः कर्तुं परित्यजेत् ।**
**सुसमाप्तं च तन्मुञ्चेदुत्तरोत्तरतृष्णया ॥ ६६ ॥**

P 279 आरब्धकर्मनिष्पादने सामर्थ्यक्षयमात्मनोऽवगम्य सामर्थ्यप्रतिलम्भे सति पुनः 25 करिष्यामि इत्यभिप्रायेण तावत्कालं परित्यजेत् मुञ्चेत् । न तावतास्य विक्षेपः स्यात् । अन्यथा तथापि तदपरित्यागेऽनर्थसमावेश एव स्यात् । यदापि सुनिष्पन्नं तदारब्धं कर्म भवेत्, तदापि मोक्तव्यम् । अन्यथा स्वरसवाहितयापि तस्मिन् प्रवृत्ते पुनर्व्यापाराद्विक्षेप एव स्यात् । तस्मादपरापरविशेषाकाङ्क्षया तन्मुञ्चेत् परित्यजेत् । एतेन यदुक्तं प्राक्—पूर्वं समीक्ष्य सामग्रीम् [ ७.४७ ] इत्यादि, तस्योत्सर्गस्यायमपवाद उक्तः ॥

30 तदेवमवान्तरविशेषोपदर्शनेन बलव्यूहं सर्वथाभिधाय प्रथमोद्देशप्रतिपादितमपि पुनश्छन्दादिगणे [ ७. १६ ] कथितं तात्पर्यं व्याचक्षाण आह—

**क्लेशप्रहारान् संरक्षेत् क्लेशांश्च प्रहरेद्दृढम् ।**
**खड्गयुद्धमिवापन्नः शिक्षितेनारिणा सह ॥ ६७ ॥**

क्लेशानां प्रहारान् उपघातान् संरक्षेत् निवारयेत् । यथा तेषां प्रहारो न प्रभवतीत्यर्थः । क्लेशान् पुनः प्रहरेत् निहन्यात् । दृढं गाढप्रहारेण । यथा पुनरवकाशं न लभेरन् । अत्र निदर्शनमाह—यथा शिक्षितेन शस्त्रविद्याकौशलसमन्वागतेन शत्रुणा सह निपुणतरः 5 खड्गेन संग्रामयन् तमभिभवति, न च तेनाभिभूत इति ॥ P 280

तथा तत्रेत्यादिना पुनस्तात्पर्यं शिक्षयितुमाह—

**तत्र खड्गं यथा भ्रष्टं गृह्णीयात्सभयस्त्वरन् ।**
**स्मृतिखड्गं तथा भ्रष्टं गृह्णीयान्नरकान् स्मरन् ॥ ६८ ॥**

तत्र तस्मिन् खड्गयुद्धे यथा खड्गं हस्तात् कथंचित् विचलितं पुनः संवृत्य गृह्णीयात् 10 सभयः, मा मामयं छलमनुप्रविश्य शत्रुर्वधीत् । त्वरन्निति शीघ्रमेव । न कालप्रतिलम्बेनेति यावत् । तथा तद्वदेव स्मृतिप्रमोषे । स्मृतिरेव खड्ग इव क्लेशशत्रुविजयाय । तं भ्रष्टमपगतं गृह्णीयात् आमुखीकुर्यात् । नरकान् रौरवादीन् स्मरन् । स्खलिते सति तद्दुःखभागितां मनसिकुर्वन् ॥

ननु सूक्ष्मक्लेशसमुदाचारेऽपि का क्षतिः येन तत्र उपेक्षा न क्रियते इत्यत्राह— 15

**विषं रुधिरमासाद्य प्रसर्पति यथा तनौ ।**
**तथैव च्छिद्रमासाद्य दोषश्चित्ते प्रसर्पति ॥ ६९ ॥**

अणुमात्रस्यापि दोषस्य अवकाशो न दातव्यः । अन्यथा तन्मात्रस्याप्यनुप्रवेशे चित्ते तत्प्रसरावरोधस्य कर्तुमशक्यत्वात् । यथा हि स्वल्पव्रणेऽपि रुधिरसंपर्कवतो विषस्य शरीरे । तस्मादणुमात्रक्लेशप्रहारनिवारणेऽपि तात्पर्यं कुर्यात् ॥ 20

पुनरन्यथा तात्पर्यं दृढीकुर्वन्नाह—

**तैलपात्रधरो यद्वदसिहस्तैरधिष्ठितः ।** P 281
**स्खलिते मरणत्रासात्तत्परः स्यात्तथा व्रती ॥ ७० ॥**

यथा कश्चित् पुरुषश्चण्डनृपाज्ञया तैलपरिपूर्णपात्रमादाय पिच्छलसंक्रमेण असिहस्तै राजपुरुषैः बिन्दुमात्रतैलभ्रंशेऽपि अद्यैव त्वां प्राणैर्वियोजयिष्याम इति ब्रुवाणैरधिष्ठितो गच्छन् 25 यदि ममात्र कथंचित् स्खलितं स्यात्, तदा नूनममी मां व्यापादयेयुरिति मरणभयात्तत्परो भवति, तथा व्रती गृहीतसंवरः प्रकृतस्खलिते नरकादिदुःखत्रासात् तदनवकाशाय तत्परः स्यात् यत्नवान् भवेत् ॥

उक्तमुपसंहृत्य दर्शयन्नाह—

**तस्मादुत्सङ्गगे सर्पे यथोत्तिष्ठति सत्वरम् ।** 30
**निद्रालस्यागमे तद्वत् प्रतिकुर्वीत सत्वरम् ॥ ७१ ॥**

यत एवम्, तस्मादुत्सङ्गे क्रोडगते सर्पे आशीविषे यथा त्वरितमेवोत्तिष्ठति—मा मामयमहिर्दक्षीत्, तथैव निद्रालस्यागमे मिद्धस्त्यानप्रादुर्भावे प्रतिकुर्वीत तत्प्रतिपक्षानित्यतादिभावनया[1] प्रतीकारं कुर्यात् ॥

अस्य चैवं यत्नवतोऽपि कथंचित् किंचित् स्खलितं शूरस्खलितन्यायेन स्यात्। तदा 5 प्रतीकारं कृत्वा पुनर्यत्नवान् भवेत्। इत्युपदर्शयन्नाह—

P 282 एकैकस्मिंश्छले सुष्ठु परितप्य विचिन्तयेत्।
कथं करोमि येनेदं पुनर्मे न भवेदिति ॥ ७२ ॥

स्मृतिप्रमोषे सति एकैकस्मिन् प्रत्येकं छले स्खलिते कथंचित् क्लेशानामनुप्रवेशे सति परितप्य अध्याशयेन मनस्तापं कृत्वा विचिन्तयेत्—अहो बत जानन्नेव स्खलितोऽस्मि, 10 तत्केन प्रकारेणात्र प्रतिविधानं करोमि येन पुनरिदं छलं न स्यात्? इत्येवं दृढसमारम्भं समादाय विहरेत्। न तु पुनः शिथिलः स्यादिति भावः ॥

अत एव विवेककामानां प्रतिषिद्धमप्यनुजानन्नाह—

संसर्गं कर्म वा प्राप्तमिच्छेदेतेन हेतुना।

आचार्योपाध्यायतदन्यसब्रह्मचारिप्रभृतिभिः बहुश्रुतैः त्रिपिटकवेदिभिः कौकृत्य- 15 विनोदनकुशलैः सह संसर्गं समवधानमिच्छेदाशंसेत्। तन्निश्रित एव तिष्ठेदित्यभिप्रायः। कर्म वा प्राप्तं तदववादानुशासनीलक्षणम्, आपत्तिसमुद्धरणम्, तैर्दण्डकर्मप्रणयनं वा समुत्पन्नमिच्छेत्। एतेन हेतुना तेषामवतारसंरक्षणाभिप्रायेण। एतदेवाह—

कथं नामास्ववस्थासु स्मृत्यभ्यासो भवेदिति ॥ ७३ ॥

P 283 केन विधिना नाम आसु अवस्थासु क्लेशावतारदशासु स्मृत्यभ्यासो भवेत्, अयत्नत 20 एवालम्बनात् संप्रमोषो न स्यात्, इत्यनेन अभिप्रायेण। अयं समुदायार्थः—कल्याणमित्रसंनिधानात् तदववादानुशासनीतः तदाचारसंदर्शनाच्च सदा स्मृतिसंप्रजन्यविहारिणः क्लेशा नावतारं लभन्ते। ततोऽस्य अविरोधत एव उत्साहो वर्धत इति युक्तम्।

सदा कल्याणमित्रं च जीवितार्थेऽपि न त्यजेत्। इति।

[ बोधि० ५.१०२ ]

25 तथा—

उपाध्यायानुशासन्या भीत्याप्यादरकारिणाम्।
धन्यानां गुरुसंवासात् सुकरं जायते स्मृतिः ॥ इति ॥

[ बोधि० ५.३० ]

अधुना तात्पर्यमुपदर्श्य आत्मविधेयतामुपदर्शयितुमाह—

30 लघुं कुर्यात्तथात्मानमप्रमादकथां स्मरन्।
कर्मागमाद्यथा पूर्वं सज्जः सर्वत्र वर्तते ॥ ७४ ॥

सर्वकर्मण्यमात्मानं कायवाक्चित्तलक्षणं तथा कुर्यात्, उत्साहाभ्यासादायत्तिं नयेदित्यर्थः । यथा कर्मागमात् कर्मारम्भात् पूर्वं प्रागेव सज्जः आयत्तीकृतः सुदान्ताश्ववत् तन्मार्गनिरीक्षणासीन इव कर्मणि प्रवर्तते ॥

उक्तमेवार्थमुदाहरणेन व्यक्तीकुर्वन्नाह—

यथैव तूलकं वायोर्गमनागमने वशम् ।     5 P 284
तथोत्साहवशं यायादृद्धिश्चैवं समृध्यति ॥ ७५ ॥

तूलकं कर्पासादिसमुद्भूतं यथा वायोर्गमने च आगमने च वशमायत्तम्, तथा तद्वदेव उत्साहवशं यायात् वीर्यवशवर्ती भवेत् । एवमभ्यासपरायणस्य ऋद्धिश्च आकाशगमनादिलक्षणा समृध्यति संपद्यते ॥

परात्मसमतापरात्मपरिवर्तने पुनः उभयत्रापि उपयुक्ते इति ध्यानपरिच्छेदे एव 10 व्याख्येये ॥

इति प्रज्ञाकरमतिविरचितायां बोधिचर्यावतारपञ्जिकायां
वीर्यपारमिता नाम सप्तमः परिच्छेदः ॥

# ८ ध्यानपारमिता नाम अष्टमः परिच्छेदः ।

P 285 तदेवं क्षान्तेरनन्तरं वीर्यमभिधाय यदुक्तम्—

संश्रयेत वनं ततः ।

समाधानाय युज्येत भावयेच्चाशुभादिकम् ॥

5 [ शिक्षा० स० कारिका—२० ]

इति, तद् वर्धयित्वैवमित्यादिना प्रतिपादयितुमुपक्रमते—

**वर्धयित्वैवमुत्साहं समाधौ स्थापयेन्मनः ।**

एवमुक्तप्रतिपक्षस्य आसेवनादिना विपक्षमुन्मूल्य वीर्यं वर्धयित्वा अनाभोगवाहितया स्थिरीकृत्य समाधौ समाधाने चित्तैकाग्रतायां स्थापयेन्मनः, तत्र निवेशयेत् । आरोपयेदिति 10 यावत् । किमर्थमित्याह—

**विक्षिप्तचित्तस्तु नरः क्लेशदंष्ट्रान्तरे स्थितः ॥ १ ॥**

तुरिति हेतौ । यस्मात् समाधानमन्तरेण विक्षिप्तचित्तः असमाहितचित्तसमुदाचारः वीर्यवानपि नरः पुरुषः क्लेशानां राक्षसानामिव दंष्ट्रान्तरे मध्ये स्थितः, कवलीकृत एव तैरास्ते । तस्मात् ॥

P 286 15 तत्र तावत् समाधिविपक्षं निराकर्तुं पीठिकाबन्धं रचयन्नाह—

**कायचित्तविवेकेन विक्षेपस्य न संभवः ।**
**तस्माल्लोकं परित्यज्य वितर्कान् परिवर्जयेत् ॥ २ ॥**

कायविवेको जनसंपर्कविवर्जनता । चित्तविवेकः कामादिवितर्कविवर्जनता । इति कायचित्तयोर्विवेके निरासङ्गतया विक्षेपस्य तयोरुन्नततायाः । आलम्बनाप्रतिष्ठानस्येति 20 यावत् । न संभवः न प्रादुर्भावः । यत एवम्, तस्माल्लोकं स्वजनबान्धवादिलक्षणं परित्यज्य विहाय पूर्वं वितर्कांश्चित्तविक्षेपहेतून् परिवर्जयेत् परित्यजेत् ॥

तत्र लोकापरित्यागहेतुं तावन्निराकर्तुमुपदर्शयन्नाह—

**स्नेहान्न त्यज्यते लोको लाभादिषु च तृष्णया ।**
**तस्मादेतत्परित्यागे विद्वानेवं विभावयेत् ॥ ३ ॥**

25 आत्मात्मीयग्रहप्रवर्तितोऽभिष्वङ्गः स्नेहः । तस्मान्न त्यज्यते लोकः । लाभादिषु च तृष्णया । आदिशब्दात् सत्कारयशःश्लोकादयः परिगृह्यन्ते । तेषु तृष्णया प्रलोभेन । P 287 चकारान्न त्यज्यते लोक इति समुच्चीयते । यत एतत्कारणमपरित्यागस्य, तस्मादेतस्य स्नेहस्य लोभादीनां वा । यदि वा लोकस्य परित्यागनिमित्तं विद्वान् विचक्षणः । एवमिति वक्ष्यमाणं विभावयेत् ॥

तदेवाह—

शमथेन विपश्यनासुयुक्तः
कुरुते क्लेशविनाशमित्यवेत्य ।
शमथः प्रथमं गवेषणीयः
स च लोके निरपेक्षयाभिरत्या ॥ ४ ॥ 5

शमथः चित्तैकाग्रतालक्षणः समाधिः । तेन सुयुक्त इति अपोद्धृत्य इहापि योजनीयम् । यदि वा हेत्वर्थे तृतीया । शमथेन हेतुना विपश्यनासुयुक्तः । सहार्थे वा । शमथेन सार्धं विपश्यनासुयुक्त इति । विपश्यना यथाभूततत्त्वपरिज्ञानस्वभावा प्रज्ञा । तया सुयुक्तः । युगनद्धवाहिमार्गयोगेन कुरुते क्लेशानां विनाशं प्रहाणमित्येवमवेत्य ज्ञात्वा क्लेशविमुमुक्षुणा शमथः प्रथममादौ गवेषणीयः । उत्पाद्य इत्यर्थः । तदनन्तरं विपश्यना । 10

समाहितो यथाभूतं प्रजानातीत्यवदन्मुनिः ।
शमाच्च न चलेच्चित्तं बाह्यचेष्टानिवर्तनात् ॥ इति ।

[ शिक्षा० स० कारिका–९ ]

स च शमथः लोके लोकविषये निरपेक्षया अभिरत्या । अभिरतिं परिहरत एव उत्पद्यते नान्यथा ॥ 15 P 288

तामेव अभिरतिनिरपेक्षतामुत्तरप्रबन्धेन दर्शयितुमाह—

कस्यानित्येष्वनित्यस्य स्नेहो भवितुमर्हति ।
येन जन्मसहस्राणि द्रष्टव्यो न पुनः प्रियः ॥ ५ ॥

कस्य सचेतनस्य स्वयमेव अनित्यस्य अनित्येषु पुत्रदारादिषु स्नेहो भवितुमर्हति युज्यते । केन हेतुना ? येन कारणेन जन्मनां सहस्राणि अनेकानि जन्मानि अपर्यन्तसंसारे 20 संसरता कदाचिदपि द्रष्टव्यो न पुनः प्रियः । प्रीणातीति प्रिय उच्यते ॥

तदपि च अस्मिन्नास्ति इत्याह—

अपश्यन्नरतिं याति समाधौ न च तिष्ठति ।
न च तृप्यति दृष्ट्वापि पूर्ववद्बाध्यते तृषा ॥ ६ ॥

यदा तावन्न पश्यति तम्, तदा अयमरतिमधृतिं याति । तेनैव असौमनस्येन 25 समाकुलितचित्तत्वात् समाधौ न च तिष्ठति, नैव स्थितो भवति । तमवलम्बितुमशक्त इत्यर्थः । अथ यदापि प्रियदर्शनमस्य जायते, तदापि न च तृप्यति । दृष्ट्वापि पुनरधिकतरं बाध्यते तृषा । तद्दर्शनाभिलाषेण पूर्ववत् अदर्शनकाल इव पीड्यते ॥

अपि च । सर्वानर्थनिदानं प्रियसंगतिकरणमित्युपदर्शयन्नाह—

न पश्यति यथाभूतं संवेगादवहीयते । 30 P 289
दह्यते तेन शोकेन प्रियसंगमकाङ्क्षया ॥ ७ ॥

यथाभूतमविपरीतं दोषगुणान्न पश्यति न जानाति । प्रियसंगमकाङ्क्षया तेनैव मोहेन संवेगादवहीयते भ्रष्टो भवति । तथा तेनैव अभिष्वङ्गेण दह्यते तेन शोकेन मुहूर्तमपि विच्छेदे । तथा तेन शोकेन दह्यते परितप्यते तेनैव मनस्तापेन । प्रियसंगमकाङ्क्षया प्रियस्य संगमः संप्रयोगः, तस्मिन्नाकाङ्क्षा तृष्णा, तया हेतुभूतया, पुनरुत्तरोत्तरमधिका-
5 धिकप्रार्थनया ॥

इतोऽप्यनर्थहेतुरेव तत्संगतिरित्याह—

**तच्चिन्तया मुधा याति ह्रस्वमायुर्मुहुर्मुहुः ।**

तस्य प्रियस्य तत्संगमस्य वा चिन्तया तद्गुणानां सदा परिभावनया । कथं नाम ममास्य प्रियसंगमस्य विच्छित्तिर्मा भूदिति तल्लीनचित्ततया वा । निष्फलमेव आयुःसंस्काराः
10 प्रतिक्षणं क्षीयन्ते । न च क्वचिदपि कुशलकर्मणि समुपयुज्यन्ते इति भावः । न च यदर्थमायुः क्षयमुपनीयते तन्मित्रं स्थिरमित्यत आह—

P 290 **अशाश्वतेन धर्मेण धर्मो भ्रश्यति शाश्वतः ॥ ८ ॥**

अवश्यं भङ्गुरतया अनवस्थानादस्थावरेण मित्रेण हेतुना धर्मो भ्रश्यति परिहीयते शाश्वतो दीर्घकालावस्थायी संभारान्तर्गमात् फलमहत्त्वाच्च ॥

15 स्यादेतत्—अवश्यं हि किंचित्तत्संगमाद्धितसुखनिबन्धनं प्राप्यते । तत्किमिति सर्वथा तन्निषिध्यत इत्यत्राह—

**बालैः सभागचरितो नियतं याति दुर्गतिम् ।**
**नेष्यते विषभागश्च किं प्राप्तं बालसंगमात् ॥ ९ ॥**

नापि तत्संगमादनर्थमन्तरेण किंचिदपरमिह लभ्यते । तथा हि बालैः पृथग्जनैः सह
20 सभागचरितः समानशीलः नियतमवश्यं याति दुर्गतिम्, तत्कर्मसदृशसमाचरणात् आर्यधर्म-बहिर्भावाच्च । अथ आर्यधर्मानुवर्तनात् ततोऽसदृशकर्मकारी स्यात्, तदा नेष्यते द्विष्यते विसभागश्चेति असमानचरितः । बालैरिति संबन्धः । अत्र कर्तरि तृतीया । इति उभयलोकबाधनात् किं प्राप्तमधिगतं हितसुखनिमित्तं बालसंगमात् ? नैव किंचिदित्यर्थः ॥

न च अनुकूलचरितैरपि आत्मसात्कर्तुं शक्या इत्याह—

P 291 25 **क्षणाद्भवन्ति सुहृदो भवन्ति रिपवः क्षणात् ।**
**तोषस्थाने प्रकुप्यन्ति दुराराधाः पृथग्जनाः ॥ १० ॥**

क्षणमात्रेण सुहृदो मित्राणि भवन्ति किंचित् स्वप्रयोजनमुद्दिश्य, क्षणादेव च विषमाभिप्रायत्वात् किंचिन्निमित्तमालम्ब्य त एव रिपवः शत्रवो भवन्ति । न च निमित्त-मप्येषां नियतम्, यत् कदाचित्तोषस्थाने प्रीतिविषये विपर्यासवशात् प्रकुप्यन्ति । इति
30 दुराराधा दुःखेनाराधयितुं शक्याः पृथग्जनाः अनार्याः ॥

अपरमपि बालधर्मं तद्विवर्जनार्थमुपदर्शयन्नाह—

**हितमुक्ताः प्रकुप्यन्ति वारयन्ति च मां हितात् ।**
**अथ न श्रूयते तेषां कुपिता यान्ति दुर्गतिम् ॥ ११ ॥**

इदं करणीयम्, इदमकरणीयम्, इत्युक्ताः अभिहिताः प्रकुप्यन्ति विद्विषन्ति, न पुनस्तदुक्तं हितमिति गृह्णन्ति । प्रत्युत वारयन्ति च मां हितात्, किं तव अनेन केवल- 5 प्रयासफलानुष्ठानेनेति तत्र प्रवृत्तं मां निषेधयन्ति ततः । अथ न श्रूयते तेषां बालानाम् । वचनमिति शेषः । यदि तद्वचनमवगम्य हिते प्रवृत्तिः क्रियते, तदा कुपिता अस्मद्वचनान्नायं निवर्तते इति तस्मिन् हितकर्मकारिणि कोपं कृत्वा तत्कर्मप्रेरिता दुर्गतिं प्रयान्ति ॥

इमं च बालधर्ममपरं तद्विवेकाय भावयेदित्युपदर्शयन्नाह—

**ईर्ष्योत्कृष्टात्समाद्द्वन्द्वो हीनान्मानः स्तुतेर्मदः ।** 10 P 292
**अवर्णात्प्रतिघश्चेति कदा बालाद्धितं भवेत् ॥ १२ ॥**

आत्मनो विद्याकुलधनादिभिरुत्कृष्टादुत्तमादीर्ष्या परसंपत्त्यसहनता जायते । अर्थात्तेष्वेव । आत्मना समात् तुल्याद् द्वन्द्वो विवादः । आत्मनो हीनादधमान्मानः, अहमितः श्रेष्ठ इत्यभिमननात् । स्तुतेर्मदः सदसतां तद्गुणानामाख्यानादहं महीयानित्यारोपादवलेपः । अवर्णादात्मनो दोषकीर्तनश्रवणाद् द्वेषश्च । अर्थादवर्णवादिनि । इत्येवं कदा 15 कस्मिन् काले बालाद्धितं भवेत्? न कदाचिदित्यर्थः ॥

इतोऽपि बालान् परिहृत्य विहरेदिति प्रतिपादयितुमाह—

**आत्मोत्कर्षः परावर्णः संसाररतिसंकथा ।**
**इत्याद्यवश्यमशुभं किंचिद्बालस्य बालतः ॥ १३ ॥**

एकस्य बालस्य अपरस्माद्बालात् इत्येवमादि किंचिदशुभमकुशलमवश्यं नियमेन 20 जायते । किं तत्? आत्मन उत्कर्षः प्रकर्षः श्रुतज्ञानादिप्रशंसया । परेषामवर्णो दोषप्रकाशनं श्रुतादिप्रच्छादनम् । या संसारे रतिरभिरामः तस्याः संकथा संवर्णनम्, कामगुणानां संप्रमोदनात् । इत्यादि एवंप्रकारम् ॥

**एवं तस्यापि तत्सङ्गात्तेनानर्थसमागमः ।**

अपरस्यापि तत्सङ्गात् द्वितीयस्य सङ्गात् किंचिदशुभमवश्यं स्यात् । येन एवम्, 25 P 293 तेन कारणेन अनर्थस्य अकल्याणस्य समागमः संप्राप्तिरेव अयं बालसमागमः । अत आर्यधर्मानुशिक्षणार्थम्—

**एकाकी विहरिष्यामि सुखमक्लिष्टमानसः ॥ १४ ॥**

बालजनसंगमवियुक्तः अद्वितीयः विहरिष्यामि । तद्विवेकात् सुखम् । क्रियाविशेषणमेतत् । कथम्? अक्लिष्टमानस इति तत्संपर्कविवर्जनात् तत्कृतसंक्लेशाभावात् । पूर्वस्मिन् 30 हेतुपदमेतत् । यदि वा । सुखं कायिकम् । अक्लिष्टमानस इति मानसम् ॥

तस्माद्बालजनसंपर्कजदुःखपरिजिहीर्षुणा तत्संगतिर्न कार्येति कथयितुमाह—

बालाद्दूरं पलायेत प्राप्तमाराधयेत्प्रियैः।
न संस्तवानुबन्धेन किं तूदासीनसाधुवत्॥ १५॥

बालात् सर्वतो दूरमारात् पलायेत अपसरेत्, यथा तैः सह काचिदपि संगतिर्न 5 स्यात्। अथ कथंचिद्दैवयोगाद्भवेत्, तदा प्राप्तं मिलितमाराधयेत् आरागयेत्। प्रियैः प्रीतिकरैरुपचारैः। आराधयन्नपि न संस्तवानुबन्धेन न परिचयासक्तिकरणाभिप्रायेण। यदि वा, न संस्तवानुनयेन, किं तर्हि प्रतिघानुनयवर्जनादुदासीनसाधुवत् सदाचार-मध्यस्थजनवत्॥

P 294 इदमपरं साधुजनसमाचारं शिक्षयितुमाह—

10 धर्मार्थमात्रमादाय भृङ्गवत् कुसुमान्मधु।
अपूर्व इव सर्वत्र विहरिष्याम्यसंस्तुतः॥ १६॥

धर्मायेदं धर्मार्थम्, तदेव केवलं तन्मात्रम्। तदादाय गृहीत्वा। सारादानं कृत्वे-त्यर्थः। भृङ्गवत् चञ्चरीकवत्। मधु मकरन्दम्। यदि वा। धर्म एव अर्थः प्रयोजनमस्य चीवरपिण्डपातादेरिति विग्रहः। बालसंपर्कविमुखः अपूर्व इव नवचन्द्रोपमः सर्वत्र देशे स्थाने 15 वा विहरिष्यामि। असंस्तुतः अपरिचितः। तन्निवासिजनैः प्रत्यासत्तिरहित इत्यर्थः॥

तदेवं प्रियसंगतिकारणं स्नेहमपाकृत्य सांप्रतं लाभादितृष्णा लोकापरित्यागकारणं परिहर्तव्येत्युपदर्शयन्नाह—

लाभी च सत्कृतश्चाहमिच्छन्ति बहवश्च माम्।
इति मर्त्यस्य संप्राप्तान्मरणाज्जायते भयम्॥ १७॥

20 लाभो विद्यतेऽस्येति चीवरपिण्डपातादिलाभयोगाल्लाभी च अहम्। सत्कृतश्च पूजितो जनैः। इच्छन्ति अभिलषन्ति बहवश्च अनेके माम्। बहुजनसंमतोऽहमित्यर्थः। इत्येवं चिन्तयतः एवं मर्त्यस्य मनुष्यस्य मरणाज्जायते भयम्। किंभूतात्? संप्राप्तात् अचिन्तितोपस्थितात्॥

यत्र यत्र रतिं याति मनः सुखविमोहितम्।
25 तत्तत्सहस्रगुणितं दुःखं भूत्वोपतिष्ठति॥ १८॥
तस्मात्प्राज्ञो न तामिच्छेदिच्छातो जायते भयम्।
स्वयमेव च यात्येतद्धैर्यं कृत्वा प्रतीक्षताम्॥ १९॥
बहवो लाभिनोऽभूवन् बहवश्च यशस्विनः।
सह लाभयशोभिस्ते न ज्ञाताः क्व गता इति॥ २०॥

---

1 Neither the manuscript in Sanskrit, nor the Tibetan translation of the Com. show any lacuna here, but the Mss. of the text have here the following stanzas, viz, 18–22, and a portion of the Com. on 22nd.

मामेवान्ये जुगुप्सन्ति किं प्रहृष्याम्यहं स्तुतः ।
मामेवान्ये प्रशंसन्ति किं विषीदामि निन्दितः ॥ २१ ॥
नानाधिमुक्तिकाः सत्त्वा जिनैरपि न तोषिताः ।
किं पुनर्मादृशैरज्ञैस्तस्मात्किं लोकचिन्तया ॥ २२ ॥

* * * * * * इति सर्वदा अवश्यंभाविमरणमनसिकारात् किं लोकस्य बाल- 5 P 295
जनस्य चिन्तया चरितपरिभावनया ? न किंचित् प्रयोजनम्, अनुपादेयत्वादिति भावः ॥

इत्थमपि बालजनसंगतिर्दुःखहेतुरेवेत्याह—

निन्दन्त्यलाभिनं सत्त्वमवध्यायन्ति लाभिनम् ।
प्रकृत्या दुःखसंवासैः कथं तैर्जायते रतिः ॥ २३ ॥

निन्दन्ति कुत्सयन्ति अलाभिनं लाभविरहितं सत्त्वम् । अकृतपुण्योऽयं वराकः, येन 10
अयं पिण्डपातादिमात्रकमपि नैव अपरिक्लेशेन प्राप्नोतीति । लाभिनं पुनरवध्यायन्ति प्रसन्नै-
र्दायकदानपतिभिश्चीवरादिप्रदानैः पूजितम् । कुहनादिभिरपि दायकदानपतीन् प्रसाद्य
चीवरादिलाभमासादयति । अन्यथा किमन्यस्य तथाविधा गुणा न सन्ति, येन अयमेव वरं
लभते नापरः, इति अस्मिंश्चित्तमप्रसादयन्ति, वचनं चैवमुद्गिरन्ति । इति उभयथापि तेभ्यो P 296
न चेतसि शान्तिरस्ति । तदेवं प्रकृत्या स्वभावेन दुःखहेतुत्वात् दुःखं संवासो येषां बालानां 15
ते तथा । तैस्तथाविधैः सह संवसतः कथं जायते रतिः ? नैवेत्यर्थः[1] ॥

[ न च बालो दृढसुहृद्भवति । यस्मान्न बाल इत्याह—

न बालः कस्यचिन्मित्रमिति चोक्तं तथागतैः ।
न स्वार्थेन विना प्रीतिर्यस्माद्बालस्य जायते ॥ २४ ॥
स्वार्थद्वारेण या प्रीतिरात्मार्थं प्रीतिरेव सा ।[2] 20
द्रव्यनाशे यथोद्वेगः सुखहानिकृतो हि सः ॥ २५ ॥

मित्रमिति सुहृत् । उक्तं तथागतैनेत्यागमेषु उक्तम् । कस्मात् ? यस्मात् स्वप्रयोजनेन
विना बालस्य न कर्हिचिदपि प्रीतिर्जायते । तस्मात् तदभावे विपर्ययः । तदपि बालसंवासे
सत्यपि न निर्दिष्टम् ( ? ) तत्र मैत्रीकृतेनापि पृथग्जनस्य प्रीतिरशक्या ॥

एवं सति तत्संवासोद्भूतदोषपरिहारार्थं सुखेन ] सौमनस्येन च विहाराय विवेक- 25
कामेन मया अरण्यनिषेवणाय यतितव्यमिति तदनुशंसां दर्शयन्नाह—

नावध्यायन्ति तरवो न चाराध्याः प्रयत्नतः ।
कदा तैः सुखसंवासैः सह वासो भवेन्मम ॥ २६ ॥

---

१ After नैवेत्यर्थः, there is a lacuna in the Ms. of the Com. which is made good from the Tibetan Translation. २ This stanza is not translated in Tibetan.

P 297 तरवो वृक्षाः नावध्यायन्ति, न च आराध्याः आराधयितव्याः प्रयत्नत इति। तदनुकूलसमाचरणेन अरण्यादिषु वसता विषमाभिप्रायरहितत्वात्। इति कदा तैस्तरुभिः सह वासो भवेन्मम? किंभूतैः सुखसंवासैरित्याशंसति। सुखहेतुत्वात् सुखमिति पूर्ववत्॥

पुनरेकाकिताविहारेऽभिरतिमाह—

5 शून्यदेवकुले स्थित्वा वृक्षमूले गुहासु वा।
कदानपेक्षो यास्यामि पृष्ठतोऽनवलोकयन्॥ २७॥

शून्यदेवकुले जनसंकीर्णतारहिते स्थित्वा निवस्य रात्रिमेकामुषित्वा द्वे वा, यथाभिलाषं वृक्षमूले वृक्षस्याधस्तात्। पर्वतादिषु गुह्यप्रदेशा गुहाः, तत्र वा। अनपेक्षः कदा यास्यामि? आसङ्गस्थानस्य कस्यचिदभावात्। अत एव पृष्ठतोऽनवलोकयन् पश्चादनि-
10 वृत्तेरभावात्॥

पुनरन्यथा प्राह—

अममेषु प्रदेशेषु विस्तीर्णेषु स्वभावतः।
स्वच्छन्दचार्यनिलयो विहरिष्याम्यहं कदा॥ २८॥

केनचिद्विरोधकारिणा पूर्वमस्वीकृतेषु। विस्तीर्णेषु विपुलेषु सौमनस्यकारिषु। स्वभावतः
15 स्वयमेव तथाविधेषु, न कृत्रिमतया। विहरिष्याम्यहं कदा इत्याशास्ते। एवं विहरतो यत्सुखं
P 298 तदुपदर्शयन्नाह—स्वच्छन्दचारी न परतन्त्रवृत्तिः। अनिलयः न विद्यते निलयः आलयः निरासङ्गतया यस्येति अनिलयः, क्वचिदपि स्वीकाराभावात्। तथाभूतः प्रतिबद्धो न कस्यचित्। शेषः सुबोधः॥

पुनरेवमल्पेच्छतया आशंसनीयमित्यादर्शयन्नाह—

20 मृत्पात्रमात्रविभवश्चौरासंभोगचीवरः।
निर्भयो विहरिष्यामि कदा कायमगोपयन्॥ २९॥

मृत्पात्रं मृण्मयं भिक्षाभाजनम्, तदेव केवलं तन्मात्रं विभवो धनं यस्येति। तथा चौराणामसंभोग्यं पांसुकूलाम्बरकृतत्वादपरिभोग्यम्। अनुपयुक्तमिति यावत्। तादृशं चीवरं वासो यस्य स तथा। एतद्द्वयमपि परैरहार्यम्। अत एव निर्भयः कायजीवितनिरपेक्षतया च।
25 तदेव दर्शयति—कायमगोपयन्निति। बाह्याध्यात्मिकस्य परिग्रहाग्रहस्याभावात् असंरक्षयन्॥

इयमनित्यता च आसङ्गपरित्यागस्य कारणं सर्वदा सेवितव्येति वृत्तत्रितयेनोपदर्शयन्नाह—

कायभूमिं निजां गत्वा कङ्कालैरपरैः सह।
स्वकायं तुलयिष्यामि कदा शतनधर्मिणम्॥ ३०॥
30 अयमेव हि कायो मे एवं पूतिर्भविष्यति।
P 299 शृगाला अपि यद्गन्धान्नोपसर्पेयुरन्तिकम्॥ ३१॥

**अस्यैकस्यापि कायस्य सहजा अस्थिखण्डकाः।**
**पृथक् पृथग्गमिष्यन्ति किमुतान्यः प्रियो जनः॥ ३२॥**

कायभूमिं निजामिति श्मशानभूमिम्, चिरमपि स्थित्वा तत्पर्यवसानत्वाच्छरीरस्य। कङ्कालैरपरैरिति पूर्वमृतानामस्थिभिः पञ्जरैः। शतनं पूतिभावः, तद्धर्मिणं तत्स्वभावम्। तामेव तुलनां कथयति—अयमेव हीत्यादिना। एवमिति अपरकङ्कालगलितशरीरसादृश्य- 5 मुच्यते। पूतिः कुत्सितो भविष्यति। कीदृश इत्याह—शृगाला इत्यादि। अतिदुर्गन्धतया तदाहारपरायणानां गोमायूनामपि दुःसह इति। इत्थमपि प्रियस्य संगतिरनित्येत्याह— अस्यैकस्यापीत्यादि। अस्य उपात्तस्यैकस्य एकत्वेन कल्पितस्यापि कायस्य। सहजाः कायेन सहजाताः अस्थिखण्डकाः पृथक् पृथग्भविष्यन्ति। विसंयुक्ता भविष्यन्तीत्यर्थः। किमुतान्यः प्रियो जनः पृथग् न भविष्यति, यः सर्वदा विसंयुक्त एवास्ते॥ 10

स्यादेतत्—सुखदुःखसहायाः सदा ममैते पुत्रदारादयः। तदेषु युक्त एवानुनयः कर्तुमित्याह—

**एक उत्पद्यते जन्तुर्म्रियते चैक एव हि।**
**नान्यस्य तद्व्यथाभागः किं प्रियैर्विघ्नकारकैः॥ ३३॥**

जन्ममरणयोर्न कश्चित् कस्यचिद्दुःखसंभागी स्यात्। अन्तराले च स्वकर्मोपहितमेव 15 P 300 सुखदुःखमुपभुञ्जते सर्वे। अतोऽभिमानमात्रमेवैतत्। यतो नान्यस्य तदात्मनो व्यतिरिक्तस्य तद्व्यथाभागः। तस्यानुनयकारिणो व्यथा, तस्या भागः प्रत्यंशो जायते, तस्य सा, तेनैव तस्याः संवेद्यमानत्वात्। अतो न किंचित् प्रयोजनं प्रियैः कुशलपक्षविघातकारिभिः॥

परमार्थतो न कस्यचित् केनचित् संगतिरस्तीत्युपदर्शयन्नाह—

**अध्वानं प्रतिपन्नस्य यथावासपरिग्रहः।** 20
**तथा भवाध्वगस्यापि जन्मावासपरिग्रहः॥ ३४॥**

मार्गप्रस्थितस्य कांचिद्दिशं गन्तुमुद्यतस्य यथा अपरैरध्वगैः सह एकस्मिन्नावासे क्वचिन्मण्डपादौ वा आवासपरिग्रहो भवति, तथा संसारेऽपि कर्मायत्तगतेः संसरतो ज्ञातिसगोत्रसालोहितादिभिरेकस्मिन् जन्मनि आवासपरिग्रहो जायते। पुनरपि तत्परित्यज्य क्वचिदेकाकितया याति। न च तत्र केचित्सहायास्तमनुगच्छन्ति। अतो न केनचित् 25 कस्यचिद्वास्तवी संगतिः संभवति। तस्मान्नानर्थसहस्रोपनेत्रीं स्वयमुपकल्प्य केनचित् संगतिं कुर्यात्॥

तदेवमभिधाय संगतिदोषम्, एकाकितायाः पुनरिमे गुणा इति वृत्तत्रितयेनोपदर्शयन्नाह— P 301

**चतुर्भिः पुरुषैर्यावत्स न निर्धार्यते ततः।** 30
**आशोच्यमानो लोकेन तावदेव वनं व्रजेत्॥ ३५॥**

असंस्तवाविरोधाभ्यामेक एव शरीरकः ।
पूर्वमेव मृतो लोके म्रियमाणो न शोचति ॥ ३६ ॥
न चान्तिकचराः केचिच्छोचन्तः कुर्वते व्यथाम् ।
बुद्धाद्यनुस्मृतिं चास्य विक्षिपन्ति न केचन ॥ ३७ ॥

5 अवश्यमनिच्छन्नपि इदानीं जीवदवस्थायां मरणमुपगतो बलात्त्याजयितव्यो [1गृहावासः। तस्मादेवं स्वयं जीवन्नेव त्यक्तुमर्हति । तत इति गृहात् ।] आशोच्यमानः हा वत्सेत्यादिविलापवचनैः परिदेव्यमानः लोकेन बन्धुप्रभृतिना तावदेव ततः पूर्वमेव वनं व्रजेत् । कः पुनरत्र गुणविशेष इत्याह—असंस्तवेत्यादि । अनुनयप्रतिघाभावात् म्रियमाणो P 302 न शोचति, शोकोपजनितदुःखभागी न भवति । कुतः? पूर्वमेव मृतो लोके । यदैव 10 गृहान्निष्क्रान्तः, तदैव स्वजनबान्धवादौ लोकविषये । अयमपरो गुणस्तस्येत्याह—न चान्तिकचरा इत्यादि । अन्तिकचराः समीपवर्तिनो ज्ञातिसगोत्रादयस्तद्वियोगातुराः शोचन्तः शोकमुपजनयन्तः न च नैव कुर्वते व्यथाम्, आत्मनः कायमनसोः पीडाम् । यदि वा । तेषां शोकं पश्यतो म्रियमाणस्य मनस्तापम् । न केवलमयमेव गुणः, अपि तु बुद्धाद्यनुस्मृतिं आदिशब्दाद्धर्माद्यनुस्मृतिम्, तत्त्वालम्बनमनस्कारं वा । अस्येति जनसंपर्कविवेकचारिणो 15 मरणसमये ॥

तस्मादित्यादिना उपसंहरति—

तस्मादेकाकिता रम्या निरायासा शिवोदया ।
सर्वविक्षेपशमनी सेवितव्या मया सदा ॥ ३८ ॥

एकाकिता अनासङ्गविहारिता । रम्या सुखहेतुत्वात् । निरायासा दुःखविपक्षत्वात् । 20 शिवोदया निःश्रेयसावाहकत्वात् । सर्वविक्षेपशमनी सर्वविक्षेपस्य कायवाङ्मानसिकस्य दुराचारस्य शमनी निवर्तनी समाधानहेतुत्वात् । सेवितव्या मया सदेति । अत्रैव अभिनिवेशेन आसङ्गः कार्य इत्यर्थः ॥

तदेवं जनसंपर्कविवर्जनात् कायविवेकं प्रतिपाद्य चित्तविवेकं प्रतिपादयितुमाह—

P 303 सर्वान्यचिन्तानिर्मुक्तः स्वचित्तैकाग्रमानसः ।
25 समाधानाय चित्तस्य प्रयतिष्ये दमाय च ॥ ३९ ॥

सर्वा या अन्यचिन्ता असद्वितर्कस्वभावाः, ताभिर्निर्मुक्तः, तद्विरहितः। स्वचित्तैकाग्रमानसः स्वचित्तमेव एकमग्रं प्रधानं यस्मिन् मानसे मनसिकारे तत् तथोक्तम्, तादृशं मानसं यस्य स तथा । स्वचित्तं वा एकाग्रमेकायत्तं तत्प्रचारव्यवलोकनतत्परं नियतालम्बनप्रतिबद्धं वा मानसं यस्येति समासः । तथाभूतः समाधानाय चित्तस्य शमथाय प्रयतिष्ये, 30 तत्परायणो भविष्यामि । तदेकाग्रतायां नियोजयिष्यामीत्यर्थः । दमाय चेति पुनःपुनस्तत्रैवालम्बने नियोजनाय, बहिर्विक्षेपनिवारणाय वा ॥

---

1 Lacuna in Ms. made good from Tibetan translation.

तत्र चित्तसमाधानस्य विपक्षत्वात् कामवितर्कं निवारयितुमाह—

कामा ह्यनर्थजनका इह लोके परत्र च ।
इह बन्धवधोच्छेदैर्नरकादौ परत्र च ॥ ४० ॥

अप्रहीणभवसंयोजनैः कमनीयतया अध्यवसितत्वात् कामा रूपादयो विषया उच्यन्ते। हिशब्दो यस्मादर्थे । तस्मादुद्विज्य कामेभ्यः [ ८.८५ ] इति वक्ष्यमाणेन संबन्धः । ते च 5 सेव्यमाना अनर्थजनका अ[1]........ P 304

यदर्थं दूतदूतीनां कृताञ्जलिरनेकधा ।
न च पापमकीर्तिर्वा यदर्थं गणिता पुरा ॥ ४१ ॥
प्रक्षिप्तश्च भयेऽप्यात्मा द्रविणं च व्ययीकृतम् ।
यान्येव च परिष्वज्य बभूवोत्तमनिर्वृतिः ॥ ४२ ॥ 10
तान्येवास्थीनि नान्यानि स्वाधीनान्यममानि च ।
प्रकामं संपरिष्वज्य किं न गच्छसि निर्वृतिम् ॥ ४३ ॥
उन्नाम्यमानं यत्नाद्यन्नीयमानमधो ह्रिया ।
पुरा दृष्टमदृष्टं वा मुखं जालिकयावृतम् ॥ ४४ ॥
तन्मुखं त्वत्परिक्लेशमसहद्भिरिवाधुना । 15
गृध्रैर्व्यक्तीकृतं पश्य किमिदानीं पलायसे ॥ ४५ ॥
परचक्षुर्निपातेभ्योऽप्यासीद्यत्परिरक्षितम् ।
तदद्य भक्षितं यावत् किमीर्ष्यालो न रक्षसि ॥ ४६ ॥
मांसोच्छ्रयमिमं दृष्ट्वा गृध्रैरन्यैश्च भक्षितम् ।
आहारः पूज्यतेऽन्येषां स्रक्चन्दनविभूषणैः ॥ ४७ ॥ 20

···रूपः । पूज्यते त्वया स्रगादिभिः । तैर्गृध्रैरन्यैश्च गोमायुप्रभृतिभिर्मांसोच्छ्रयं मांसपुञ्जमिमं भक्षितं बीभत्सं दृष्ट्वा किमीर्ष्यालो न रक्षसीति योजयितव्यम् । किमिदानीं पलायसे इति वा व्यवहितेन संबन्धः ॥

ननु इदमपि प्रष्टव्यो भवानित्याह—

निश्चलादपि ते त्रासः कङ्कालादेवमीक्षितात् । 25

निश्चलादपि काष्ठलोष्ठसमानात् तव त्रासो जायते इति काका पृच्छति । कङ्कालात् अस्थिपञ्जरात् । एवमपि बीभत्सरूपात् ईक्षितात् दृष्टात् यदि वा एवं त्रासः । यद्दूरादपि दूरतरं पलायसे इति योजनीयम् । यदेवं चलतः कथं न त्रास इत्याह— P 305

वेतालेनेव केनापि चाल्यमानाद्भयं न किम् ॥ ४८ ॥

भूतग्रहेण चाल्यमानात् जीवतश्चलतः किं न भयं भवति ? तस्मादतिशयेन 30 भयं युक्तमित्यर्थः ॥

---

[1] One folio of the Ms. of the Com. is missing.

एवं तावज्जुगुप्सनीयतां प्रतिपाद्य पुनरन्यथा प्रतिपादयितुमाह—

एकस्मादशनादेषां लालामेध्यं च जायते।[१]
तत्रामेध्यमनिष्टं ते लालापानं कथं प्रियम्॥ ४९॥

यो हि नाम मोहावृतविवेको रागविषमूर्च्छितचैतन्यः, तस्य अतिक्रमनीयतया कामिनीवदनमधुपानबुद्ध्या तन्मुखविगलल्लालापानाभिलाषिणः। पर्यनुयोगमाह—एकमेव कारणं द्वयोरप्याहारपानस्वभावात्। तत्र तयोर्मध्ये अमेध्यं पुरीषमप्रियं भवतः। लालायाः श्लेष्मणः पानं कथं प्रियम्? केन प्रकारेण तत्राभिरतिर्नान्यत्र? द्वयोरपि युक्तेति भावः॥

P 306 अथापि स्यात्—यद्यपि द्वयोरपि कारणमभिन्नम्, तथापि तस्मिन्नतिदुर्गन्धतया वैमुख्यम्, इतरस्मिंस्तु तदभावात्प्रीतिरिति। तदेतदपि न सम्यगभिधानमित्युपपादयन्नाह—

तूलगर्भैर्मृदुस्पर्शैं रमन्ते नोपधानकैः।
दुर्गन्धं न स्रवन्तीति कामिनोऽमेध्यमोहिताः॥ ५०॥

कार्पासादितूलपरिपूरितैर्मसूरकादिभिरुपधानैः सुकुमारस्पर्शैः कामिनो न रमन्ते, न धृतिमधिवासयन्ति। कुतः? दौर्गन्ध्यमशुचिनिष्यन्दं न मुञ्चन्तीति कृत्वा अशुचिपरिपूरिते स्त्रीकलेवरे एव रमन्ते। एतदपि कुतः? कामिनः कामसुखाभिलाषिणः अमेध्यमोहिता यतः। हेतुपदमेतत्। अमेध्यविषये अमेध्येन वा मोहिताः। अशुचौ शुचिविपर्यासात् तत्रैव अतिशयवतीमभिरतिमनुभवन्ति॥

स्यादेतत्—यदि नाम अशुचित्वममेध्ये स्त्रीकलेवरे च साधारणम्, तथापि तदेकत्र विवृतमन्यत्र प्रच्छादितम्। अतस्तदन्यपरिहारेण अस्मिन्नभिष्वङ्गः इत्यत्राह—

यत्र च्छन्नेऽप्ययं रागस्तदच्छन्नं किमप्रियम्।
न चेत्प्रयोजनं तेन कस्माच्छन्नं विमृद्यते॥ ५१॥

यस्मिन्नमेध्यस्वभावे प्रच्छादितरूपे। अदृष्टेऽपीति यावत्। एतादृशोऽभिष्वङ्गः, तदच्छन्नं दृश्यतां गतमतिशयेन प्रीतिकरमुपजायते इत्युचितम्। तत् किमिति तथाभूतमप्रियं भवतः? अथ तथाभूते सर्वथा वैमुख्यमेव ते नाच्छन्नेन किंचित् प्रयोजनं तवास्ति।

P 307 यद्येवम्, तर्हि कस्माद्धेतोः छन्नं विशेषेण मृद्यते, तदन्यपरिहारेण तस्यैव घटनाय यत्नः क्रियते?

अपि च। इदमपि प्रष्टव्यस्त्वम्—किं भवानशुचिविरागो न वेति। अत्र प्रथमं विकल्पमधिकृत्याह—

यदि ते नाशुचौ रागः कस्मादालिङ्गसेऽपरम्।

---

[१] This stanza appears as stanza 50 in Minayef's edition and in Tibetan translation. Stanza 49 of Minayef appears as stanza 51 in the Com.

यदि भवतः अशुचौ न रागः, न सर्वथा आसङ्गोऽस्ति, तर्हि कस्मादालिङ्गसे अपरमन्यम्? किं तदित्याह—

**मांसकर्दमसंलिप्तं स्नायुबद्धास्थिपञ्जरम् ॥ ५२ ॥**

मांसमेव कर्दम इव लेपनसाधर्म्यात्, तेन लिप्तमुपदिग्धम्। किमेवंभूतमिति चेत्, स्नायुबद्धास्थिपञ्जरम्, स्नाय्वाबद्धं सङ्घीकृतम्, आयत्तीकृतम् अस्थिपञ्जरम् अस्थिसंकलम्। 5 अन्यथा खण्डशो विशकलितं स्यात्, इति विरागविषयतामस्य दर्शयति ॥ अथ शुचौ राग इति द्वितीयो विकल्पः स्वीक्रियते, तत्राह—स्वमेवेत्यादि । अथवा। अन्यथावतार्यते—यदुक्तं परेण—छन्ने चर्मादिना रागो भवति नाच्छन्ने। तत्राह—यदीत्यादि। यदि तेन हेतुना चर्मादिना पिहितत्वादिति कृत्वा अशुचौ रागो भवति भवतः, तदा कस्मादालिङ्गसे परमन्यदीयं पञ्जरम्। अन्यत् पूर्ववत् ॥ P 308 10

किं तर्हि समुचितमत्रेत्याह—

**स्वमेव बह्वमेध्यं ते तेनैव धृतिमाचर ।**
**अमेध्यभस्त्रामपरां गूथघस्मर विस्मर ॥ ५३ ॥**

स्वमेव आत्मनैव बहुतरमशुचिलालासिङ्घाणमस्तलुङ्गमूत्रपुरीषादि तवास्ति, तेनैवाशुचिना संतोषं कुरुष्व। ततोऽप्यमेध्यभस्त्रां पुरीषप्रसेविकाम् अपरामन्यां स्त्रीशरीरस्वभावाम्। 15 गूथघस्मर पुरीषभक्षणशील विस्मर, तत्र मनसिकारं मा कार्षीः ॥

मांसप्रियोऽहमित्यादिना पुनरन्यथा परिहारमाह—

**मांसप्रियोऽहमस्येति द्रष्टुं स्प्रष्टुं च वाञ्छसि ।**
**अचेतनं स्वभावेन मांसं त्वं कथमिच्छसि ॥ ५४ ॥**

मांसं प्रियं यस्य। एषोऽहं मांसप्रियः। अस्य अस्थिपञ्जरस्य। यदि वा। मांसस्य 20 प्रियो मांसप्रियोऽहमस्येति पूर्ववत् । मांसप्रियोऽहमस्य प्रिय इति यावत् । सापेक्षत्वेऽपि P 309 समासो गमकत्वात् । इत्येवं तत्प्रलोभात् प्रत्युपकारधिया वा द्रष्टुं स्प्रष्टुं च वाञ्छसि, दर्शनं स्पर्शनं च अभिलषसि । अत्राह—अचेतनं चैतन्यशून्यं मृत्पिण्डप्रायम्। स्वभावेन प्रकृत्या। न तु पुनर्यथापरे वर्णयन्ति—चैतन्ययोगादचेतनमपि चेतनमभिधीयते। तादृशं मांसं त्वमचेतनस्वभावं कामुकः सन् कथमिच्छसि? तद्दृष्टौ च मृत्पिण्डेऽपि स्यात्। तथा 25 च सति भवानपि न चेतनः स्यात् ॥

अस्ति तत्र चित्स्वभावं चित्तम्, तेन तदिच्छामीति चेदाह—

**यदिच्छसि न तच्चित्तं द्रष्टुं स्प्रष्टुं च शक्यते ।**
**यच्च शक्यं न तद्वेत्ति किं तदालिङ्गसे मुधा ॥ ५५ ॥**

यच्चित्तं चित्स्वभावमिच्छसि, तदरूपित्वात् द्रष्टुं न शक्यते। यच्च मांसादिस्वभावं 30 कलेवरं द्रष्टुं स्प्रष्टुं च शक्यते, न तद्वेत्ति, न जानाति, अचेतनत्वात्। अतः किमिति

तदचेतनमालिङ्गसे आश्लिष्यसि ? मुधेति निष्फलम् । नैव आलिङ्गितुमुचितमिति भावः । अन्यथा लोष्टाद्यालिङ्गनप्रसङ्गः ॥

P 310 किं च । इदमप्यतिगर्हितमित्यादर्शयन्नाह—

नामेध्यमयमन्यस्य कायं वेत्सीत्यनद्भुतम् ।

5 स्वामेध्यमयमेव त्वं तं नावैषीति विस्मयः ॥ ५६ ॥

अन्यस्य कायं यदमेध्यमयं न वेत्सि, तन्न किंचिदाश्चर्यम् । युक्तमेव तदवेदनम्, परसंतानस्यात्मना व्यवहितत्वात् । इदं पुनरतिशयेनाश्चर्यस्थानम्, यत् स्वस्यात्मनोऽमेध्यमयं त्वं तं कायं नावैषि नावगच्छसि ॥

इदानीं शास्त्रकारस्तं संवेजयन्नाह—

10 विघनार्कांशुविकचं मुक्त्वा तरुणपङ्कजम् ।

अमेध्यशौण्डचित्तस्य का रतिर्गूथपञ्जरे ॥ ५७ ॥

विघनार्कांशुभिर्विकचं विकसितम् । तादृशं तरुणपङ्कजम् । अभिनवसरोरुहं हित्वा अमेध्याभिनिविष्टचित्तस्य का रतिर्गूथपञ्जरे । न युक्तेति भावः ॥

पुनरन्यथा प्राह—

15 मृदाद्यमेध्यलिप्तत्वाद्यदि न स्प्रष्टुमिच्छसि ।

यतस्तन्निर्गतं कायात्तं स्प्रष्टुं कथमिच्छसि ॥ ५८ ॥

P 311 आदिशब्दाद्भस्मादि । अशुचिम्रक्षितत्वात् । यदि स्प्रष्टुं न वाञ्छसि । यतः कायात्तदमेध्यं निर्गतं निर्यातम्, तं कायं कथमिच्छसि स्प्रष्टुम् ?

अथापि स्यात्—नायमुपालम्भो मम युक्तरूपः, यतो न मे कश्चिदभिनिवेशोऽमेध्ये

20 इत्यत्राह—

यदि ते नाशुचौ रागः कस्मादालिङ्गसे परम् ।

अमेध्यक्षेत्रसंभूतं तद्बीजं तेन वर्धितम् ॥ ५९ ॥

अमेध्यक्षेत्रं मातुर्जठरम्, अनेकाशुचिस्थानत्वात्, तत्र संभूतं समुत्पन्नं तद्बीजम्, तदेव अमेध्यं मातापितृशुक्रशोणितस्वभावं बीजं यस्य तत्तथोक्तम् । तेन वर्धितमिति तेन

25 अमेध्येन मातृपीताशितस्य वान्तकल्पस्य रसेन वर्धितं गर्भस्थितमुपबृंहितम् । बहिर्निर्गतमपि स्वयमशितपीतपरिपाकाशुचिरसेन । कस्मादालिङ्गसे परमिति संबन्धः । परं स्त्रीकलेवरम् । इत्युपालम्भोऽस्त्येव भवतः ॥

अथ अशुचिरागोऽहमिति पक्षस्वीकारः, तथापि उपालम्भस्तदवस्थ एवेत्याह—

अमेध्यभवमल्पत्वान्न वाञ्छस्यशुचिं क्रिमिम् ।

30 बह्वमेध्यमयं कायममेध्यजमपीच्छसि ॥ ६० ॥

P 312 पुरीषाद्यशुचिसंभूतं क्रिमिं प्राणकजातं न वाञ्छसि । कायं पुनर्मातृग्रामस्य बहुतराशुचिस्वभावमशुचिसंभूतमपि पूर्वक्रमेण इच्छसि ॥

अथापि स्यात्—किमत्रोत्तरं वक्तव्यम् ? यतोऽहमपि यादृशः, तादृशं तस्याः शरीरम्, तेन अशुचेर्नाशुचिसंपर्को दोषः, यादृशो यक्षस्तादृशो बलिरपीत्याह—

न केवलममेध्यत्वमात्मीयं न जुगुप्ससि ।
अमेध्यभाण्डानपरान् गूथघस्मर वाञ्छसि ॥ ६१ ॥

अयमिह महामोहस्य प्रभावः, यदात्मगतमेव तावदशुचिस्वभावं न विगर्हसि । 5 प्रत्युत अपरानशुचिकुम्भानभिलषसि, इति धिक् परामर्शविकलता । गूथघस्मरेति तिरस्कार-वचनेन तस्यैव संबोधनम् ॥

इदानीं साक्षात्कृत्य अशुचिस्वभावतां प्रतिपादयन्नाह—

कर्पूरादिषु हृद्येषु शाल्यन्नव्यञ्जनेषु वा ।
मुखक्षिप्तविसृष्टेषु भूमिरप्यशुचिर्मता ॥ ६२ ॥ 10

एवं शुचिपवित्रवस्तुन्यपि यदेकदेशनिष्यन्दसंपर्कादपवित्रस्वभावतां व्रजन्ति । P 313 आसतां तावत्तानि वस्तूनि, तत्संसर्गाद्भूमिरपि शुचिस्वभावा अशुचित्वं याति ॥

यदि प्रत्यक्षमप्येतदमेध्यं नाधिमुच्यसे ।
श्मशाने पतितान् घोरान् कायान् पश्यापरानपि ॥ ६३ ॥

एवं तावदध्यक्षसिद्धोऽयं व्यवहारः, तथापि यदि नाधिमुच्यसे, न संप्रत्येषि । 15 दृष्ट्वापि न श्रद्दधासि इत्यर्थः । तदा श्मशाने पूतिनिवासे कायान् पश्य । किंभूतान् ? घोरानिति । विखादितकविनीलकविपूयकादिस्वभावतया बीभत्सान् भयंकरान् वा अपरानिति अतोऽधिकान् ॥

किं च । प्रकृत्या विकृत एवायं कायो नाभिरतिस्थानं युज्यते इत्युपदर्शयन्नाह—

चर्मण्युत्पाटिते यस्माद्भयमुत्पद्यते महत् । 20
कथं ज्ञात्वापि तत्रैव पुनरुत्पद्यते रतिः ॥ ६४ ॥

उत्पाटिते वियोजिते । यस्मादिति कायात् । त्रासो जायते महान्—किमेतदिति । एवं तत्स्वभावं विदित्वापि कथं तस्मिन्नेव स्थाने भयस्थानत्वेन एकदा प्रतिपन्ने पुनरन्यदा जायते रतिरभिष्वङ्गः ॥

स्यादेतत्—यदि नाम अशुचिस्वभावता कायस्य अध्यक्षसिद्धा, तथापि चन्दनादि- 25 P 314 सुरभिवस्तूपलिप्तोऽसौ कमनीयो भवति इत्यत्राह—

काये न्यस्तोऽप्यसौ गन्धश्चन्दनादेव नान्यतः ।
अन्यदीयेन गन्धेन कस्मादन्यत्र रज्यसे ॥ ६५ ॥

शरीरे निवेशितोऽप्यसौ गन्धः चन्दनादिप्रसूतः, यद्वशात्काये कमनीयबुद्धिरुप-जायते । चन्दनादेव केवलात् । नान्यतः इति कायात् । अतः कस्मात् परकीयेन गन्धेन 30 चन्दनसमुद्भूतेन अन्यत्र यस्यासौ गन्धो न भवति, अत्र अभिरतिः क्रियते ?

अपि च। चन्दनादिसंस्कारोऽपि केवलात्मोपघाताय वर्तते, न हितायेति प्रतिपादयन्नाह—

यदि स्वभावदौर्गन्ध्याद्रागो नात्र शिवं ननु।
किमनर्थरुचिर्लोकस्तं गन्धेनानुलिम्पति॥ ६६॥

5 स्वभावदौर्गन्ध्यात् सहजात्पूतिगन्धवहत्वात्। अत्रेति काये। यदि रागो नोत्पद्यते, तदा शिवं ननु कल्याणमेव स्यात्। एवं गुणसंभवेऽपि किं कारणमनर्थप्रियो लोकः तं कायं गन्धेनानुलिम्पति? सर्वथा न युक्तमेतदित्यर्थः॥

न चास्य संस्कारसहस्रत्वेऽपि स्वभावान्यथात्वमस्तीत्याह—

P 315 कायस्यात्र किमायातं सुगन्धि यदि चन्दनम्।

10 कायस्य स्वभावदुर्गन्धस्य किमायातम्, किं भूतम्? न किंचित्। सुगन्धि यदि चन्दनम्। शोभनो गन्धोऽस्येति बहुव्रीहिसमासान्तादिन्। तथापि तस्य न स्वभावप्रच्युतिरस्तीति भावः। अथ तद्वशात् तस्मिन् कमनीयतामुपादाय अभिरतिरुत्पद्यते इत्यत्राह—

अन्यदीयेन गन्धेन कस्मादन्यत्र रज्यते॥ ६७॥

एवं च न विचक्षणता स्यादित्यर्थः॥

15 केशादिसंस्कारद्वारेणापि अनर्थहेतुरेवायं काय इति श्लोकद्वयेनोपदर्शयन्नाह—

यदि केशनखैर्दीर्घैर्दन्तैः समलपाण्डुरैः।
मलपङ्कधरो नग्नः कायः प्रकृतिभीषणः॥ ६८॥
स किं संस्क्रियते यत्नादात्मघाताय शस्त्रवत्।
आत्मव्यामोहनोद्युक्तैरुन्मत्तैराकुला मही॥ ६९॥

20 दीर्घैः सहजावस्थितैः। अच्छिन्नैरित्यर्थः। दन्तैर्दशनैः। समलपाण्डुरैः दन्तधावनक्रमुकादिभिरसंस्कृतैः। मलपङ्कधरः मल एव पङ्कः कर्दमः, तं धारयतीति तथा, स्नानाभ्यञ्जनादिविरहात्। नग्न इति वस्त्रविविक्तत्वात् यथाजात इवावस्थितः। तथाभूतः

P 316 सन्। यदि कायः प्रकृत्या भीषणः प्रेतानामिव स्वभावेन भयंकरः। स एवंभूतः किमिति संस्क्रियते? यत्नादिति केशनखादिरचनाविशेषैः, दन्तधावनताम्बूलादिभिः, स्नानाभ्यञ्ज-

25 नानुलेपनादिभिः, वस्त्रादिभिर्वा। किमिव? आत्मघाताय शस्त्रवत्। आत्मनो वधार्थं खड्गादिर्यथा संस्क्रियते तद्वत्। इत्येषां मोहवशीकृतं विचेष्टितं परिदेवयन्नाह—आत्मेत्यादि। आत्मनैव संचिन्त्य आत्मनो व्यामोहमुत्पादयितुं यत्नवद्भिः उन्मत्तैरस्वस्थचित्तैः। एवं च विपरीतकर्मानुष्ठानान्नैते वराकाः सचेतस इति खेदं करोति शास्त्रकारः। न चात्र कश्चिदात्मज्ञो दृश्यत इति उन्मत्तैराकुला समाकीर्णा मही पृथिवीति॥

30 प्रासङ्गिकं परिसमाप्य प्रकृतमनुबध्नन्नाह—

कङ्कालान् कतिचिद्दृष्ट्वा श्मशाने किल ते घृणा।
ग्रामश्मशाने रमसे चलत्कङ्कालसंकुले॥ ७०॥

शवानामस्थिपञ्जरान् कतिचित् प्रतिनियतान् । एतदुक्तं भवति—चर्मण्युत्पाटिते [ ८.६४ ] इत्यादिकमुक्त्वा यदुक्तं कथं ज्ञात्वापीत्यादि, तत्र परस्योत्तरम्—न श्मशानगत-कलेवरसादृश्यमस्य, येन तस्मिन्नेव अत्रापि रतिर्न स्यात्, किं तर्हि श्मशाने तस्य घृणास्थानत्वात् । नात्रेति अत्र अभिधेयकङ्कालानित्यादि । ग्रामश्मशाने इति । नैवात्र कश्चिद्विशेषोऽस्ति । तदेव शरीरं श्मशाने घृणास्थानग्रामे वा अभिरतिस्थानमिति काक्वा ब्रूते । नैतद्विचक्षणधियां समायुक्तमिति भावः । चलत्कङ्कालसंकुले इत्यनेन एतद्दर्शयति—एतावांस्तु विशेषः । न च अनेन विशेषेणाशुचिस्वभावता घृणाहेतुर्निवर्तते, येन प्रवृत्तिरियं स्यादिति । संकुल इति समाकीर्णे ॥

भवतु नाम ईदृशमशुचिस्वभावमपि सूकराणामिव अभिरतिस्थानम् । तथा च एवं-विधमपि द्रविणविकलस्य नैतत् सुलभमित्युपदर्शयन्नाह—

**एवं चामेध्यमप्येतद्विना मूल्यं न लभ्यते ।**
**तदर्थमर्जनायासो नरकादिषु च व्यथा ॥ ७१ ॥**

विना मूल्यं द्रव्यमन्तरेण न लभ्यते न प्राप्यते । अतस्तदर्थिना प्रथमतो धनमेव अर्जनीयम् । तदर्जनेन आयासात् कृषिवाणिज्यसेवादिसमाश्रयेण परिश्रमादिहैव दुःखमुप-जायते, अधर्मेण चोपार्जनान्नरकादिषु, इति उभयलोकेऽनर्थहेतुरेव तदर्जनम् । नापि तत्सुख-प्राप्तिरस्ति ॥

दुःखमेव तु केवलं तदर्जनेनेति प्रतिपादयन्नाह—

**शिशोर्नार्जनसामर्थ्यं केनासौ यौवने सुखी ।**
**यात्यर्जनेन तारुण्यं वृद्धः कामैः करोति किम् ॥ ७२ ॥**

बालावस्थावस्थितस्य न धनोपार्जनशक्तिरस्ति, बालत्वादेव । केन धनेन प्रकारेण वा असौ बालो यौवने युवावस्थायां सुखी स्यात्? धनविकलत्वान्न क्वचिदित्यर्थः । यदपि कस्यचित् पितृपितामहोपार्जितधनेन यौवने सुखित्वं दृश्यते, तदपि प्रतिनियतस्यैव न सर्वस्य । न चापि पूर्वोक्तदुःखद्वयाद्विमुच्यतेऽसौ । अतो धनार्जनमुपादेयमादौ सुखसाधनो-पायत्वात् । तदर्जयत एव गलितवयसो न कश्चिदुपयोगो विषयैरिति ॥

अथापि स्यात्-तदर्जयतापि कामसुखमनुभूयत एव, इत्यत्राह—

**केचिद्दिनान्तव्यापारैः परिश्रान्ताः कुकामिनः ।**
**गृहमागत्य सायाह्ने शेरते स्म मृता इव ॥ ७३ ॥**

ये केचित् कुत्सितकामाक्षिप्तचेतसः काष्ठतृणपत्राद्याहरणभृतिकर्मक्रियालक्षणैर्दिन-पर्यन्तव्यापारैः परिखिन्नकायमनसो निरुत्सुकाः, अस्तं गते सवितरि स्वगृहमागत्य गाढमिद्धा-क्रान्तत्वात् मृतकल्पाः शेरते स्म स्वपन्ति । प्रभाते पुनरुत्थाय तत्रैव नीचकर्मणि युज्यन्ते । स्मशब्दोऽत्र वाक्यालंकारे अतीतार्थाविषयत्वात् । एवमायुःसंस्कारान् केचित् कुकामिनः क्षपयन्ति, न च कामसुखास्वादमुपलभन्ते ॥

परसेवकानधिकृत्याह—

दण्डयात्राभिरपरे प्रवासक्लेशदुःखिताः ।
वत्सरैरपि नेक्षन्ते पुत्रदारांस्तदर्थिनः ॥ ७४ ॥

अपरे पूर्वकामिकेभ्योऽन्ये कुकामिनः सेवका इत्यर्थः। ते दण्डयात्रादिभिः, दण्डः
5 परचक्रविजयाय यात्रा प्रयाणम्, परराष्ट्रद्रव्यग्रहणाय वा यात्रा, तदादिर्येषां देशान्तरप्रेष-
णादीनाम्, तैः प्रवासो देशान्तरगमनम्, तेन क्लेशः परिश्रमः, तेन दुःखिताः पीडिताः।
सर्वदा तथाभूताः। वत्सरैरपि अनेकवर्षात्ययेऽपि पुत्रान् दारांश्च नेक्षन्ते न पश्यन्ति।
तदर्थिन इति तैः पुत्रदारादिभिरर्थिनः तदभिलाषुकाः। तदर्थमेव परसेवादिस्वीकारादित्यर्थः॥

अहो बत अमीषां निष्फलमनुष्ठानमिति शोचयन्नाह—

10 यदर्थमेव विक्रीत आत्मा कामविमोहितैः ।
तन्न प्राप्तं मुधैवायुर्नीतं तु परकर्मणा ॥ ७५ ॥

यदर्थं सुखप्रतिलम्भनिमित्तं विक्रीतः परदासीकृतः आत्मा कामविडम्बितैः तन्न
P 320 प्राप्तम्, तदिति सुखं न प्राप्तं न प्रतिलब्धम्। आयुःसंस्कारा एव हि केवलमनर्थकं पर-
कर्मानुष्ठानेन क्षयमुपनीताः। न साधुकर्मणि क्वचिदपि योजिता इति भावः॥

15 सुखलिप्सया प्रवृत्तानां प्रत्युत दुःखमेवापतितमेषामित्युपदर्शयन्नाह—

विक्रीतस्वात्मभावानां सदा प्रेषणकारिणाम् ।
प्रसूयन्ते स्त्रियोऽन्येषामटवीविटपादिषु ॥ ७६ ॥

सुखबुभुक्षया विक्रीतः परायत्तीकृतः स्वात्मभावः स्वकायो यैस्ते तथा, तेषाम्।
अन्येषां सेवकानामित्यर्थः। अत एव सदा प्रेषणकरणशीलानाम्। अन्येषामपरेषां
20 प्रभुप्रयोजनेन गच्छताम्। मार्ग एव प्रसूयन्ते स्त्रियः। अटवीविटपादिषु। आदिशब्दात्
पर्वतनितम्बनदीकूलादिषु कष्टस्थानेषु॥

अयमपरो विपर्यासस्तेषामिति प्रतिपादयन्नाह—

रणं जीवितसंदेहं विशन्ति किल जीवितुम् ।
मानार्थं दासतां यान्ति मूढाः कामविडम्बिताः ॥ ७७ ॥

25 विक्रीतस्वात्मभावाः संग्रामं चतुर्दन्तसंघट्टं प्रविशन्ति। किंभूतं जीवितसंदेहम्? तत्र
प्रविष्टस्य जीवितं स्याद्वा न वेति जीवितस्य संदेहोऽस्मिन्निति कृत्वा। जीवितुमिति
P 321 जीवनार्थम्। अत्र प्रतिलब्धैर्लाभैर्जीविकां कल्पयिष्याम इति मत्वेत्यर्थः। मानार्थं दासतां
यान्ति, बलवता केनचिदभिभूताः स्वमानोद्धरणार्थम्। अङ्गुलीच्छेदवेलाग्रहणस्वीकारात्।
मूढा मोहान्धीकृतविवेकचक्षुषः। के ते? कामविडम्बिताः कामाय कामेन वा विड-
30 म्बितास्तिरस्कृताः॥

इहैव जन्मनि कामासक्तचेतसां यद्दुःखं दृश्यते तत्कथयन्नाह—

छिद्यन्ते कामिनः केचिदन्ये शूलसमर्पिताः ।
दृश्यन्ते दह्यमानाश्च हन्यमानाश्च शक्तिभिः ॥ ७८ ॥

परदारधनापहरणादेः ॥ शेषः सुबोधः ॥

किं च । अयं सुखसाधनत्वेन उपादीयमानोऽपि च अनर्थपरंपराप्रसूतिहेतुरेवार्थः 5
इति कथयन्नाह—

अर्जनरक्षणनाशविषादै-
र्थमनर्थमनन्तमवेहि ।
व्यग्रतया धनसक्तमतीनां
नावसरो भवदुःखविमुक्तेः ॥ ७९ ॥ 10

अर्जनमनुत्पन्नस्योत्पादनं दुःखम् । उपार्जितस्यापि जलानलादिभ्यः पञ्चप्रत्य-
वायेभ्यः परिपालनं कष्टतरम् । तथा रक्षितस्यापि कथंचित् तस्करादिभिर्नाशाद्विषादो P 322
दौर्मनस्यं परितापहेतुरनर्थः । तदेवमनर्थपरंपरानिदानत्वात् कारणे कार्योपचारादर्थ एवानर्थ
उक्तः । इत्येवमर्जनादिभिः सर्वदा व्याकुलत्वात् धनासक्तचेतसां क्षणमपि समाधानानवकाश-
त्वात् नावसरः संसाराश्र(श्रि?)तजात्यादिदुःखनिर्मोक्षाय सदा तद्गतमनसिकारैरेव आयुः- 15
राणां क्षपणात् ॥

सर्वमेतदुपसंहृत्य कामासङ्गपरित्यागाय संवेगकथया प्रोत्साहयति एवमित्यादिना—

एवमादीनवो भूयानल्पास्वादस्तु कामिनाम् ।
शकटं वहतो यद्वत्पशोर्घासलवग्रहः ॥ ८० ॥

एवमित्युक्तप्रकारपरामर्शे । आदीनवोऽनर्थः । भूयाननेकप्रकारः । न चात्र सुखो- 20
त्पादवार्ताप्यस्ति । यदपि विपर्यासात् कथंचित् सुखमिति प्रतिभासते, तदपि न किंचित् ।
गुरुतरभाराक्रमणपरिक्लान्तवपुषः पशोरिव घासलवग्रासग्रहणम् ॥

तस्यास्वादलवस्यार्थे यः पशोरप्यदुर्लभः ।
हता दैवहतेनेयं क्षणसंपत्सुदुर्लभा ॥ ८१ ॥

तस्यैवंभूतस्य अतितुच्छस्य सुखास्वादलेशस्य पशोरपि साधारणस्यार्थे तस्य निमित्तम् । 25 P 323
इयं क्षणसंपत् अष्टाक्षणविनिर्मुक्ता हता विनाशिता । वृथा कृतेत्यर्थः । किंविशिष्टा सुदुर्लभा
व्याख्याता । केन दैवहतेन । दैवं पुरातनं कर्म, तेन हता । हिताहितपरिज्ञाने विपर्यस्त-
मतिः कृतः । विमोहित इत्यर्थः । वस्तुतस्तु तिरस्कारवचनमेतत् । भागविहीन एवमुच्यते ॥

अवश्यं गन्तुरित्यादिना श्लोकद्वयेन विपर्याससरूपतामेव प्रतिपादयति—

अवश्यं गन्तुरल्पस्य नरकादिप्रपातिनः । 30
कायस्यार्थे कृतो योऽयं सर्वकालं परिश्रमः ॥ ८२ ॥

अवश्यं गन्तुरिति अनित्यतया अस्थिरस्वभावस्य। अल्पस्य लोकोत्तरकायमपेक्ष्य अतिदूरं निष्कृष्टस्य। नरकादिप्रपातिन इति अपरिमितदुःखभागिनः। स्वसुखोत्पादनेऽप्यसमर्थस्येत्यर्थः। कायस्य आत्मशरीरस्यार्थे सुखोत्पादनाय योऽयं नरकादिदुःखमविगणय्य कृतः सर्वकालं संसारस्य पूर्वस्यां कोटौ परिश्रमः प्रयासः॥

P 324 5 ततः कोटिशतेनापि श्रमभागेन बुद्धता।

ततस्तस्मात् परिश्रमात् कोटिशतेनापि परिश्रमभागेन अंशेन बुद्धत्वं स्यात्, तदपेक्षया अत्यल्पीयसा आयासबलेन बुद्धत्वं स्यात्। तथापि तदर्थं मन्दबुद्धयो नोत्सहन्त इत्यर्थः। अथ बोधिचर्यायामपि चरतः अनेकदुष्करशतसमारम्भादतिशयवद्दुःखसहस्रमुत्पद्यत एवेत्याह—

10 चर्यादुःखान्महद्दुःखं सा च बोधिर्न कामिनाम्॥ ८३॥

चर्यादुःखमपेक्ष्य इदमेव महद्दुःखं यत्कामार्थे चरतां संसारे तेषामवीच्यादिनरकपतनात्, पारतन्त्र्येण दीर्घकालमनुभवनाच्च। न तु बोधिसत्त्वानां प्रतिनियतकालं स्वेच्छया तदनुभवताम्। तदेवं दुःखमनुभवतामपि कामार्थे कामिनां सा च बोधिर्न भवति, या बोधिसत्त्वानां परार्थे दुःखमनुभवतामित्यर्थः॥

15 पुनर्विशेषेण कामनिदानदुःखं प्रतिपादयन्नाह—

न शस्त्रं न विषं नाग्निर्न प्रपातो न वैरिणः।
कामानामुपमां यान्ति नरकादिव्यथास्मृतेः॥ ८४॥

अमी शस्त्रादयो दुःखजनकत्वेन प्रसिद्धा न सादृश्यं भजन्ते प्रति कामानाम्।

P 325 कस्मात्? नरकादिदुर्गतिदुःखस्य आगमात् प्रतिपन्नस्य स्मरणात् स्मरणेनामुखीकरणात्। 20 शस्त्रादयो हि नियतकालं मरणमात्रदुःखदायकाः, कामास्तु दीर्घकालिकतीव्रनरकादिदुःखहेतव इति कीदृशी तैरुपमा भवेत्?

तदेवं कायविवेकानन्तरं चित्तविवेकं प्रतिपाद्य प्रकृते योजयितुमाह—

एवमुद्विज्य कामेभ्यो विवेके जनयेद्रतिम्।

कामेभ्यो भयहेतुभ्यः। एवमुक्तक्रमेण उद्विज्य संत्रासं कृत्वा पूर्वोक्तविवेके रति- 25 मभिरतिमुत्पादयेत्। कुत्र स्थित्वा तत्राह—

कलहायासशून्यासु शान्तासु वनभूमिषु॥ ८५॥

प्रतिद्वन्द्विनामभावात् कलहायासशून्यास्ताः, व्यालमृगसरीसृपतस्करादिविरहाच्च रम्याः॥

तत्रानुशंसामाह—

30 धन्यैः शशाङ्ककरचन्दनशीतलेषु
रम्येषु हर्म्यविपुलेषु शिलातलेषु।
निःशब्दसौम्यवनमारुतवीज्यमानैः
चंक्रम्यते परहिताय विचिन्त्यते च॥ ८६॥

धन्यैः सुकृतिभिः । शशाङ्कस्य चन्द्रमसः करा रश्मय एव शुक्लताशैत्यसाधर्म्याच्चन्दनानीव, तैः शीतलानि यानि शिलातलानि तेषु चंक्रम्यत इति संबन्धः । किंविशिष्टेषु ? प्रकृत्यैव शुचिपवित्रेषु कर्कशादिदोषरहितेषु च । हर्म्यविपुलेषु धवलगृहवद्विस्तीर्णेषु । कीदृशैः सद्भिश्चंक्रम्यते ? निःशब्दैः प्रतिकूलशब्दविरहितैः । सौम्यैरनुत्कटैः । सुखसंस्पर्शैरित्यर्थः । वनमारुतैः वनपवनैः । वीज्यमानाः तैश्चंक्रम्यत इति परावृत्त्या पुनः पुनर्मन्दं भ्रम्यते । न केवलं चंक्रम्यते, किं तु परहिताय सत्त्वानां सुखोत्पादनाय विचिन्त्यते । सर्वमेतदयत्नसिद्धं योगिनाम्, कामिनां तु प्रयत्नसाध्यम् । तदनेन ऐश्वर्यसुखाद्विशिष्यते विवेकसुखमित्युपदर्शितं भवति ॥

इदमपरमसाधारणं सुखं विवेकविहारिण इत्युपदर्शयन्नाह—

विहृत्य यत्र क्वचिदिष्टकालं
शून्यालये वृक्षतले गुहासु ।
परिग्रहरक्षणखेदमुक्तः
चरत्यपेक्षाविरतो यथेष्टम् ॥ ८७ ॥

सुबोधम् ॥

स्वच्छन्दचारीत्यादिना कथितमेवार्थं व्यक्तीकरोति—

स्वच्छन्दचार्यनिलयः प्रतिबद्धो न कस्यचित् ।
यत्संतोषसुखं भुङ्क्ते तदिन्द्रस्यापि दुर्लभम् ॥ ८८ ॥

स्वस्यात्मनः छन्दोऽभिलाषः, तेन चरितुं शीलमस्येति । स्वेच्छाचारीत्यर्थः ॥

इति विवेकगुणानभिधाय प्रकृतमभिधित्सुराह—

एवमादिभिराकारैर्विवेकगुणभावनात् ।
उपशान्तवितर्कः सन् बोधिचित्तं तु भावयेत् ॥ ८९ ॥

एवमिति पूर्वोक्तैः । आदिशब्दादन्यैरपि एवंविधैराकारैः । विवेकस्य कायिकचैतसिकस्य गुणानां भावनात्, इति हि सर्वसुखसंपत्तिहेतुर्विवेक इति चेतसि पुनः पुनरामुखीकरणाद्धेतोः उपशान्तो वितर्कः असन्मनसिकारो यस्य सः । तथाभूतः सन् बोधिचित्तं तु भावयेत् । एवं परिशुद्धे चेतसि भाव्यमानं बोधिचित्तं प्रकर्षपदमधिरोहतीति विशेषं तुशब्देन दर्शयति ॥

तत्र यावदेकत्वं परेषु नात्मना क्रियते, न तावत् परहितसुखाय सम्यक् चित्तं चलति, आत्मग्राहस्य आत्मन्येव विशेषेण प्रवृत्तेः । अतोऽस्य निवृत्तये—

परात्मसमतामादौ भावयेदेवमादरात् ।

आदौ प्रथमतः । पश्चात् परात्मपरिवर्तनमिति भावः । एवमिति वक्ष्यमाणनीत्या । आदरादिति महताभिनिवेशेन । तस्या एवाकारं दर्शयति—

समदुःखसुखाः सर्वे पालनीया मयात्मवत् ॥ ९० ॥

मत्तो नामीषां कश्चिद्विशेषोऽस्ति। अतो यथा मम दुःखं बाधकं तथा एषामपि। यथा मम सुखमनुग्राहकं तथा एषामपि। इति तुल्यदुःखसुखाः सर्वे प्राणिनो भवन्ति। तस्मात् पालनीया मयात्मवत्। यथा आत्मा दुःखाद्दुःखहेतोर्वा समुद्ध्रियते, तथा अन्येपि सत्त्वाः समुद्धरणीयाः। यथा आत्मा सर्वथा सुखीकर्तुमिष्यते, तथा अन्येऽपीति परिपालनीया 5 आत्मवत्॥

ननु कथमात्मना अनेकप्रकारगतिभेदभिन्नानां सत्त्वानामेकत्वं सेत्स्यति, अभिन्नसुखदुःखस्वभावत्वं च कथम्? इत्यत्राह—

हस्तादिभेदेन बहुप्रकारः
कायो यथैकः परिपालनीयः।
10 तथा जगद्भिन्नमभिन्नदुःख-
सुखात्मकं सर्वमिदं तथैव॥ ९१॥

करचरणशिरःप्रभृतिभेदादनेकप्रकारः कायो यथैकत्वेनाध्यवसितः परिपालनीयो भवति दुःखनिवर्तनात् सुखोपधानाच्च, जगत्सत्त्वलोकः अभिन्नमेकत्वेनाध्यवसितमात्मनः परिपालनीयं भवति। अभिन्नदुःखसुखात्मकं च। लुप्तचकारो निर्देशः। तथैव हस्तादिभेद- P 329 15 वदेव सर्वमिदमिति बहुप्रकारगतिभेदभिन्नमपि। अयमभिप्रायः—यथा अभ्यासादेकत्वाध्यवसायोऽस्मिन् काये एकत्वमन्तरेणापि, तथा अनेकप्रकारे जगत्यपीति न कश्चिद्विशेषः॥

स्यादेतत्—यदि भवता सह जगदेकस्वभावम्, तदा कथमिव भवतो दुःखमन्यसंतानेषु न बाधकं स्यात्? एवं विपर्ययेऽपि योज्यमित्याशङ्क्याह—

यद्यप्यन्येषु देहेषु मद्दुःखं न प्रबाधते।
20 तथापि तद्दुःखमेव ममात्मस्नेहदुःसहम्॥ ९२॥

अन्येषु अपरेषु शरीरेषु मम दुःखं यदि नाम प्रबाधकं न भवति, तथापि तद्दुःखमेव मम। कुतः? आत्मनि स्नेहेन दुःसहं सोढुमशक्यम्। हेतुपदमेतत्। अंशेन प्रवृत्तावपि दुःखस्वभावतां न मुञ्चतीत्यर्थः। एवं विपर्ययोऽपि व्याख्येयः॥

तथा यद्यप्यसंवेद्यमन्यद्दुःखं मयात्मना।
25 तथापि तस्य तद्दुःखमात्मस्नेहेन दुःसहम्॥ ९३॥

P 330 अतः स्वपरविशेषमपास्य दुःखस्वभावतैव निवर्तनहेतुः। अत आह—

मयान्यदुःखं हन्तव्यं दुःखत्वादात्मदुःखवत्।

यद्यद्दुःखं तत्तन्मया हन्तव्यम्, यथात्मदुःखम्। दुःखं चेदमन्यसत्त्वदुःखमिति स्वभावहेतुप्रयोगः। दुःखस्वभावतामात्रभाविनी हन्तव्यता। न च असिद्धता हेतोः, 30 अविशेषेण दुःखस्वभावतायाः प्रसाधितत्वात्। न चाप्यनैकान्तिकता, आत्मदुःखस्यापि हन्तव्यता न स्यादविशेषादिति विपर्ययबाधकम्। विरुद्धताप्यत एव न स्यात्। तथायमपरः प्रयोगः—

अनुग्राह्या मयान्येऽपि सत्त्वत्वादात्मसत्त्ववत् ॥ ९४ ॥

ये सत्त्वास्ते सर्वे मया अनुग्राह्याः, यथा आत्मसत्त्वः । सत्त्वाश्च अन्येऽपि प्राणिनः इति स्वभावहेतुरेव । सत्त्वात्मकतामात्रभाविनि अनुग्राह्यस्वभावता अत्र । अयमपि नासिद्धः, सत्त्वात्मकतायाः पक्षे प्रसिद्धत्वात् । आत्मनोऽनुग्राह्यताभावप्रसङ्गेन अनैकान्तिकोऽपि न स्यात् । पूर्ववन्न विरुद्धः ॥　5

ननु अस्ति विशेषोऽन्यस्मादात्मनि सुखाभिनिवेशो नाम । तथा ततोऽयमनैकान्तिको हेतुरिति । अत्राह—

यदा मम परेषां च तुल्यमेव सुखं प्रियम् ।
तदात्मनः को विशेषो येनात्रैव सुखोद्यमः ॥ ९५ ॥

तुल्यमेव सममेव सुखं प्रियमिष्टम् । तदात्मनः परस्मात् को विशेषः ? नैव कश्चित् 10　P 331
येन तत्रैव आत्मन्येव सुखोत्पादनाय तात्पर्यं न परस्मिन्नित्यर्थः ॥

प्रथमे हेतावनैकान्तिकतां परिहरन्नाह—

यदा मम परेषां च भयं दुःखं च न प्रियम् ।
तदात्मनः को विशेषो यत्तं रक्षामि नेतरम् ॥ ९६ ॥

भयमिति दुःखहेतुः । नेतरमिति नान्यम् ॥　15

स्यादेतत्- यदि नाम दुःखात्मकता न विशिष्यते, तथापि यस्य दुःखेन बाधा स्यात्, स एव रक्षितुमुचितो नान्य इत्याह—

तद्दुःखेन न मे बाधेत्यतो यदि न रक्ष्यते ।
नागामिकायदुःखान्मे बाधा तत्केन रक्ष्यते ॥ ९७ ॥

तस्य परस्य दुःखेन मम बाधा पीडा नास्तीत्यतोऽस्मात् कारणाद् यदि न रक्ष्यते- 20
ऽन्यः, तदा अपरमिदं व्याहतं स्यात् । यतो नागामिनः कायस्य परलोकभाविनो नरकादिजातस्य दुःखात्मकस्य [ दुःखान्मे ] तस्योपात्तस्य कायस्य काचिद्बाधा संभवति, तस्य　P 332
अन्यत्वात् । इति लोकोक्तौ, तस्मादर्थे वा । यत एवम्, तस्मात् केनाभिप्रायेण असौ रक्ष्यते ? काय इति प्रकृतत्वात् पापान्निवर्तनात् कुशले प्रवर्तनाच्च ॥

अथापि स्यात्—अहमेक एव सर्वदा, तेनात्र भिन्नत्वं नास्ति शरीरयोः । नायं दोष 25
इत्यत्राह—

अहमेव तदापीति मिथ्येयं परिकल्पना ।

आत्मनो निराकरिष्यमाणत्वात् निरस्तत्वाच्च लेशतः तत्कोऽयमहंप्रत्ययस्य विषयो भविष्यति ? तस्मादहंप्रत्ययविषयस्य कस्यचिदेकस्याभावान्मिथ्येयं परिकल्पना अध्यवसायः ।

---

१ This is the first Kārika of ŚS.

अहमेव तदापीति। भवान्तरेऽपि। मायोपमपञ्चोपादानस्कन्धमात्रालम्बनत्वादस्य। इतीदमपि अध्यवसायवशादुच्यते, न तु पुनरस्य वस्तुतः किंचिदालम्बनमस्ति, विकल्पात्मकत्वात्॥

कुतः पुनरियं मिथ्याकल्पनेत्याह—

5 अन्य एव मृतो यस्मादन्य एव प्रजायते॥ ९८॥

यदा नात्मादिः कश्चिदेकः परलोकगामी संभवति, स्कन्धमात्रमेव केवलम्, तदा न खलु यदेव स्कन्धपञ्चकमिह विनश्यति, तदेव पुनरप्युत्पद्यते परलोके, अपि तु अपूर्वमेव पूर्वनिवृत्तौ तत्र इदंप्रत्ययताविशिष्टं क्लेशकर्माभिसंस्कृतमन्तराभवसंतत्या समुत्पद्यते। तस्मादनादिसंसारप्रवृत्तवितथविकल्पाभ्यासवासनावशादहंप्रत्ययो वितथ एव उपजायते॥

P 333

10 किं च। इदमपरं तत्र बाधकमित्याह—

यदि तस्यैव यद्दुःखं रक्ष्यं तस्यैव तन्मतम्।
पाददुःखं न हस्तस्य कस्मात्तत्तेन रक्ष्यते॥ ९९॥

आस्तां तावद् यदागामिकायदुःखरक्षार्थं न यतितव्यम्। इह एकस्मिन्नपि काये प्रत्यङ्गभेदाद्भिन्नं दुःखम्। ततो यदा अन्यद्दुःखमन्यस्य रक्षितुं न युज्यते, तदा कथं 15 पादादौ प्रहारं पतन्तं दृष्ट्वा हस्तं प्रसार्य रक्ष्यते? अन्यत्वाविशेषान्न युक्तमेतदित्यर्थः॥

अथ—

अयुक्तमपि चेदेतदहंकारात्प्रवर्तते।
तदयुक्तं निवर्त्यं तत्स्वमन्यच्च यथाबलम्॥ १००॥

अहंकारोऽस्मिन् काये अहमित्यात्मग्रहादात्मनोऽभावेऽपि। प्रवर्तते जायते पादादौ 20 रक्षणमनसिकारः। नैतत् साधु। यतो यदयुक्तं युक्त्या संगतं न भवति, तन्निवर्त्यमपसार्यं स्वकीयं परकीयं च यथाबलं यथासामर्थ्यम्। शक्तिवैकल्यादेव तदुपेक्षितुमुचितमिति भावः॥

P 334

स्यादेतत्—यदि नाम आत्मादिर्नास्ति, तथापि संतानो नाम एकः संभवति, तथा बहूनां करचरणादीनां समुदायः शरीरमेकम्। तदेतद्द्वयं यथासंभवमिहलोके परलोके च आत्मदुःखापहरणादेर्नियामकं भविष्यति। ततोऽयमविशेषादित्यसिद्धो हेतुः, पूर्वश्च अनैका25 न्तिक इत्याशङ्क्याह—

संतानः समुदायश्च पङ्क्तिसेनादिवन्मृषा।
यस्य दुःखं स नास्त्यस्मात्कस्य तत्स्वं भविष्यति॥ १०१॥

संतानो नाम न कश्चिदेकः परमार्थसन् संभवति। किं तर्हि कार्यकारणभावप्रवृत्तक्षणपरंपराप्रवाहरूप एवायम्, ततो व्यतिरिक्तस्यानुपलम्भात्। तस्मादेतेषामेव क्षणा30 नामेकपदेन प्रतिपादनाय संकेतो कृतो बुद्धैर्व्यवहारार्थं संतान इति। इति प्रज्ञप्तिसन्नेव अयम्। तेन अत्राभिनिवेशो न कार्यः। अन्यथा आत्मना किमपराद्धं येनासौ न स्वीक्रियते। एवं समुदायोऽपि न समुदायिभ्यो वस्तुसन् एको विद्यते, तस्य तेभ्यः पृथगनुपलब्धेः?

तत्त्वान्यत्वविकल्पस्तु अस्य अवयविविचारेणैव गत इति नेह प्रतायते । ततश्च अयमपि संवृतिसन्नेव पूर्ववत् । अनयोर्यथासंख्यमुदाहरणमाह—पङ्क्तिसेनादिवदिति । पङ्क्तिवत् संतानः, सेनादिवत् समुदायः । आदिशब्दान्मालावनादयो गृह्यन्ते । यथा अनेकेषां पिपीलिकादीनां पूर्वापरभावेन व्यवस्थितानां स्वरूपमन्तरेण पङ्क्तिर्नास्ति स्रक्सूत्रवदेका, यथा च हस्त्यश्वपदातिप्रभृतिभ्यो मिलितेभ्यो व्यतिरिक्ता नान्या सेना काचिदेका तत्रास्ति, तथा समुदायोऽपि । एतच्च अन्यत्र [ ९.७३ ] विस्तरेण विचारितमिति नेह विचार्यते । तस्माद्वस्तुसदालम्बनाभावान्मृषायं प्रत्ययः । अर्थो वा, विचारासहत्वात् । एवमात्मादेः स्वामिनः कस्यचिदभावाद् यस्य संबन्धि दुःखं स नास्ति । अतः कस्य तद्दुःखं स्वात्मीयं भविष्यति ? नैव कस्यचिदित्यर्थः । ननु यदि आत्मादिर्नास्ति, तदा कथमयं दृष्टान्तो भविष्यति आत्मवदिति आत्मसत्त्ववदिति च ? सत्यमेतत् । किं तु नेदं व्यसनितया साधनमभिधीयते, किं तर्हि परस्य आत्मग्रहाभिनिवेशनिवारणाय । तद्यदि परस्य निवृत्त एव आत्मग्रहाभिनिवेशः, तदा न किंचित् प्रयोजनमनुमानप्रयोगस्य । अथ न निवृत्तः, तदा तदभिप्रायेणैव स्वपरविभागं कृत्वा तत्प्रत्यायनार्थं साधनं दृष्टान्तश्चोच्यते, इति न दृष्टान्तस्यासिद्धिर्व्यवहारप्रवर्तनाय । किं च । इदमुपात्तपञ्चस्कन्धमात्रमभिसंधाय दृष्टान्ते दीयमाने न काचित् क्षतिः, अत्रैव आत्मशब्दस्य प्रवृत्तेरिति ॥

इदानीं प्रकृतमुपसंहरन्नाह—

**अस्वामिकानि दुःखानि सर्वाण्येवाविशेषतः ।**
**दुःखत्वादेव वार्याणि नियमस्तत्र किंकृतः ॥ १०२ ॥**

न विद्यन्ते स्वामिनो येषामुक्तक्रमेणेति विग्रहः । अममानि न कस्यचित्प्रतिबद्धानि इत्यर्थः । कुतः ? किं कानिचिदेव ? न । सर्वाण्येवाविशेषतः । न कचित् कस्यचित् स्वामित्वमस्ति, विशेषाभावात् । दुःखत्वादेव स्वपराविभागं कृत्वा वार्याणि निषेध्यानि भवन्ति । नान्यन्निमित्तमस्ति तत्र आत्मीयत्वादि । तेनायं नियमः किंकृतः, केन विशेषेण कृतः ? येन स्वकीयानि च वार्याणि न परकीयानीति । एवं दुःखत्वादिति हेतुरनैकान्तिको न भवतीति समर्थितम् ॥

ननु यदि दुःखी नाम न कश्चित् संसारे संभवति, तर्हि दुःखमनिवार्यमेव स्यात्, कृपापात्रस्य दुःखिनः कस्यचिदभावादित्याशङ्कमान आह—

**दुःखं कस्मान्निवार्यं चेत्सर्वेषामविवादतः ।**
**वार्यं चेत्सर्वमप्येवं न[1] चेदात्मापि सत्त्ववत् ॥ १०३ ॥**

न वार्यमेव निरात्मकत्वादेव यदि मन्यसे, तदा न युक्तमेतत् । कुतः ? सर्वेषामविवादादविप्रतिपत्तेः । चार्वाकस्यापि स्वदुःखपरिहारेणैवेह प्रवृत्तेः । न च तेषामात्मनोऽ-

१ Mss. read आत्मनि सर्ववत् Our reading is based on Com. and Tibetan translation.

भ्युपगमाददोषः, तत्स्वभावस्यानुपलब्धेः। न च अभ्युपगममात्रेण तस्य सत्ता प्रसिध्यति, तत्साधकप्रमाणाभावात्, बाधकस्य च अनेकप्रकारस्याभिधानात्। एवं सति यदि वार्यं दुःखम्, तदा सर्वं वार्यम्, न चेत्सर्वं वार्यम्, तदात्मापि। उपात्तपञ्चस्कन्धस्वभावमपि दुःखं न वार्यम्, सर्व( त्व ? )वदविशेषादित्युपसंहारः॥

5 स्यादेतत्—करुणापरतन्त्रतया परदुःखदुःखिनः सर्वदुःखापहरणाय यत्नः। तद्वरं बहुदुःखनिदानं सैव प्रथमतो नोत्पादयितुं युज्यत इति परवचनावकाशं शङ्कमान आह—

**कृपया बहु दुःखं चेत्कस्मादुत्पद्यते बलात्।**

बलादिति प्रयत्नात्। अत्रोत्तरमाह—

**जगद्दुःखं निरूप्येदं कृपादुःखं कथं बहु॥ १०४॥**

P 338 10 जगतो दुःखं नरकादिकृतमनेकप्रकारं समीक्ष्य इदं कृपाकृतं दुःखं कथं बहु ? नेदं बहु कृपादुःखमिति भावः॥

किं च। अपरमिदमत्रोत्तरमित्याह—

**बहूनामेकदुःखेन यदि दुःखं विगच्छति।**
**उत्पाद्यमेव तद्दुःखं सदयेन परात्मनोः॥ १०५॥**

15 एकस्य पुरुषस्य दुःखेन बहूनां सत्त्वानां यदि दुःखं विगच्छति निवर्तते, तदा उत्पाद्यमेव जनयितव्यमेतत्तादृशं दुःखम्। सदयेन कृपात्मकेन परस्यात्मनश्च॥

उत्सूत्रतामस्य परिहरन्नाह—

**अतः सुपुष्पचन्द्रेण जानतापि नृपापदम्।**
**आत्मदुःखं न निहतं बहूनां दुःखिनां व्ययात्॥ १०६॥**

20 यत एव उत्पाद्यमेव तद्दुःखं कृपालुना स्वपरात्मनोः अत एव सुपुष्पचन्द्रेण बोधिसत्त्वेन। नृपादापदं नृपस्य वा राज्ञ आपदम्। जानतापि बुध्यमानेनापि। आत्मदुःखं न निहतं न निवर्तितम्। उपेक्षितमिति यावत्। तथा राज्ञोऽपि परलोकदुःखम्। किमिति ? P 339 बहूनां दुःखिनां व्ययात्। दुःखस्येति प्रकृतं षष्ठयन्ततया संबध्यते। यदुक्तं सुपुष्पचन्द्रस्येतिवृत्तके [ समाधि० ३५ ]—तथा हि—अतीतेऽध्वनि रत्नपद्मचन्द्रविशुद्धाभ्युद्गतराजो नाम तथा-25 गतोऽभूत्। स भगवान् बुद्धकृत्यं कृत्वा चिरतरकालमवस्थाय परिनिर्वृतः। तस्मिंश्च परिनिर्वृते शासनान्तर्धानसमये राजा शूरदत्तो नाम बभूव। तस्य रत्नावती नाम राजधानी। तस्मिन् काले दृष्टिविपन्नाः सत्त्वाः। तेषामनुकम्पार्थं बहवो बोधिसत्त्वा उत्पन्नाः प्रव्रजिताः। ते च ततो राष्ट्रजनपदेभ्यो निर्वासिताः समन्तभद्रं नाम अरण्यवनखण्डमुपसृत्य विहरन्ति स्म सार्धं सुपुष्पचन्द्रेण धर्मभाणकेन। अथ खलु सुपुष्पचन्द्रस्य बोधिसत्त्वस्य सत्त्वान् 30 करुणायमानस्य रहोगतस्य चेतसि वितर्क उदपादि—यन्न्वहं जनपदराष्ट्रराजधानीर्गत्वा सत्त्वान् कुमार्गप्रपन्नान् कल्याणे वर्त्मनि प्रतिष्ठापयामि। स तमर्थं सब्रह्मचारिभ्यो निवेदयामास। तैर्निवार्यमाणोऽपि स्वयं च स्वापदं प्रतिपद्यमानः तस्य राज्ञोऽपि ततो वनखण्डान्निर्जगाम।

स क्रमेण धर्मं देशयन् तस्य राज्ञो राजधानीमनुप्राप्तो बहून् सत्त्वान् राजपुत्रामात्यपुरोहित- प्रभृतीन् प्रकारं[1] विनीय सत्पथे व्यवस्थापयन् तेन राज्ञा दृष्टः। सहदर्शनेन प्रकुप्तः सर्वं च जनकायं तदावर्जितं प्रतिपद्य ईर्ष्यादूषितहृदयः। तद्वधार्थं स्वपुत्रानाज्ञापयामास। तांश्च तद्वधविमुखान् प्रतिपद्य नन्दिकं वध्यघातकमाज्ञापयामास। तेन तदाज्ञामनुवर्तमानेन करचरणादिच्छेदक्रमेण अक्षीणि च संदंशिकेनोद्धृत्य जीविताद् व्यपरोपितः। अथ तस्य भिक्षो राजमार्गगतस्य जीविताद् व्यपरोपितस्य शरीरे अनेकान्यद्भुतानि बभूवुः। तानि प्रतिपद्य स राजा निश्चितं बोधिसत्त्व एवायं भिक्षुरिति परितापगतो बहुतरं परिदेवते स्म। इति सुपुष्पचन्द्रस्येतिवृत्तकं संक्षिप्य कथितम्। विस्तरेण पुनः समाधिराजसूत्रे [ ३५ ] निर्दिष्टमिति तत्रैव अवधार्यम्॥

न चापि कृपावतां परदुःखदुःखिनां महदपि दुःखं बाधकमिति प्रतिपादयन्नाह—

एवं भावितसंतानाः परदुःखसमप्रियाः।
अवीचिमवगाहन्ते हंसाः पद्मवनं यथा॥ १०७॥

एवं परात्मसमतया भावितसंतानाः अनाभोगप्रवृत्तचित्तसंततयः। परदुःखेन समं तुल्यं प्रियं सुखहेतुर्येषां ते तथा। आत्मसुखमपि परदुःखेन दुःखमेव येषामित्यर्थः। ते अवीचिमवगाहन्ते परव्यसनसमुद्धरणाय तद्दुःखं सुखमेव मन्यमानाः। इदमेवाह–हंसाः पद्मवनं यथा। आवीचिकमपि दुःखं सुखमेव परार्थे येषां ते। केन दुःखहेतुना अन्येन दुःखिनो भविष्यन्ति?

अपि च। सुखमपि तेषामसाधारणमेवोपजायते परसुखेन, इत्युपदर्शयन्नाह—

मुच्यमानेषु सत्त्वेषु ये ते प्रामोद्यसागराः।
तैरेव ननु पर्याप्तं मोक्षेणारसिकेन[2] किम्॥ १०८॥

दुःखबन्धनाद्विसंयुज्यमानेषु सत्त्वेषु सत्सु। ये ते इति। तेषामेव अनुभवसिद्धत्वा- दिदंतया कथयितुमशक्याः, अत एव प्रामोद्यसागराः संतुष्टिसमुद्राः कृपावतां संतानेषु प्रादुर्भवन्ति। तैरेव प्रामोद्यसागरैः पर्याप्तं तदन्यसुखवैमुख्यात् परिसमाप्तम्[3]। * * * * *

अतः परार्थं कृत्वापि न मदो न च विस्मयः।
न विपाकफलाकाङ्क्षा परार्थैकान्ततृष्णया॥ १०९॥
तस्माद्यथान्तशोऽवर्णादात्मानं गोपयाम्यहम्।
रक्षाचित्तं दयाचित्तं करोम्येवं परेष्वपि॥ ११०॥
अभ्यासादन्यदीयेषु शुक्रशोणितबिन्दुषु।
भवत्यहमिति ज्ञानमसत्यपि हि वस्तुनि॥ १११॥

---

१ Tibetan translation suggests: यथाविनयं बहूपायैः for प्रकारं. २ ŚS reads मोक्षेणाप्यरसेन किम्. ३ Remaining part of Pañjikā in this chapter is lost on missing folios.

तथा कायोऽन्यदीयोऽपि किमात्मेति न गृह्यते ।
परत्वं तु स्वकायस्य स्थितमेव न दुष्करम् ॥ ११२ ॥
ज्ञात्वा सदोषमात्मानं परानपि गुणोदधीन् ।
आत्मभावपरित्यागं परादानं च भावयेत् ॥ ११३ ॥
5 कायस्यावयवत्वेन यथाभीष्टाः करादयः ।
जगतोऽवयवत्वेन तथा कस्मान्न देहिनः ॥ ११४ ॥
यथात्मबुद्धिरभ्यासात्स्वकायेऽस्मिन्निरात्मके ।
परेष्वपि तथात्मत्वं किमभ्यासान्न जायते ॥ ११५ ॥
एवं परार्थं कृत्वापि न मदो न च विस्मयः ।
10 आत्मानं भोजयित्वैव फलाशा न च जायते ॥ ११६ ॥
तस्माद्यथार्तिशोकादेरात्मानं गोप्तुमिच्छसि ।
रक्षाचित्तं दयाचित्तं जगत्यभ्यस्यतां तथा ॥ ११७ ॥
अध्यतिष्ठदतो नाथः स्वनामाप्यवलोकितः ।
पर्षच्छारद्यभयमप्यपनेतुं जनस्य हि ॥ ११८ ॥
15 दुष्करान्न निवर्तेत यस्मादभ्यासशक्तितः ।
यस्यैव श्रवणात्त्रासस्तेनैव न विना रतिः ॥ ११९ ॥
आत्मानं चापरांश्चैव यः शीघ्रं त्रातुमिच्छति ।
स चरेत्परमं गुह्यं परात्मपरिवर्तनम् ॥ १२० ॥
यस्मिन्नात्मन्यतिस्नेहादल्पादपि भयाद्भयम् ।
20 न द्विषेत्कस्तमात्मानं शत्रुवद्यो भयावहः ॥ १२१ ॥
यो मान्द्यक्षुत्पिपासादिप्रतीकारचिकीर्षया ।
पक्षिमत्स्यमृगान् हन्ति परिपन्थं च तिष्ठति ॥ १२२ ॥
यो लाभसत्क्रियाहेतोः पितरावपि मारयेत् ।
रत्नत्रयस्वमादद्याद्येनावीचीन्धनो भवेत् ॥ १२३ ॥
25 कः पण्डितस्तमात्मानमिच्छेद्रक्षेत्प्रपूजयेत् ।
न पश्येच्छत्रुवच्चैनं कश्चैनं प्रतिमानयेत् ॥ १२४ ॥
यदि दास्यामि किं भोक्ष्ये इत्यात्मार्थे पिशाचता ।
यदि भोक्ष्ये किं ददामीति परार्थे देवराजता ॥ १२५ ॥
आत्मार्थं पीडयित्वान्यं नरकादिषु पच्यते ।
30 आत्मानं पीडयित्वा तु परार्थं सर्वसंपदः ॥ १२६ ॥
दुर्गतिर्नीचता मौर्ख्यं ययैवात्मोन्नतीच्छया ।
तामेवान्यत्र संक्राम्य सुगतिः सत्कृतिर्मतिः ॥ १२७ ॥

आत्मार्थं परमाज्ञप्य दासत्वाद्यनुभूयते।
परार्थं त्वेनमाज्ञप्य स्वामित्वाद्यनुभूयते॥ १२८॥
ये केचिद्दुःखिता लोके सर्वे ते स्वसुखेच्छया।
ये केचित्सुखिता लोके सर्वे तेऽन्यसुखेच्छया॥ १२९॥
बहुना वा किमुक्तेन दृश्यतामिदमन्तरम्। 5
स्वार्थार्थिनश्च बालस्य मुनेश्चान्यार्थकारिणः॥ १३०॥
न नाम साध्यं बुद्धत्वं संसारेऽपि कुतः सुखम्।
स्वसुखस्यान्यदुःखेन परिवर्तमकुर्वतः॥ १३१॥
आस्तां तावत्परो लोके दृष्टोऽप्यर्थो न सिध्यति।
भृत्यस्याकुर्वतः कर्म स्वामिनोऽददतो भृतिम्॥ १३२॥ 10
त्यक्त्वान्योन्यसुखोत्पादं दृष्टादृष्टसुखोत्सवम्।
अन्योन्यदुःखनाद् घोरं दुःखं गृह्णन्ति मोहिताः॥ १३३॥
उपद्रवा ये च भवन्ति लोके
यावन्ति दुःखानि भयानि चैव।
सर्वाणि तान्यात्मपरिग्रहेण 15
तत्किं ममानेन परिग्रहेण॥ १३४॥
आत्मानमपरित्यज्य दुःखं त्यक्तुं न शक्यते।
यथाग्निमपरित्यज्य दाहं त्यक्तुं न शक्यते॥ १३५॥
तस्मात्स्वदुःखशान्त्यर्थं परदुःखशमाय च।
ददाम्यन्येभ्य आत्मानं परान् गृह्णामि चात्मवत्॥ १३६॥ 20
अन्यसंबद्धमस्मीति निश्चयं कुरु हे मनः।
सर्वसत्त्वार्थमुत्सृज्य नान्यच्चिन्त्यं त्वयाधुना॥ १३७॥
न युक्तं स्वार्थदृष्ट्यादि तदीयैश्चक्षुरादिभिः।
न युक्तं स्यन्दितुं स्वार्थमन्यदीयैः करादिभिः॥ १३८॥
तेन सत्त्वपरो भूत्वा कायेऽस्मिन् यद्यदीक्षसे। 25
तत्तदेवापहृत्यास्मात् परेभ्यो हितमाचर॥ १३९॥
हीनादिष्वात्मतां कृत्वा परत्वमपि चात्मनि।
भावयेर्ष्यां च मानं च निर्विकल्पेन चेतसा॥ १४०॥
एष सत्क्रियते नाहं लाभी नाहमयं यथा।
स्तूयतेऽहमहं निन्द्यो दुःखितोऽहमयं सुखी॥ १४१॥ 30
अहं करोमि कर्माणि तिष्ठत्येष तु सुस्थितः।
अयं किल महांल्लोके नीचोऽहं किल निर्गुणः॥ १४२॥

किं निर्गुणेन कर्तव्यं सर्वस्यात्मा गुणान्वितः ।
सन्ति ते येष्वहं नीचः सन्ति ते येष्वहं वरः ॥ १४३ ॥
शीलदृष्टिविपत्त्यादिक्लेशशक्त्या न मद्वशात् ।
चिकित्स्योऽहं यथाशक्ति पीडाप्यङ्गीकृता मया ॥ १४४ ॥
5 अथाहमचिकित्स्योऽस्य कस्मान्मामवमन्यसे ।
किं ममैतद्गुणैः कृत्यमात्मा तु गुणवानयम् ॥ १४५ ॥
दुर्गतिव्यालवक्त्रस्थैनैवास्य करुणा जने ।
अपरं गुणमानेन पण्डितान् विजिगीषते ॥ १४६ ॥
सममात्मानमालोक्य यतः स्वाधिक्यवृद्धये ।
10 कलहेनापि संसाध्यं लाभसत्कारमात्मनः ॥ १४७ ॥
अपि सर्वत्र मे लोके भवेयुः प्रकटा गुणाः ।
अपि नाम गुणा येऽस्य न श्रोष्यन्त्यपि केचन ॥ १४८ ॥
छाद्येरन्नपि मे दोषाः स्यान्मे पूजास्य नो भवेत् ।
सुलब्धा अद्य मे लाभाः पूजितोऽहमयं न तु ॥ १४९ ॥
15 पश्यामो मुदितास्तावच्चिरादेनं खलीकृतम् ।
हास्यं जनस्य सर्वस्य निन्द्यमानमितस्ततः ॥ १५० ॥
अस्यापि हि वराकस्य स्पर्धा किल मया सह ।
किमस्य श्रुतमेतावत् प्रज्ञा रूपं कुलं धनम् ॥ १५१ ॥
एवमात्मगुणान् श्रुत्वा कीर्त्यमानानितस्ततः ।
20 संजातपुलको हृष्टः परिभोक्ष्ये सुखोत्सवम् ॥ १५२ ॥
यद्यप्यस्य भवेल्लाभो ग्राह्योऽस्माभिरसौ बलात् ।
दत्वास्मै यापनामात्रमस्मत्कर्म करोति चेत् ॥ १५३ ॥
सुखाच्च च्यावनीयोऽयं योज्योऽस्मद्व्यथया सदा ।
अनेन शतशः सर्वे संसारव्यथिता वयम् ॥ १५४ ॥
25 अप्रमेया गताः कल्पाः स्वार्थं जिज्ञासतस्तव ।
श्रमेण महतानेन दुःखमेव त्वयार्जितम् ॥ १५५ ॥
मद्विज्ञप्त्या तथात्रापि प्रवर्तस्वाविचारतः ।
द्रक्ष्यस्येतद्गुणान् पश्चाद्भूतं हि वचनं मुनेः ॥ १५६ ॥
अभविष्यदिदं कर्म कृतं पूर्वं यदि त्वया ।
30 बौद्धं संपत्सुखं मुक्त्वा नाभविष्यदियं दशा ॥ १५७ ॥
तस्माद्यथान्यदीयेषु शुक्रशोणितबिन्दुषु ।
चकर्थ त्वमहंकारं तथान्येष्वपि भावय ॥ १५८ ॥

अन्यदीयश्वरो भूत्वा कायेऽस्मिन् यद्यदीक्षसे ।
तत्तदेवापहृत्यर्थं परेभ्यो हितमाचर ॥ १५९ ॥
अयं सुस्थः परो दुःस्थो नीचैरन्योऽयमुच्चकैः ।
परः करोत्ययं नेति कुरुष्वेर्ष्यां त्वमात्मनि ॥ १६० ॥
सुखाच्च च्यावयात्मानं परदुःखे नियोजय । 5
कदायं किं करोतीति छल( फल )मस्य निरूपय ॥ १६१ ॥
अन्येनापि कृतं दोषं पातयास्यैव मस्तके ।
अल्पमप्यस्य दोषं च प्रकाशय महामुनेः ॥ १६२ ॥
अन्याधिकयशोवादैर्यशोऽस्य मलिनीकुरु ।
निकृष्टदासवच्चैनं सत्त्वकार्येषु वाहय ॥ १६३ ॥ 10
नागन्तुकगुणांशेन स्तुत्यो दोषमयो ह्ययम् ।
यथा कश्चिन्न जानीयाद्गुणमस्य तथा कुरु ॥ १६४ ॥
संक्षेपाद्यद्यदात्मार्थे परेष्वपकृतं त्वया ।
तत्तदात्मनि सत्त्वार्थे व्यसनं विनिपातय ॥ १६५ ॥
नैवोत्साहोऽस्य दातव्यो येनायं मुखरो भवेत् । 15
स्थाप्यो नववधूवृत्तौ ह्रीतो भीतोऽथ संवृतः ॥ १६६ ॥
एवं कुरुष्व तिष्ठैवं न कर्तव्यमिदं त्वया ।
एवमेव वशः कार्यो निग्राह्यस्तदतिक्रमे ॥ १६७ ॥
अथैवमुच्यमानेऽपि चित्त नेदं करिष्यसि ।
त्वामेव निग्रहीष्यामि सर्वदोषास्त्वदाश्रिताः ॥ १६८ ॥ 20
क्व यास्यसि मया दृष्टः सर्वदर्पान्निहन्मि ते ।
अन्योऽसौ पूर्वकः कालस्त्वया यत्रास्मि नाशितः ॥ १६९ ॥
अद्याप्यस्ति मम स्वार्थ इत्याशां त्यज सांप्रतम् ।
त्वं विक्रीतो मयान्येषु बहुखेदमचिन्तयन् ॥ १७० ॥
त्वां सत्त्वेषु न दास्यामि यदि नाम प्रमोदतः । 25
त्वं मां नरकपालेषु प्रदास्यसि न संशयः ॥ १७१ ॥
एवं चानेकधा दत्वा त्वयाहं व्यथितश्चिरम् ।
निहन्मि स्वार्थचेटं त्वां तानि वैराण्यनुस्मरन् ॥ १७२ ॥
न कर्तव्यात्मनि प्रीतिर्यद्यात्मप्रीतिरस्ति ते ।
यद्यात्मा रक्षितव्योऽयं रक्षितव्यो न युज्यते ॥ १७३ ॥ 30
यथा यथास्य कायस्य क्रियते परिपालनम् ।
सुकुमारतरो भूत्वा पतत्येव तथा तथा ॥ १७४ ॥

अस्यैवं पतितस्यापि सर्वापीयं वसुंधरा ।
नालं पूरयितुं वाञ्छां तत्कोऽस्येच्छां करिष्यति ॥ १७५ ॥
अशक्यमिच्छतः क्लेश आशाभङ्गश्च जायते ।
निराशो यस्तु सर्वत्र तस्य संपदजीर्णिका ॥ १७६ ॥
5 तस्मान्न प्रसरो देयः कायस्येच्छाभिवृद्धये ।
भद्रकं नाम तद्वस्तु यदिष्टत्वान्न गृह्यते ॥ १७७ ॥
भस्मनिष्ठावसानेयं निश्चेष्टान्येन चाल्यते ।
अशुचिप्रतिमा घोरा कस्मादत्र ममाग्रहः ॥ १७८ ॥
किं ममानेन यन्त्रेण जीविना वा मृतेन वा ।
10 लोष्टादेः को विशेषोऽस्य हाहंकारं न नश्यसि ॥ १७९ ॥
शरीरपक्षपातेन वृथा दुःखमुपार्ज्यते ।
किमस्य काष्ठतुल्यस्य द्वेषेणानुनयेन वा ॥ १८० ॥
मया वा पालितस्यैवं गृध्राद्यैर्भक्षितस्य वा ।
न च स्नेहो न च द्वेषस्तत्र स्नेहं करोमि किम् ॥ १८१ ॥
15 रोषो यस्य खलीकारात्तोषो यस्य च पूजया ।
स एव चेन्न जानाति श्रमः कस्य कृतेन मे ॥ १८२ ॥
इमं ये कायमिच्छन्ति तेऽपि मे सुहृदः किल ।
सर्वे स्वकायमिच्छन्ति तेऽपि कस्मान्न मे प्रियाः ॥ १८३ ॥
तस्मान्मयानपेक्षेण कायस्त्यक्तो जगद्धिते ।
20 अतोऽयं बहुदोषोऽपि धार्यते कर्मभाण्डवत् ॥ १८४ ॥
तेनालं लोकचरितैः पण्डिताननुयाम्यहम् ।
अप्रमादकथां स्मृत्वा स्त्यानमिद्धं निवारयन् ॥ १८५ ॥
तस्मादावरणं हन्तुं समाधानं करोम्यहम् ।
विमार्गाच्चित्तमाकृष्य स्वालम्बननिरन्तरम् ॥ १८६ ॥

25 बोधिचर्यावतारे ध्यानपारमिता नाम अष्टमः परिच्छेदः ॥

## ९ [1]प्रज्ञापारमिता नाम नवमः परिच्छेदः ।

यो[2] निर्लेपतया निरुत्तरपदं सर्वप्रपञ्चोज्झिता  P 342

प्रज्ञापारमितादिसंवृतिपदैराख्यायतेऽनास्रवा ।

यां सम्यक्प्रतिपद्य निर्मलधियो यान्त्युत्तमां निर्वृतिं

तां नत्वा विधिवत् करोमि विवृतिं तस्याः प्रसन्नैः पदैः ॥ १ ॥  5

यत्राचार्यो गुणनिधिरसौ शान्तिदेवः प्रकाशं

वक्तुं शक्तः प्रवचनमहाम्भोधिपारं प्रयातः ।

किं तस्यार्थं हतमतिरहं वक्तुमीशस्तथापि  P 343

प्रज्ञाभ्यासात्सुकृ[3]तमसमं यत्ततोऽस्मि प्रवृत्तः ॥ २ ॥

न नाम काचिद्गुणलेशवासना  10

मैते[4]र्न मेऽस्ति प्रतिभागुणोऽर्जितः ।

तथापि सन्मित्रनिषेवणाफलं

यदेव मे तादृशि वाक् प्रसर्पति ॥ ३ ॥

अथ यो नाम कश्चिद् गोत्रविशेषात् पर्युपासितकल्याणमित्रतया त्रिजगत्पर्यापन्न-समस्तजनदुःखदुःखी सर्वप्राणभृतां निःशेषदुःखसमुद्धरणाशयः स्वसुखनिरपेक्षः तत्प्रशमो- 15 पायभूतं बुद्धत्वमेव मन्यमानः तत्प्राप्तिवाञ्छया समुत्पादितबोधिचित्तो महात्मा सौगत-पदसाधनोपायभूतसंभारद्वयपरिपूरणार्थं क्रमेण दानादिषु प्रवर्तते । तस्य तथा प्रवर्तमानस्य सम्यक्प्रतिपन्नशमथस्यापि दानादयः प्रज्ञाविकलतया जगदर्थसंपादननिदानं बुद्धत्वं नाव-हन्तीत्यभिसंधाय अवश्यं संसारदुःखनिर्मोक्षार्थिना प्रज्ञोत्पादनाय यतितव्यम् । यथोक्तम्—

शमथेन विपश्यनासुयुक्तः  20  P 344

[ ८·४ ]

इत्यादि । तत्र शमथप्रतिपादनं कृतम् । इदानीं तदनन्तरप्राप्तां विपश्यनां प्रज्ञापर-नामधेयां प्रतिपादयन्नाह—

इमं परिकरं सर्वं प्रज्ञार्थं हि मुनिर्जगौ ।

तस्मादुत्पादयेत्प्रज्ञां दुःखनिवृत्तिकाङ्क्षया ॥ १ ॥  25

इममिति समनन्तरमिह शास्त्रे लक्षणतः प्रतिपादितं दानादिकमिदंतया प्रत्यक्षतया परामृशति । परिकरमिति परिवारं परिच्छेदम् । संभारमिति यावत् । सर्वमुक्तप्रकारमन्यच्च ।

---

१ This chapter is treated by Com. as an independent work and hence the invocation. २ Before Introductory stanzas, Mss. insert ओं लोकपालाय नमः, ओं लोकेशाय नमः which are omitted in T. Instead, T gives : मञ्जुश्रिये कुमारभूताय नमः. ३ Mss. स्वकृतम् for सुकृतम्. ४ Mss. मतिर्ममास्ति प्रतिभागुणोर्जिता. Our text is based on T.

प्रज्ञार्थं हि मुनिर्जगाविति संबन्धः। प्रज्ञा यथावस्थितप्रतीत्यसमुत्पन्नवस्तुतत्त्वप्रविचयलक्षणा, सैव अर्थः प्रयोजनं संबोधिहेतुभावोपनायकतया यस्य दानादिलक्षणस्य परिकरस्य स तथा, तमिति। दानपारमितादिषु धर्मप्रविचयस्वभावायाः प्रज्ञायाः प्रधानत्वात्। तथा हि दानं संबुद्धबोधिप्राप्तये प्रथमं कारणम्, पुण्यसंभारान्तर्भूतत्वात्। तच्च शीलालंकृतमेव सुगति-5 परंपरां सुखभोगोपकरणसंपन्नामावहदनुत्तरज्ञानप्रतिलम्भहेतुः। क्षान्तिरपि तद्विपक्षभूतप्रतिघ-प्रतिपक्षतया दानशीलसुकृतमयं संभारमनुपालयन्ती सुगतत्वाधिगतये संप्रवर्तते। एतच्च शुभं दानादित्रितयसंभूतं पुण्यसंभाराख्यं वीर्यमन्तरेण न भवतीति तदपि उभयसंभारकारणतया सर्वावरणप्रहाणाय समुपजायते। समाहितचित्तस्य च यथाभूतपरिज्ञानमुत्पद्यत इति ध्यान-पारमितापि अनुत्तरज्ञानहेतुरुपपद्यते। एवमेते दानादयः सत्कृत्य संभृता अपि प्रज्ञामन्तरेण 10 सौगतपदाधिगमहेतवो न भवन्तीति नापि पारमिताव्यपदेशं लभन्ते। प्रज्ञाकृतपरिशुद्धि-भाजः पुनः अव्याहतोदारप्रवृत्तितया तदनुकूलमनुवर्तमानाः तद्धेतुभावमधिगच्छन्ति, पार-मितानामधेयं च लभन्ते। तथा दातृदेयप्रतिग्राहकादित्रितयानुपलम्भयोगेन प्रज्ञापरिशोधिताः सादरनिरन्तरदीर्घकालमभ्यस्यमानाः प्रकर्षपर्यन्तमुपगच्छन्तः अविद्याप्रवर्तितसकलविकल्प-जालमलरहितं क्लेशज्ञेयावरणविनिर्मुक्तमुभयनैरात्म्याधिगमस्वभावं सर्वस्वपरहितसंपदाधारभूतं 15 परमार्थतत्त्वात्मकं तथागतधर्मकायमभिनिर्वर्तयन्तीति प्रज्ञाप्रधाना दानादयो गुणा उच्यन्ते॥

P 345 (margin)

न चैतद्वक्तव्यम्—यदि प्रज्ञा प्रधानं दानादीनाम्, सैव केवला संबोधिसाधनमस्तु, किमपरैर्दानादिभिरिति। तदन्येषामुपयोगस्य वर्णितत्वात्, केवलं नेत्रविकला इव दानादयः प्रज्ञानेतृका एव यथाभिमतां सौगतीं भूमिमभिसरन्तीति प्रज्ञोपनायका[1] उच्यन्ते, न तु प्रज्ञैव केवला सम्यक्संबोधिसाधनम्। तस्माद्दानादिपरिकरः प्रज्ञार्थः इति सिद्धम्॥

P 346 (margin)

20 सर्वकल्पनाविरहात् समारोपापवादान्तद्वयमौनात् अशैक्षकायवाङ्मनःकर्मलक्षणमौन-त्रययोगाद्वा मुनिर्बुद्धो भगवान्। त्रिदुःखतादुःखितसर्वजगत्परित्राणाध्याशयो जगौ जगाद। उक्तवानित्यर्थः। आर्यप्रज्ञापारमितादिसूत्रान्तेषु प्रज्ञार्थमुक्तवान् क्रमेण दानादिपरिकरम्। यथोक्तमार्यशतसाहस्र्यां प्रज्ञापारमितायाम्—

तद्यथापि नाम सुभूते सूर्यमण्डलं चन्द्रमण्डलं च चतुर्षु द्वीपेषु कर्म करोति, 25 चतुरश्च द्वीपाननुगच्छति अनुपरिवर्तते, एवमेव सुभूते प्रज्ञापारमिता पञ्चसु पारमितासु कर्म करोति, पञ्च पारमिता अनुगच्छति, अनुपरिवर्तते, प्रज्ञापारमिताविरहितत्वात् पञ्च पारमिताः पारमितानामधेयं न लभन्ते। तद्यथापि नाम सुभूते राजा चक्रवर्ती विरहितः सप्तभी रत्नैश्चक्रवर्तिनामधेयं न लभते, एवमेव सुभूते पञ्च पारमिताः प्रज्ञापारमिताविरहितत्वान्न पारमितानामधेयं लभन्ते। तद्यथापि नाम सुभूते याः काश्चन कुनद्यः, सर्वास्ता येन गङ्गा 30 महानदी तेनानुगच्छन्ति। ता गङ्गया महानद्या सार्धं महासमुद्रमनुगच्छन्ति, एवमेव सुभूते पञ्च पारमिताः प्रज्ञापारमितापरिगृहीता येन सर्वाकारज्ञता तेनानुगच्छन्ति॥ इति विस्तरः॥

P 347 (margin)

---

[1] Nep Ms. reads प्रज्ञोपायनायका.

पुनश्चोक्तम्—

इयं कौशिक प्रज्ञापारमिता बोधिसत्त्वानां महासत्त्वानां दानपारमितामभिभवति, शीलपारमितामभिभवति, क्षान्तिपारमितामभिभवति, [ वीर्यपारमितामभिभवति, ] ध्यानपारमितामभिभवति। [1]तद्यथापि नाम कौशिक जात्यन्धानां शतं वा सहस्रं वा अपरिणायकानामभव्यं मार्गावतरणाय, कुतः पुनर्नगरानुप्रवेशाय, एवमेव कौशिक अचक्षुष्काः पञ्च 5 पारमिता जात्यन्धभूता भवन्ति विना प्रज्ञापारमितया अपरिणायकाः, विना प्रज्ञापारमितया अभव्या बोधिमार्गावतरणाय, कुत एव सर्वाकारज्ञतानगरानुप्रवेशाय। यदा पुनः कौशिक पञ्च पारमिताः प्रज्ञापारमितापरिगृहीता भवन्ति, तदा एताः पञ्च पारमिताः सचक्षुष्का भवन्ति। प्रज्ञापारमितापरिगृहीताश्चैताः पञ्च पारमिताः पारमितानामधेयं लभन्ते॥ इति विस्तरः॥ 10

एवमन्यत्रापि यथासूत्रमवगन्तव्यम्। उक्तं च—

सर्वपारमिताभिस्त्वं निर्मलाभिरनिन्दिते। P 348
चन्द्रलेखेव ताराभिरनुयातासि सर्वदा॥ इति॥
[ प्रज्ञापारमितास्तव-८ ]

अथवा-इममिति समनन्तरप्रक्रान्तरूपं शमथात्मकं प्रबन्धम्। परिकरमिति प्रज्ञा- 15 समुत्थापकतया तत्कारणसंदोहं पीठिकाबन्धं च। प्रज्ञार्थमिति प्रज्ञैव पूर्वोक्ता अर्थः प्रयोजनं साध्यतया यस्य तम्। शमथपरिशोधितचित्त[2]संताने प्रज्ञायाः प्रादुर्भावात् सुप्रशोधितक्षेत्रे सस्यनिष्पत्तिवत्। यथोक्तं शिक्षा[3]समुच्चये—

किं पुनरस्य शमथस्य माहात्म्यम्? यथाभूतज्ञानजननशक्तिः। यस्मात्—
समाहितो यथाभूतं जानातीत्युक्तवान् मुनिः। इति॥ 20
[ शिक्षासमुच्चयकारिका-९ ]

एतदपि धर्मसंगीतौ[4]वुक्तम्—

समाहितचेतसो यथाभूतदर्शनं भवति। यथाभूतदर्शिनो बोधिसत्त्वस्य सत्त्वेषु P 349 महाकरुणा प्रवर्तते। इदं मया समाधिमुखं सर्वसत्त्वानां निष्पादयितव्यम्। स तया महाकरुणया संचोद्यमानोऽधिशीलमधिचित्तमधिप्रज्ञं च शिक्षाः परिपूर्य अनुत्तरां सम्यक्सं- 25 बोधिमभिसंबुध्यते॥ इति विस्तरः॥

हिरिति यस्मात् प्रज्ञार्थं दानादिपरिकरं शमथात्मकपरिकरं वा मुनिर्जगौ, तस्मादुत्पादयेत् प्रज्ञामिति योजनीयम्। उत्पादयेदिति निष्पादयेत् साक्षात्कुर्यात् भावयेत सेवयेत् बहुलीकुर्याद्वा॥

सा च प्रज्ञा द्विविधा-हेतुभूता फलभूता च। हेतुभूतापि द्विविधा अधिमुक्तिचरितस्य 30 च भूमिप्रविष्टस्य च बोधिसत्त्वस्य। फलभूता तु सर्वाकारवरोपेता सर्वधर्मशून्यताधिगम-

१ Cf. Aṣṭ. p. 172. २ Maith-Ms. चित्तचैत्तसंताने. ३ ŚS p. 67. ४ ŚS p. 67.

सिद्धाञ्जनविधेर्दृष्टो घटो नैवाञ्जनं भवेत् ॥ २५ ॥

सिद्धं च तदञ्जनं च, सिद्धस्य वा अञ्जनम्, तस्य विधिः विधानं प्रयोगः, तस्माद् दृष्टः प्रतीतः घटो निधानादि वा नैव अञ्जनं भवति । न च घटादिरञ्जनमेव स्यात् । न यद् यस्मात्प्रतीयते तदेव तद्भवति । एवमीक्षणिकादिविद्यासहकारिणा ज्ञानेन परचित्तं च घटादिवद् दृष्टमिति नैतावता तत्संवेदनं सिद्धं स्यात् । तस्मान्नैतदपि साध्योपयोगि साध- 5 P 404 नम् । ननु यदि ज्ञानमविदितस्वरूपं स्यात्, अर्थस्यापि प्रतीतिर्न स्यात् । अव्यक्तव्यक्तिक-त्वाद् ज्ञानस्य, न हि अर्थस्य व्यक्तिः । तदप्रतीतौ कथमर्थस्य प्रतीतिः ? तथा हि स्वसंवेद-नस्य प्रतिषेधात्, अन्येन अन्यस्य ग्रहणायोगाच्च, तद्ग्रहणाभ्युपगमे च उत्तरोत्तरस्य अप्रतीतस्य प्रतीतये ज्ञानान्तरानुसरणेन अनवस्थाप्रसङ्गाच्च न कथंचिदपि अर्थस्य प्रतीतिरिति । तेन यदुक्तम् "अन्यानुभूते" इत्यादि, तदसंगतम्, अर्थस्यानुभवाभावात् ॥ 10

सर्वश्चायं दृष्टादिव्यवहारो लोके न स्यादित्याह यथा दृष्टमित्यादि । यदुच्यते दृष्टादिव्यवहारो न स्यादिति, स किं परमार्थतो न स्यात्, संवृत्या वा ? तत्र यदि पर-मार्थतो न स्यादित्युच्यते, तदा प्रियमिदमस्माकम् । न हि सांवृतस्य परमार्थचिन्तायामव-तारोऽस्ति । अथ लोकप्रसिद्धिः, तदा—

यथा दृष्टं श्रुतं ज्ञातं नैवेह प्रतिषिध्यते । 15

इति । यथा दृष्टमिति चक्षुरादिविज्ञानेन प्रत्यक्षेण प्रतिपन्नम् । श्रुतमिति परपुद्गला- P 405 दागमाच्च । ज्ञातमिति त्रिरूपलिङ्गजादनुमानान्निश्चितम् । तदेतदिह सर्वं व्यवहारमाश्रित्य नैव प्रतिषिध्यते, नैव वार्यते । यद् यथा लोकतः प्रतीयते, तत् तथैव अविचारितस्वरूप-मभ्युपगम्यते लोकप्रसिद्धितः, न तु पुनः परमार्थतः । तेन ज्ञानसंवेदनाभावादर्थानधिगमा-दयोऽपि दोषाः परमार्थपक्षवादिन इह नावतरन्ति । यदि तत् तथैवाभ्युपगम्यते, किं नाम 20 तर्हि प्रतिषिध्यते इत्याह सत्यत इत्यादि—

सत्यतः कल्पना त्वत्र दुःखहेतुर्निवार्यते ॥ २६ ॥

सत्यतः परमार्थतः । कल्पना आरोपः । तुशब्दः पुनरर्थे । सा पुनरत्र विचारे सिद्धान्ते वा । निवार्यते प्रतिषिध्यते । कुतः ? दुःखहेतुरिति । हेतुपदमेतत् । दुःखस्य हेतुः कारणं यस्मात्, तस्मादित्यर्थः । उपादानस्कन्धानां सदसदादिकल्पनाहितप्रवृत्ति- 25 हेतुत एव च संसारः । संसारश्च दुःखस्वभावः ।

दुःखं समुदयो लोको दृष्टिस्थानं भवश्च ते । P 406

[ अभि. कोश—१.८ ]

इति वचनात् । इति सत्यतः कल्पना दुःखहेतुर्भवति । तस्मादसत्समारोपकल्पना-भिनिवेशप्रतिषेधमात्रमत्राभिप्रेतम्, न तु वास्तवं किंचित् प्रतिषिध्यते इति । तदेवं स्वसं- 30 वेदनं ज्ञानस्य न कथंचिदचिदपि युज्यते । तदुक्तम्—

---

१ संसारः is added in second hand in Mss., but T supports it.
बोधि. २५

न बोध्यबोधकाकारं चित्तं दृष्टं तथागतैः।
यत्र बोद्धा च बोध्यं च तत्र बोधिर्न विद्यते ॥ इति।

यत्तु क्वचिद् भगवता चित्तमात्रतास्तित्वमुक्तम्, तत् स्कन्धायतनादिवन्नेयार्थतयेति कथयिष्यते ॥

5 इदानीं प्रासङ्गिकं परिसमाप्य प्रकृते योजयन्नाह चित्तादन्येत्यादि—

चित्तादन्या न माया चेन्नाप्यनन्येति कल्प्यते।
वस्तु चेत्सा कथं नान्यानन्या चेन्नास्ति वस्तुतः ॥ २७ ॥

तर्हि चित्तादन्या माया स्यात्, अनन्या वा स्यात्, उभयस्वभावा वा, अनुभयस्वभावा वा, इति चत्वारो विकल्पाः। तत्र न तावत् प्रथमपक्षः, चित्तादन्याभ्युपगमेऽपि 10 चित्तमात्रं जगदिच्छतः सिद्धान्तविरोधः स्यात्। द्वितीयपक्षे तु "यदा मायैव ते नास्ति" [९. ६] इत्यादिना प्रतिपादित एव दोषः। तृतीयस्तु प्रकारो न संगच्छते, परस्परविरुद्धयोरेकत्राभावात्। अथ चतुर्थी कल्पना, सापि न संगच्छते। तामुपादायोच्यते— P 407 चित्तादन्या न माया इत्यन्यत्वप्रतिषेधः। अनन्या तर्हि, नाप्यनन्येति तत्त्वस्यापि प्रतिषेधः, इति उभयपक्षपातश्चेद्यदि कल्प्यते व्यवस्थाप्यते, सोऽपि न युक्तः, अन्योन्यपरिहारवतोरेक-15 प्रतिषेधस्य अपरविधिनान्तरीयकत्वात् तयोरेकत्राभावात् चतुर्थी कल्पना सापि न संघटते ॥ अपि च। वस्तु चेदिति। यदि सा माया वस्तुसती कथं नान्या चित्ताद्व्यतिरिक्ता न भवति ? अथ अनन्या चेत्, यदि चित्तमेव माया, तदा नास्ति वस्तुतः, न विद्यते परमार्थतः, तस्यास्तत्स्वभावत्वात् चित्तमेव केवलम् इत्येतत् तदेवायातम्। यदुक्तम्—

यदा मायैव ते नास्ति तदा किमुपलभ्यते। इति ॥

20 अधुना प्रकृतं प्रसाध्य उपसंहरन्नाह असत्यपीत्यादि—

असत्यपि यथा माया दृश्या द्रष्टृ तथा मनः।

असती उपलभ्यमाना माया हस्त्यादिवद्वस्तुतोऽसत्स्वभावा। तादृश्यपि दृश्या P 408 दर्शनविषया यथा माया, द्रष्टृ तथा मनः। सैव असती माया दृश्या दृष्टान्तः, तथा मनः परमार्थतोऽसत्स्वभावमपि दर्शनसमर्थं भविष्यति। तेन "यदा न भ्रान्तिरप्यस्ति" 25 [९. १५] इत्यादि यदुक्तं परेण तत् प्रसाध्य उपसंहारेण दर्शितम्। पुनरपि प्रकारान्तरेण परमार्थसद्विज्ञानसाधनाय परोपक्रममभिसंधाय आह वस्त्वाश्रयश्चेत्यादि—

वस्त्वाश्रयश्चेत्संसारः सोऽन्यथाकाशवद्भवेत् ॥ २८ ॥

तथाहि—संक्लेशो व्यवदानं च हेयोपादेयतया द्वयमिदं यथावत् प्रतिपत्तव्यम्। तत्र रागादिमलावृतं चित्तं संक्लिष्टमित्युच्यते। ते च अभूतसमारोपबलोत्पन्नत्वादागन्तुकाश्चित्ता-30 श्रिताः प्रवर्तन्ते। तत्प्रभूतकर्मजन्मपरंपरोपनिबन्धः संसारः प्रजायते। तदेव चित्तं परमार्थतः प्रकृतिप्रभास्वरमनागन्तुकमभूतपरिकल्पसमुत्थग्राह्यग्राहकादिद्वयसमारोपाभिनिवेशवासनाशून्यमद्वयस्वभावमागन्तुकदोषविनिर्मुक्तमाश्रयपरावृत्तेर्व्यवदानमित्युच्यते। तदेवं

संक्लेशव्यवदानयोर्वस्तुसमुद्भूतचित्तमन्तरेण व्यवस्थापनं न घटते इति मन्यन्ते, संसार-निर्वाणयोश्चित्तधर्मत्वात् । चित्तमेव संक्लिश्यते, चित्तमेव व्यवदायते इति वचनात् । तदेव परमतं निरूपयति—वस्त्वेव वस्तुसद्भूतचित्तमेव आश्रयः अस्येति वस्त्वाश्रयः । चेत् यदि संसारो व्यवस्थाप्यते, तदा संसारोऽन्यथा भवेत्, चित्तादन्यः स्यात्, वस्तुनोऽन्यत्वे P 409 अवस्तु स्यात्, चित्तस्यैव च वस्तुत्वात् । कथमिव ? आकाशवत् गगनमिव । य एष 5 चित्ताश्रयः संसारोऽभिधीयते, स किं वस्तु अवस्तु वा ? वस्त्वपि चित्तं तदन्यद्वा ? तत्र यदि वस्तु चित्तमेव, तदा न चित्तादन्यः संसारस्तदाश्रयः, चित्तमेव सः । चित्तं च प्रकृतिप्रभास्वरतया व्यवदानस्वभावत्वान्न प्रहेयम् । अथ चित्तादन्यः, तदा चित्तव्यति-रिक्तस्य अन्यस्याभ्युपगमात् सिद्धान्तक्षतिः । अथ अवस्तु, तदा संसारो नाम न किंचिदस्ति, खरविषाणवत् । अत एवाह आकाशवत् इति । यथा आकाशं प्रज्ञप्तिसन्मात्रमसत्, न 10 क्वचिदर्थक्रियायां समर्थम्, तथा संसारो भवतः स्यात् । अथवा । आकाशवदिति निःस्व-भावत्वादस्मत्सिद्धान्तानुप्रवेशः ॥

स्यादेतत्—यदि नाम अवस्तु, तथापि वस्तुसद्भूतचित्तसमाश्रितत्वात् तस्य अर्थक्रिया-सामर्थ्यं भविष्यतीत्याह वस्त्वाश्रयेणेत्यादि—

**वस्त्वाश्रयेणाभावस्य क्रियावत्त्वं कथं भवेत् ।** 15

न असद्रूपस्य कश्चिदाश्रयो भवितुमर्हति, आश्रयाश्रयिभावस्य कार्यकारणरूपत्वात् । न च अभावः कस्यचित् कार्यम्, अनिर्वर्त्यविशेषत्वात् । भवतु नाम, तथापि वस्त्वाश्रयेण वस्तुसद्भूतचित्तसमाश्रयेण अभावस्य असदात्मकस्य क्रियावत्त्वम्, अर्थक्रियाकारित्वं कथं भवेत् ? न कदाचिदपि युज्यते इत्यर्थः । अन्यथा तस्य भावस्वभावता स्यात् । शक्तिर्हि P 410 भावलक्षणम् । सर्वशक्तिविरहोऽभावलक्षणमिति वचनात् । किमिदानीमिति विचार्यमाणमुप- 20 स्थितं भवत इत्याह असत्सहायमित्यादि—

**असत्सहायमेकं हि चित्तमापद्यते तव ॥ २९ ॥**

असन्नेव अभावः सहायोऽस्येति असत्सहायम् । हिरवधारणे । एकमद्वितीयमेव चित्तमापद्यते तव चित्तैकपरमार्थवादिनः ॥

ननु उक्तमेव—ग्राह्यग्राहकाद्याकारविनिर्मुक्तमद्वयलक्षणं चित्तम्, इति चित्तैकता- 25 प्रतिपादने न किंचिदनिष्टमस्माकम् । तदयुक्तम् । संक्लेशस्यापि प्रहेयतया वस्तुत्वमुक्तम् । तत् कथं चित्तमेवैकं वस्तु ? अस्तु नाम, तथापि न बाधकान्मुक्तिरित्याह ग्राह्यमुक्तमित्यादि—

**ग्राह्यमुक्तं यदा चित्तं तदा सर्वे तथागताः ।**

ग्राह्यमित्युपलक्षणम् । ग्राहकादिमुक्तमपि वेदितव्यम् । अथवा ग्राह्याधीनं ग्राहकत्व-मिति तदभावाद् ग्राहकाभावः । ग्राहकाभावे च तदुपकल्पितस्य अभिलाप्यस्याभावात् 30 अभिलापस्याभाव इत्युपदर्शयितुं ग्राह्यमुक्तमित्युक्तम् । ग्राह्याद्याकारविविक्तमद्वयस्वभावं यदा P 411 सर्वस्य जगतश्चित्तम्, तदा तस्य चित्तस्य सर्वसत्त्वसंतानान्तर्गतत्वात् सर्वसंसारिणः सत्त्वाः

तथागता बुद्धा भगवन्तः प्राप्नुवन्ति । न कश्चित् पृथग्जनः स्यात् । ततश्च संक्लेशप्रहाणार्थमार्गभावनावैयर्थ्यप्रसङ्गः । न चैवम् । तस्मात् सत्यपि ग्राह्यग्राहकवैधुर्ये भावाभिनिवेशस्य तदवस्थत्वान्न सर्वथा संक्लेशप्रहाणमित्यभिसंधायाह एवं चेत्यादि—

**एवं च को गुणो लब्धश्चित्तमात्रेऽपि कल्पिते ॥ ३० ॥**

5 एवं चेति निपातसमुदायः एवं सतीत्यस्मिन्नर्थे । अप्यर्थे चकारः । एवमपि स्वीकृते को गुणो लब्धः? नैव कश्चित् । चित्तमात्रेऽपि विज्ञप्तिमात्रतायामपि कल्पितायां कल्पनया समारोपिते, अद्वयतत्त्वपरिज्ञानान्वयेऽपि सर्वसत्त्वसंताने रागादीनां पर्यवस्थानात् ॥

ननु एतत्समानं निःस्वभाववादिनो भवतोऽपीति समानदूषणतामापादयन्नाह मायोपमत्वेऽपीत्यादि—

10 **मायोपमत्वेऽपि ज्ञाते कथं क्लेशो निवर्तते ।**

मायोपमत्वे मायास्वभावत्वेऽपि जगतो ज्ञाते कथं क्लेशो निवर्तते, कथं रागादिगणः प्रहीयते इति पृच्छति । किमत्र प्रहाणानुपपत्तिकारणं यत् पृच्छसीत्याह यदा मायेत्यादि—

P 412 **यदा मायास्त्रियां रागस्तत्कर्तुरपि जायते ॥ ३१ ॥**

इदमत्र प्रहाणानुपपत्तिबीजं दृश्यते—यदा मायास्त्रियां मायाकारविनिर्मितायामबलायां 15 रागः संरक्तचित्तता जायते उत्पद्यते । कस्य जायते? तत्कर्तुरपि । न केवलं यद्व्यामोहनाय सा विनिर्मिता, तेषामेव जायते, किं तु तस्या मायास्त्रियाः कर्तुः निर्मातुरपि जायते इति अपिशब्दार्थः । यदा हि परचित्तविभ्रमसंपादनार्थं मन्त्रौषधिसामर्थ्यविनिर्मितां सर्वाङ्गप्रत्यङ्गावयवलक्षणपरिपूर्णामभिनवयौवनशोभासंपत्समापन्नां प्रसन्नमनोहरवर्णां लावण्यातिशयशालिनीम् अतीव तदाकारनिर्माणप्रवीणः कश्चिन्मायाकारो जनपदकल्याणीं स्त्रियमुपदर्शयति, 20 तदा न तावत् तदन्ये तामभिसमीक्ष्य मन्मथशरप्रहारान्तरव्यथितचेतसो जायन्ते, अपि तु योऽपि स तस्याः कमनीयकान्तिसंपदः कामकलाकौशलोत्कण्ठितमूर्तेरभिनिर्माता, मया स्वयमेव चैषा विरचितेति तत्स्वभावविचक्षणः, सोऽपि कामकलया परमदशामासादयन् न कथंचिदपि चेतः संधारयितुमलम्, तत् कथं मायोपमत्वेऽपि निश्चिते संसारसंततिच्छेदः स्यात्?

25 एतत् परिजिहीर्षन्नाह अप्रहीणा हि तदित्यादि—

**अप्रहीणा हि तत्कर्तुर्ज्ञेयसंक्लेशवासना ।**
**तद्दृष्टिकाले तस्यातो दुर्बला शून्यवासना ॥ ३२ ॥**

हिर्यस्मादर्थे । नैतद्दूषणमस्माकमासज्जते । यस्मादप्रहीणा अनिवृत्ता । तत्कर्तुः P 413 मायास्त्रीनिर्मातुः । किमप्रहीणा? ज्ञेयसंक्लेशवासना ज्ञेयसंक्लेशः सस्वभावतासमारोपादासङ्गादिः, 30 वस्तुतासमारोपो वा । ज्ञेयावरणं यावत् । तस्य वासना अनादिसंसारजन्मपरंपराभ्यस्तमिथ्याविकल्पजनिततद्बीजभूतचित्तसंततिसंस्काराधानम्, तस्या अप्रहीणत्वात् । ननु एतत्

समानं विज्ञानवादिनोऽपि प्रतिविधानम् । तस्यापि अद्वयतत्त्वस्य सत्त्वेऽपि आगन्तुकसंक्लेश-वासनाया अप्रहीणत्वात् न सर्वे तथागता भवन्ति । नैतत् समानम् । यस्माद्भावात्मानो मलाः कार्यकलाविकला नावरणं भवितुमर्हन्ति, इत्युक्तमेव । अस्माकं तु निःस्वभावमेव जन्यं जनकं चेति न समानम् । सा यस्मादप्रहीणा, अतोऽस्मात् कारणात् । तद्दृष्टिकाले, तस्या ज्ञेयसस्वभावताया दृष्टिः उपलब्धिः, तस्याः काले । तस्या वा मायास्त्रिया दृष्टिकाले 5 उपलम्भकाले । तस्येति अप्रहीणसंक्लेशवासनस्य द्रष्टुः । दुर्बला शून्यवासनेति शून्यस्य शून्यतत्त्वस्य शून्यताया वेति विग्रहः । छन्दोनुरोधाद् भावप्रत्ययस्य लोपं कृत्वा शून्येति निर्देशः । वासना संस्काराधानम्, सा दुर्बला सामर्थ्यविकला, आरोपितस्य दर्शनात् । अतस्तदा भाववासना बलवती ॥

कथं तर्हि सा निवर्तते इत्याह शून्यतेत्यादि— 10

**शून्यतावासनाधानाद्धीयते भाववासना ।** P 414

शून्यताया मायास्वभावनिःस्वभावताया वासना तस्या आधानम् आवेधः । अभ्यासेन दृढीकरणमिति यावत् । तस्माद्विरुद्धप्रत्ययात् हीयते निवर्तते । वह्निसंनिधानाच्छीतस्पर्श-वत् । किम्? भाववासना अनवराग्रसंसाराभ्यस्तवस्तुसद्ग्राहाध्यवसानवासना । तस्या भूतार्थत्वात्, वस्तुनिजस्वभावत्वाच्च । इतरस्या अलीकत्वात् आगन्तुकत्वाच्च । ननु भावा- 15 भिनिवेशो वा शून्यताभिनिवेशो वा इति नाभिनिवेशं प्रति कश्चिद्विशेषः, तस्यापि कल्पना-स्वभावानतिक्रमात् । यदाह—

शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं बुधैः ।
येषां तु शून्यता दृष्टिस्तानसाध्यान् बभाषिरे ॥ इति ।

[ म० शा०–१३.८ ] 20

एतत् परिहर्तुमाह किंचिन्नास्तीत्यादि—

**किंचिन्नास्तीति चाभ्यासात्सापि पश्चात्प्रहीयते ॥ ३३ ॥**

किंचिदिति भावो वा शून्यता वा । नास्ति न विद्यते । चशब्दः पूर्वापेक्षया समुच्चये । इत्येवं चाभ्यासात् भाववासनाप्रहाणस्य पश्चात् सापि शून्यवासनापि प्रहीयते निवर्तते । अयमभिप्रायः—शून्यतावेधो हि भावाभिनिवेशस्य प्रतिपक्षत्वात् प्रहाणोपायभूतः । 25 अधिगते च उपेये पश्चात् कोलोपमत्वात् उपायस्यापि प्रहाणमनुष्ठीयते । एतदेवाह— P 415

सर्वसंकल्पहानाय शून्यतामृतदेशना ।
यश्च ( यस्य ) तस्यामपि ग्राहस्त्वयासाववसादितः ॥ इति ॥

[ चतुः–२.२१ ]

स्यादेतत्—यदि नाम किंचिन्नास्तीति मनसिकाराभ्यासाद् भवति शून्यतावासनायाः प्रहाणम्, तथापि तदभ्यासात् पुनरभावकल्पना प्रवर्तमाना निवर्तयितुमशक्या । ततश्च 30 गण्डप्रवेशेऽक्षितारानिर्गमो जात इति तदवस्थं तव दौष्ठ्यम्, इत्यत्राह यदा न लभ्यते इत्यादि—

यदा न लभ्यते भावो यो नास्तीति प्रकल्प्यते।
तदा निराश्रयोऽभावः कथं तिष्ठेन्मतेः पुरः ॥ ३४ ॥

इयमपि [अभावकल्पना] विचारेण नावतिष्ठते इति। यो भावो नास्तीति प्रकल्प्यते, यस्य भावस्य प्रतिषेधः क्रियते, स यदि विचार्यमाणो निःस्वभावतया न लभ्यते न प्राप्यते
5 तैमिरिकोपलब्धकेशस्तबकवत्। तदा निराश्रय इति। यस्यासौ परिकल्पितो भावः, तस्य
P 416 संबन्धिनोऽभावात् निरालम्बः अभावः कल्पनाविदर्शितमूर्तिः कथं तिष्ठेन्मतेः पुरः, कथमसौ विचारेण बुद्धेरग्रतः प्रतिभासेत? स्वयमेव भावनिःस्वभावतायां निवर्तते ॥

अथवा अन्यथावतार्यते—भवतु नाम शून्यताबलाधानाद् भाववासनाविनिवृत्तिः। तत्प्रतिषेधाभावादभावाभिनिवेशस्तु केन वार्यते इत्यत आह—यदा न लभ्यते इत्यादि।
10 अन्यत् सर्वं पूर्ववत् ॥

अयमत्र समुदायार्थः—सर्वधर्मशून्यता हि भावाभिनिवेशप्रहाणाय उपादीयते। सापि शून्यता शून्यताभिमुखीकरणात् पश्चात् प्रहीयते। यापि च कथंचिद् भावकल्पना जायते, सापि समनन्तरविचारेण निवर्तते। अत एव एतत्समस्तकल्पनाजालविनिवर्तनाय भगवत्यां प्रज्ञापारमितायां विस्तरेण अध्यात्मशून्यतादयोऽष्टादश शून्यताः प्रोक्ताः। न च
15 शून्यता भावाद् व्यतिरिक्ता, भावस्यैव तत्स्वभावत्वात्। अन्यथा शून्यताया भावाद् व्यतिरेके धर्माणां निःस्वभावता न स्यात्। निःस्वभावता तत्स्वभाव इति प्रसाधितं प्राक्। एतदपि प्रज्ञापारमितायामुक्तम्—

पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैरेवं प्रत्यवेक्षते—न रूपशून्यतया रूपं शून्यम्, रूपमेव शून्यम्, शून्यतैव
P 417 20 रूपम्। न वेदनाशून्यतया वेदना शून्या, वेदनैव शून्या, शून्यतैव वेदना। न संज्ञाशून्यतया संज्ञा शून्या, संज्ञैव शून्या, शून्यतैव संज्ञा। न संस्कारशून्यतया संस्काराः शून्याः, संस्कारा एव शून्याः, शून्यतैव संस्काराः। न विज्ञानशून्यतया विज्ञानं शून्यम्, विज्ञानमेव शून्यम्, शून्यतैव विज्ञानम् ॥ इति विस्तरः। उक्तं च—

यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता।
25 भावः स्वतन्त्रो नास्तीति सिंहनादस्तवातुलः ॥ इति।
[चतुः—२·२०]

इति न शून्यता धर्माद् व्यतिरिक्ता। तस्माच्छून्यतायामपि नाभिनिवेशः कर्तव्यः इति ॥

एवं सर्वविकल्पप्रत्यस्तमयात् समस्तावरणनिर्मुक्तिरुपजायते इत्युपदर्शयन्नाह यदा न
30 भाव इत्यादि—

यदा[1] न भावो नाभावो मतेः संतिष्ठते पुरः ।
तदान्यगत्यभावेन निरालम्बा प्रशाम्यति ॥ ३५ ॥

यदा न भावः परमार्थसत्स्वभावो मतेर्बुद्धेः संतिष्ठते पुरोऽग्रतः, न अभावः, नापि भावविरहितलक्षणोऽभावः यदा मतेः संतिष्ठते पुरः, तदा अन्यगत्यभावेन विधिप्रतिषेधाभ्यां गत्यन्तराभावात्, उभयानुभयपक्षयोरेतद्द्वयविधिप्रतिषेधात्मकत्वात्, आभ्यामव्यतिरिक्ततया 5 P 418 अनयोः संग्रहे तावपि संगृहीताविति निराश्रया, सदसतोरालम्बनयोरयोगात् बुद्धिः प्रशाम्यति उपशाम्यति । सर्वविकल्पोपशमान्निरिन्धनवह्निवत् निर्वृतिमुपयातीत्यर्थः ॥

कथं तर्हि सकलकल्पनाविरहादनेककल्पासंख्येयाभिलषितं परार्थसंपदुपायभूतं बुद्धत्वमधिगम्य परार्थमभिसंपादयति भगवानित्यत्राह चिन्तामणिरिति—

चिन्तामणिः कल्पतरुर्यथेच्छापरिपूरणः । 10
विनेयप्रणिधानाभ्यां जिनबिम्बं तथेक्ष्यते ॥ ३६ ॥

चिन्तामणिरिति चिन्तितफलदाता रत्नविशेषः । कल्पतरुरिति कल्पितफलदाता वृक्षविशेषः । स यथा विकल्पमन्तरेणापि लोकानां यथाभव्यमिच्छायाः परिपूरणः अभिलाषस्य संपादकः । जिनबिम्बं तथेक्ष्यते इति संबन्धः । चतुर्मारजयाज्जिनो भगवान्, पापकधर्मजयाद्वा । जिनस्य बुद्धस्य भगवतः बिम्बं द्वात्रिंशता महापुरुषलक्षणैर्विराजितं 15 शरीरम् । तथा तेन प्रकारेण ईक्ष्यते सर्वकल्पनाभावेऽपि परहितसुखसंपादनसमर्थं प्रतीयते । P 419 कथं पुनरेतदिष्टमात्रेण भविष्यतीत्याह—विनेयप्रणिधानाभ्यामिति । विनेयवशात् ये बुद्धस्य भगवतो विनेयाः, तदुपाधिफलविशेषप्रतिलम्भहेतुकुशलकर्मपरिपाकात्, तद्वशात् । प्रणिधानवशाच्च, यत्पूर्वं बोधिसत्त्वावस्थायामनेकप्रकारं भगवता सत्त्वार्थसंपादनं प्रणिहितं तस्याक्षेपवशात्, कुलालचक्रभ्रमणाक्षेपन्यायेन अनाभोगेन प्रवर्तनात् सर्वसत्त्वहितसुख- 20 संपादनमुपपद्यते । यदुक्तम्[2]—

यस्यां रात्रौ तथागतोऽभिसंबुद्धो यस्यां च परिनिर्वृतः, अत्रान्तरे तथागतेन एकमप्यक्षरं नोदाहृतम् । तत् कस्य हेतोः ? नित्यं समाहितो भगवान् । ये च अक्षरस्वररुतवैनेयाः सत्त्वाः, ते तथागतमुखादूर्णाकोशादुष्णीषात् ध्वनिं निश्चरन्तं शृण्वन्तीत्यादि ।

उक्तं च— 25

तस्मिन् ध्यानसमापन्ने चिन्तारत्नवदास्थिते ।
निश्चरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥
ताभिर्जिज्ञासितानर्थान् सर्वान् जानन्ति मानवाः ।
हितानि च यथाभव्यं क्षिप्रमासादयन्ति ते ॥ इति ।

[ तत्त्वसंग्रह ३२४१–४२ ] 30

१ According to Tāranātha and Vibhūticandra's commentary, Śāntideva, when coming to this stanza, disappeared from the eyes of his auditors. २ From आर्यतथागतगुह्यसूत्र as quoted in MV.

P 420 चतुःस्तवेऽप्युक्तम्—

नोदाहृतं त्वया किंचिदेकमप्यक्षरं विभो।
कृत्स्नश्च वैनेयजनो धर्मवर्षेण तर्पितः ॥ इति ॥

[ चतुः–१·७ ]

5 एवमसाधारणं कारणमाख्याय पुनरन्यथा हेत्ववस्थाया एव स तादृशः प्रभावातिशयविशेषो यदनाभोगेन परार्थसंपादनसमर्थफलमुपजायते इति वृत्तद्वयेनोपदर्शयन्नाह यथा गारुडिक इत्यादि—

**यथा गारुडिकः स्तम्भं साधयित्वा विनश्यति।**
**स तस्मिंश्चिरनष्टेऽपि विषादीनुपशामयेत् ॥ ३७ ॥**

10 यथा गारुडिको विषतत्त्ववित् लब्धमन्त्रसामर्थ्यः स्तम्भं काष्ठमयं वा अन्यद्वा साधयित्वा मन्त्रेणाभिसंस्कृत्य ममाभावादयमेव सर्वविषापहारचतुरो भविष्यतीति विनश्यति, स्वयमुपरतव्यापारो भवति। स स्तम्भः तेनाभिमन्त्रितः तस्मिन् गारुडिके चिरनष्टेऽपि प्रभूतकालमुपरतेऽपि विषादीनुपशामयेत्, आदिशब्दात् ग्रहादिविकारमपहरेत्। छान्दससमयं परिपालयता मितोऽपि उपधाया णिचि ह्रस्वो न कृतः। संज्ञापूर्वकस्य विधेरनित्यत्वाद्वा ॥

15 एवं दृष्टान्तमुपपाद्य दार्ष्टान्तिके योजयन्नाह बोधिचर्येति—

P 421 **बोधिचर्यानुरूप्येण जिनस्तम्भोऽपि साधितः।**
**करोति सर्वकार्याणि बोधिसत्त्वेऽपि निर्वृते ॥ ३८ ॥**

यथाशब्दस्तथेत्याकर्षयति। तथा बोधौ बोधिनिमित्तं बुद्धत्वार्थं चर्या [ बोधिचर्या ]। बोधिसत्त्वेऽपि निर्वृते इति, बोधिः बुद्धत्वम्, एकानेकस्वभावविविक्तमनुत्पन्नानिरुद्धमनुच्छेद-20 मशाश्वतं सर्वप्रपञ्चविनिर्मुक्तमाकाशप्रतिसमं धर्मकायाख्यं परमार्थतत्त्वमुच्यते। एतदेव च प्रज्ञापारमिताशून्यतातथताभूतकोटिधर्मधात्वादिशब्देन संवृतिमुपादाय अभिधीयते। इदमेव च अभिसंधायोक्तम्—

धर्मतो बुद्धा द्रष्टव्या धर्मकाया हि नायकाः।
धर्मता चाप्यविज्ञेया न सा शक्या विजानितुम् ॥ इति।

25 [ वज्रच्छेदिका–२६ ]

उक्तं च—

अलक्षणमनुत्पादमसंस्कृतमवाङ्मयम्।
आकाशं बोधिचित्तं च बोधिरद्वयलक्षणा ॥ इति।

तत्र [ बोधिः ] सत्त्वमभिप्रायोऽस्येति बोधिसत्त्वः। तस्मिन्निर्वृतेऽपि। अपिशब्दो 30 भिन्नक्रमः। अप्रतिष्ठितनिर्वाणत्वेन परमां शान्तिं गतेऽपि। हेत्ववस्थानिवृत्तौ फलावस्थाप्राप्तौ चेत्यर्थः। इति उभयथापि सर्वथा कल्पनाविरहेऽपि सत्त्वार्थसंपादनमविकलमुपदर्शितं भवति ॥

स्यादेतत्—यदि भगवाननुपरतसकलविकल्पालम्बनतया निवृत्तसर्वचित्तचैत्तव्यापारः, कथं तर्हि तथागतपूजा महाफला वर्ण्यते इत्याशङ्कयन्नाह अचित्तके इत्यादि— P 422

**अचित्तके कृता पूजा कथं फलवती भवेत् ।**

संवृतिचित्तविविक्ते भगवति कृता उपहृता पूजा काराविशेषः कथं फलवती भवेत्, सफला स्यात् ? तत्र असत्युपभोक्तरि दायकदानपतीनां कथं पुण्यं भवेत् ? अत्रोत्तरमाह 5 तुल्यैवेत्यादि—

**तुल्यैव पठ्यते यस्मात्तिष्ठतो निर्वृतस्य च ॥ ३९ ॥**

तुल्यैव समैव । पठ्यते आगमे प्रतिपाद्यते । यस्मात् तिष्ठतो निर्वृतस्य च तस्मात फलवती भवेदिति योजनीयम् । तिष्ठतोऽपरिनिर्वृतस्य । निर्वृतस्य निरुपधिनिर्वाणं गतस्य पूजाया नास्ति विशेषः । अयमभिप्रायः—द्विविधं हि पुण्यम्—त्यागान्वयं च, त्यागादेव 10 यदुत्पद्यते । परिभोगान्वयं च, देयधर्मपरिभोगाद् यदुत्पद्यते । तत्र यदि नाम निर्वृते भगवति प्रतिग्रहीतुरभावात् परिभोगान्वयं न भविष्यति पुण्यम्, परित्यागान्वयं च केन वार्यते ? अप्रतिगृह्णति कस्मिंश्चित् कथं परित्यागान्वयमपि पुण्यम् ? किं पुनः कारणं सति P 423 प्रतिग्रहीतरि भवितव्यं पुण्येन, नासति ? कस्यचिदप्यभावादिति चेत्, इदमकारणमेव । यदि हि पुण्यं परानुग्रहादेव स्यात्, मैत्र्याद्यप्रमाणसम्यग्दृष्टिभावनायां न स्यात् । तस्मात् 15 द्रष्टव्यं स्वचित्तप्रभवं परानुग्रहमन्तरेणापि पुण्यम् । तथा व्यतीतेऽपि गुणवति तद्भक्तिकृतं स्वचित्ताद्भवत् पुण्यं न विरुध्यते इति ॥

अपि च सर्वपुण्यपापसद्भावे सर्वेषामागमः साक्षीत्याह आगमाच्चेत्यादि—

**आगमाच्च फलं तत्र संवृत्या तत्त्वतोऽपि वा ।**

किमत्र उपपत्त्यन्तरेण ? आगमात् भगवत्प्रवचनात् फलं भगवत्पूजाकृतं महाभोगता- 20 दिलक्षणमवगम्यते । तत्रेति निर्वृतानिर्वृते भगवति पूजायाम् । एतावांस्तु विशेषः—कस्यचित् तत् फलं सांवृतम्, कस्यचित् पुनः पारमार्थिकमभिमतम् । एवमनन्तरविचारमनादृत्य विशेषेणोच्यते। संवृत्या तत्त्वतोऽपि वा पुण्यपापक्रियायाः फलं भगवदागमात् प्रतीयते, तत्र च आवयोरविवाद एव तत्र इदमुक्तं भगवता [1]पुष्पकूटधारण्याम्— P 424

ये केचित् सिंहविक्रीडित तथागतस्य पूजां करिष्यन्ति तिष्ठतो वा परिनिर्वृतस्य 25 वा, सर्वे ते त्रियानादेकतरेण यानेन परिनिर्वास्यन्ति । यश्च खलु सिंहविक्रीडित तथागत- मर्हन्तं सम्यक्संबुद्धं दृष्ट्वा चित्तं प्रसादयेत्, प्रसन्नचित्तः सत्कुर्यात् गुरुकुर्यात् मानयेत् पूजयेत् उपचरेत्, लाभेन चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सर्वसुखोप- धानैरुपतिष्ठेत् । यश्च परिनिर्वृतस्य तथागतस्य सर्षपफलमात्रधातौ शरीरपूजां कुर्यात्, समो विपाकः प्रतिकाङ्क्षितव्यः । तथा पूजायै नास्ति विशेषो नानाकरणं च । इति ॥ 30

---

१ Cf. ŚS. p. 96.

उक्तं च—

तिष्ठन्तं पूजयेद्यस्तु यश्चापि परिनिर्वृतम्।
समचित्तप्रसादेन नास्ति पुण्यविशेषता ॥ इति।

[ दिव्या. ]

5 पुनरिदमुक्तम्[1]—

यश्च खलु पुनः सिंहविक्रीडित तथागतं वर्षशतं वा वर्षसहस्रं वा सर्वसुखोपधानेनोपतिष्ठेत्, यश्च परिनिर्वृतस्य तथागतस्य चैत्ये बोधिचित्तपरिगृहीतैकपुष्पमारोपयेत्, तथागतपूजायै जलाञ्जलिं चोपनामयेत्, जलेन चोपसिञ्चेत्, ईषिकापदं वा दद्यात्, निर्माल्यं वा अपनयेत्, उपलेपनप्रदानं वा दीपप्रदानं वा कुर्यात्, आत्तमनाः, एकक्रमपदव्यतिहारं वा अतिक्रम्य वाचं भाषेत–नमस्तस्मै बुद्धाय भगवते इति, मा ते अत्र सिंहविक्रीडित काङ्क्षा वा विमतिर्वा विचिकित्सा वा, यदसौ कल्पं वा कल्पशतं वा कल्पसहस्रं वा दुर्गतिविनिपातं गच्छेत्, नेदं स्थानं विद्यते। इति।

एतदवश्यमभ्युपेयमिति [ आह ] सत्यबुद्धे इत्यादि—

**सत्यबुद्धे कृता पूजा सफलेति कथं यथा ॥ ४० ॥**

सत्यबुद्धे परमार्थसति भगवति कृता पूजा सफलेति फलवती, इत्येतदपि कथं यथेति। कथमिवेत्युदाहरणमुपदर्शयति। नान्यदत्रोदाहरणमागमादिति भावः। तस्मात् सर्वथा भगवत्पूजायां फलसद्भाव आगमादवगम्यते ॥

शून्यतावासनाधानादित्यादि यदुक्तम्, तत्र वैभाषिकादयः सर्वधर्मशून्यतायाः सर्वावरणप्रहाणमसहमानाः चतुरार्यसत्यदर्शनभावनां च तदुपायमिच्छन्तः प्राहुः सत्यदर्शनत इत्यादि—

20 **सत्यदर्शनतो मुक्तिः शून्यतादर्शनेन किम्।**

चतुर्णामार्यसत्यानां दुःखसमुदयनिरोधमार्गलक्षणानां दर्शनतः उपलब्धितः। साक्षात्करणादित्यर्थः। दर्शनत इत्युपलक्षणम्। भावनातोऽपि द्रष्टव्यम्। तदुक्तम्—

क्लेशप्रहाणमाख्यातं सत्यदर्शनभावनात्। इति।

[ अभि. को. ६. १ ]

25 तत्र वृत्तस्थस्य श्रुतचिन्तावतो भावनायां प्रवृत्तस्य अशुभानापानस्मृतिस्मृत्युपस्थानभावना निष्पत्तिक्रमेण अनित्यतो दुःखतः शून्यतोऽनात्मतश्च इत्येतैः षोडशभिराकारैः दुःखादिसत्यं पश्यतः उष्मगतादिचतुर्निर्वेधभागीयद्वारेण दुःखे धर्मज्ञानक्षान्त्यादिपञ्चदशक्षणलक्षणस्य दर्शनमार्गस्य, ततः परं भावनामार्गस्याधिगमात्, दर्शनभावनाहेयत्रैधातुकक्लेशोपक्लेशराशिप्रहाणात् क्षयानुत्पादज्ञानोत्पत्तिरित्यार्यसत्येषु संक्षेपतोऽभिसमयक्रमः। इत्थमार्यसत्यदर्शनतो मुक्तिरुच्यते। तस्मादत एव मुक्तिरस्तु, शून्यतादर्शनेन किम्, शून्यतायाः सर्व-

P 425 · 10 · 15 · P 426 · 30

[1] Cf. ŚS p. 96–97.

धर्मनिःस्वभावताया दर्शनेन अधिगमेन । साक्षात्करणेनेति यावत् । किम् ? न किंचित् प्रयोजनम् । तदपरस्य मुक्तेरुपायस्य विद्यमानत्वात् । अत्राह न विनेत्यादि—

**न विनानेन मार्गेण बोधिरित्यागमो यतः ॥ ४१ ॥**

न उपायान्तरमस्ति, तस्मादित्यर्थः । इदं महार्थस्य तत्त्वम् । तथा हि–सर्व एव हि भावा आरोपितमनारोपितं चेति रूपद्वयमुद्वहन्ति । तत्र यत् तदविद्याप्रवाहितमारोपितं रूपम्, तत् सर्वजनसाधारणमिति न तदुपलब्धेः संक्लेशप्रहाणमुपपद्यते । अन्यथा सर्वे बालजनास्तथागताः स्युरिति प्राचीनप्रसङ्गः । इति अनारोपितमेव तत्त्वमनुपलम्भयोगेन अधिगम्यमानमज्ञानास्रवक्षयाय सामर्थ्यवदुपलभ्यते । तच्च प्रज्ञया विवेच्यमानं सर्वधर्मानुपलम्भलक्षणमवसितमिति सर्वधर्मशून्यतैव सर्वावरणविभ्रमप्रहाणाय पटीयसीत्यवगम्यते । इति युक्तितो निरूपितं प्राक्, निरूपयिष्यते च पश्चात् । इह पुनरागमत एव एनमर्थमवग्राहयितुम्—

न विनानेन मार्गेण बोधिरित्यागमो यतः ।

इत्युक्तवान् । यदुक्तं प्रज्ञापारमितायाम्—

भगवानाह–इह सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् रूपं भाव इति न भावयति । वेदनां भाव इति न भावयति । संज्ञां भाव इति न भावयति । संस्कारान् भाव इति न भावयति । यावत् मार्गाकारज्ञतां भाव इति न भावयति । यावत् सर्वाकारज्ञतां भाव इति न भावयति । सर्ववासनानुसंधिक्लेशप्रहाणं भाव इति न भावयति । तत्कस्य हेतोः ? नास्ति भावसंज्ञिनः प्रज्ञापारमिताभावना । यावत् नास्ति भावसंज्ञिनो दानपारमिताभावना । नास्ति भावसंज्ञिनोऽभावशून्यताभावना । नास्ति भावसंज्ञिनः षडभिज्ञाभावना । यावत् नास्ति सर्वसमाधिसर्वधारणीमुखतथागतबलवैशारद्यप्रतिसंविन्महामैत्रीमहाकरुणावेणिकबुद्धधर्माणां भावना । तत्कस्य हेतोः ? तथा हि स भावः एषोऽहमिति द्वयोरन्तयोः सक्तः । दाने शीले क्षान्तौ वीर्ये ध्याने प्रज्ञायाम् । एषोऽहमिति द्वयोरन्तयोः सक्तः । यश्च द्वयोरन्तयोः सक्तः, तस्य नास्ति मोक्षः । तत्कस्य हेतोः ? नास्ति सुभूते भावसंज्ञिनो दानम्, यावत् नास्ति प्रज्ञा, नास्ति मार्गः, नास्ति ज्ञानम्, नास्ति प्राप्तिः, नास्ति अभिसमयः, नास्त्यानुलोमिकी क्षान्तिः, नास्ति रूपस्य परिज्ञा, नास्ति वेदनायाः परिज्ञा, यावत् नास्ति प्रतीत्यसमुत्पादस्य परिज्ञा । नास्ति आत्मसत्त्वजीवजन्तुपोषपुद्गलमनुजमानवकारकवेदकजानकपश्यकसंज्ञायाः परिज्ञा । यावत् नास्ति सर्ववासनानुसंधिक्लेशप्रहाणस्य परिज्ञा । कुतः पुनरस्य मोक्षो भविष्यतीति ॥

अत एव पुनस्तत्रैवोक्तम्—

भगवानाह–एवमेतत् कौशिक, एवमेतत् । येऽपि तेऽभूवन्नतीतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धाः, तेऽपि इमामेव प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभि-

संबुद्धाः। येऽपि ते भविष्यन्ति अनागतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धाः, तेऽपि इमामेव प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते। येऽपि ते एतर्हि दशदिग्लोकधातुषु अप्रमेयासंख्येयेषु तथागता अर्हन्तः सम्यक्संबुद्धास्तिष्ठन्ति, ध्रियन्ते यापयन्ति धर्मं देशयन्ति, तेऽपि इमामेव प्रज्ञापारमितामागम्य अनुत्तरां सम्यक्संबोधिमभि-
5 संबुद्धाः। येऽपि तेऽभूवन्नतीतानां तथागतानामर्हतां सम्यक्संबुद्धानां श्रावकाः, येऽपि ते भविष्यन्ति अनागतानां तथागतानामर्हतां सम्यक्संबुद्धानां श्रावकाः, येऽपि ते एतर्हि प्रत्युत्पन्नानां तथागतानामर्हतां सम्यक्संबुद्धानां श्रावकाः, तेऽपि इमामेव प्रज्ञापारमितामागम्य प्रत्येकबोधिं प्राप्ताः, प्राप्स्यन्ति प्राप्नुवन्ति च। तत्कस्य हेतोः? अत्र प्रज्ञापारमितायां सर्वाणि त्रीणि यानानि विस्तरेणोपदिष्टानि। तानि पुनरनिमित्तयोगेन अनुपलम्भयोगेन
10 अनुत्पादयोगेन असंक्लेशयोगेन अव्यवदानयोगेन, यावत् तत्पुनः लोकव्यवहारेण अपरमार्थ-योगेन। इति विस्तरः॥

P 430 उक्तं च—

बुद्धैः प्रत्येकबुद्धैश्च श्रावकैश्च निषेविता।
मार्गस्त्वमेका मोक्षस्य नास्त्यन्य इति निश्चयः॥ इति॥

15 [प्रज्ञापारमितास्तुतिः]

एतन्महायानवचनमसहमान आह नन्वसिद्धमित्यादि—

**नन्वसिद्धं महायानं**

ननु भोः शून्यतावादिन्, महायानमागमत्वेन मम असिद्धम्, असंमतम्, तदस्योपन्यासो न साधनतया साधुः। अत्र परस्य समानपरिहारदूषणमाह कथमित्यादिना—

20 **कथं सिद्धस्त्वदागमः।**

यदि महायानमसिद्धम्, कथं केन प्रकारेण त्वदीयागमो भगवद्वचनमिति सिद्धः? तत्र न किंचिदागमत्वप्रसाधकं प्रमाणमुत्पश्यामः। परः परिहारमाह यस्मादिति—

**यस्मादुभयसिद्धोऽसौ**

यस्मात् कारणात् उभयस्य तव मम च सिद्धः आगमत्वेन निश्चितोऽसौ ममागमः।
25 न हि मदागमे भवतोऽपि महायानानुयायिनो बुद्धवचनत्वेन विप्रतिपत्तिरस्ति, तस्मात् सिद्धोऽसौ। न तु महायाने मम संप्रतिपत्तिः, येन इदमेवोत्तरं भवतोऽपि स्यात्। सिद्धान्तवादी आह—

P 431 **न सिद्धोऽसौ तवादितः॥ ४२॥**

इति। यद्यपि उभयसिद्धत्वं त्वदागमस्य आगमसिद्धौ हेतुः, तदापि नैतद्वक्तव्यम्,
30 असिद्धत्वात्। यस्मात् तवैव तावदसौ त्वदागमः न सिद्धः। कदा? आदौ तत्स्वीकारात् पूर्वम्। न हि अभ्युपगमात् प्राक् तव कथंचिदप्यसौ सिद्धः, इति उभयसिद्धत्व-मसिद्धत्वादसाधनम्॥

यद्यपि उभयसिद्धत्वमसिद्धम्, इदं तर्हि साधनमस्तु—यद् गुरुशिष्यपरंपरया आम्नायायातं बुद्धवचनत्वेन, यच्च सूत्रेऽवतरति, विनये संदृश्यते, धर्मतां [ प्रतीत्यसमुत्पादं ] च न विलोमयति, तद् बुद्धवचनं नान्यत्। इत्यत्राह यत्प्रत्ययेत्यादि—

यत्प्रत्यया च तत्रास्था महायानेऽपि तां कुरु।

यः प्रत्ययो निबन्धनम् अस्या आस्थायाः, सा तथोक्ता। यत्प्रत्यया यन्निबन्धना। 5
आस्था आदेयता आदरः। तत्र स्वागमे। तां तत्प्रत्ययामास्थाम् इह महायानेऽपि कुरु विधेहि। महायानेऽपि उक्तस्य आस्थाकारणस्य विद्यमानत्वात्। इदं पुनः सर्वप्रवचनसाधारणमव्यभिचारि लक्षणं यदुक्तमध्याशयसंचोदनसूत्रे[1]—

अपि तु मैत्रेय चतुर्भिः कारणैः प्रतिभानं सर्वबुद्धभाषितं वेदितव्यम्। कतमैश्चतुर्भिः? इह मैत्रेय प्रतिभानमर्थोपसंहितं भवति नानर्थोपसंहितम्। धर्मोपसंहितं भवति नाधर्मोपसंहितम्। क्लेशप्रहायकं भवति न क्लेशविवर्धकम्। निर्वाणगुणानुशंससंदर्शकं भवति न संसारगुणानुशंससंदर्शकम्। एतैश्चतुर्भिः। पेयालं। यस्य कस्यचिन्मैत्रेय एतैश्चतुर्भिः प्रतिभाति प्रतिभास्यति वा, तत्र श्राद्धैः कुलपुत्रैः कुलदुहितृभिर्वा बुद्धसंज्ञा उत्पादयितव्या। शास्तृसंज्ञां कृत्वा स धर्मः श्रोतव्यः। तत्कस्य हेतोः? यत् किंचिन्मैत्रेय सुभाषितम्, सर्वं तद्बुद्धभाषितम्। तत्र मैत्रेय य इमानि प्रतिभानानि प्रतिक्षिपेत्—नैतानि बुद्धभाषितानीति, तेषु च अगौरवमुत्पादयेत्, पुद्गलविद्वेषेण तेन सर्वं बुद्धभाषितं प्रतिभानं प्रतिक्षिप्तं भवति। धर्मं प्रतिक्षिप्य धर्मव्यसनसंवर्तनीयेन कर्मणा अपायगामी भवति॥

P 432 — 10 — 15

तदत्र धर्मताया अविलोमनमेव सम्यग्लक्षणमुक्तम्। उक्तं च—

यदर्थवद्धर्मपदोपसंहितं
त्रिधातुसंक्लेशनिबर्हणं वचः। 20
भवेच्च यच्छान्त्यनुशंसदर्शकं
तदुक्तमार्षं विपरीतमन्यथा॥ इति।

एतन्महायाने सर्वमस्तीति कथमुपादेयं न स्यात्? यदुक्तम् "न सिद्धोऽसौ तवादितः" इति, तत्र परो विशेषमभिधत्ते। न ब्रवीमि यदावयोर्द्वयोः सिद्धमुभयसिद्धमिति, किं तर्हि आवाभ्यामन्येषामुभयेषां मदागमः सिद्ध इत्युपादेयः, न महायानम्, एतद्विपरीतत्वात्। तेन नोपादेयमित्याह अन्योभयेष्टेत्यादि—

P 433 — 25

अन्योभयेष्टसत्यत्वे वेदादेरपि सत्यता॥ ४३॥

यदि आवयोर्विवादारूढत्वात् आवाभ्यामन्ये ये केचिदप्रतिपन्ना उभये, तेषामिष्टं अभिमतम्। संमतमिति यावत्। तस्य सत्यत्वे यथार्थत्वे अभ्युपगम्यमाने सति वेदादेरपि सत्यता वेदवाक्यस्य चोदनालक्षणस्य। आदिशब्दात् कणादादिवचनस्यापि। सत्यता 30

---

[1] Cf. महापरिनिब्बाणसुत्त, 4. 8 and SA 1. 10. [2] Cf. ŚS p. 12.

अमृषार्थता स्यात्। तत्रापि वादिप्रतिवादिभ्यामन्योन्योभयसंमतिः संभाव्यते, इति तदप्युपादेयं भवतः स्यात्। तस्मान्नायमपि विशेषः॥

अथापि स्यात्—मदागमे बुद्धवचनत्वेऽविवादः, न तु महायाने। तेन स उपादेयो नेतरदित्याशङ्कयन्नाह सविवादं महायानमित्यादि—

P 434 5 सविवादं महायानमिति चेदागमं त्यज।
तीर्थिकैः सविवादत्वात्स्वैः परैश्चागमान्तरम्॥ ४४॥

सविवादं सविप्रतिपत्तिकं महायानम्। केचिद् बुद्धवचनतया प्रवृत्त्यङ्गमिच्छन्ति, केचित् तद्विपरीतसमारोपान्नेच्छन्ति, इति हेतोः, चेत् यदि न ग्राह्यम्, तदा आगमं त्यज, स्वागममपि विजहीहि, सोऽपि प्रवृत्त्यङ्गं न स्यात्। कस्मात्? तीर्थिकैर्मीमांसकादिभिः सविवादत्वात् 10 विप्रतिपत्तिसंभवात् परित्यागमर्हति। न केवलं तीर्थिकैः, अपि तु स्वयूथ्यैरित्याह—स्वैरिति। चतुर्निकायमष्टादशभेदभिन्नं भगवतः शासनम्। तत्र एकस्यैव निकायस्य अनेकभेदसंभवात् स्वयूथ्यैरपि परस्परविवादः संभवति। स्वैरिति स्वनिकायान्तर्गतभेदान्तरावस्थितैः। परैरिति अन्यनिकायव्यवस्थितैः। चकारः पूर्वापेक्षया समुच्चयार्थः। सविवादत्वात् आगमान्तरं त्यजेति संबन्धः। त्वदभ्युपगतादागमादन्य आगमः आगमान्तरम्। तदपि सविवाद-15 त्वान्न स्वीकारमर्हति। त्वदागमस्यापि अपरापेक्षया सविवादत्वं समानमिति परित्यागे तुल्य एव न्यायः। अथवा। स्वैरिति एकभेदव्यवस्थितैः सौत्रान्तिकाभिधार्मिकवैनयिकैः परस्परं सविवादत्वात् सूत्राभिधर्मविनयाः परित्यागमर्हन्ति। अस्ति हि एकभेदावस्थितानां सौत्रान्तिकादीनामन्योन्यं विवादः। परैरिति एकनिकायाश्रितभेदान्तरगतैः। एतेन यदुक्तम्—गुरुपर्व[ शिष्य? ]क्रमेणाम्नायायातं बुद्धवचनमित्यादि, तदनेनैव प्रत्याख्यातं द्रष्टव्यम्। न 20 हि अविस्मृतसंप्रदायानामन्योन्यस्य विवादो युक्तः। न च सर्वज्ञवचनेषु परस्परहतिरस्ति। न च सूत्राभिधर्मविनयानां परस्परमेकवाक्यता भवतः संभवति। तत् कथं सूत्रादिसंस्यन्दनं बुद्धवचनत्वे हेतुरुक्तम्? तस्माद् यत्किंचिदेतत्॥

P 435

एवं समानपरिहारदूषणतामभिधाय पुनर्विशेषेण परस्याभ्युपगमे दूषणमुद्भावयन्नाह—

शासनं भिक्षुतामूलं भिक्षुतैव च दुःस्थिता।

25 शासनमित्यादिनोपक्रमते—शासनं भगवता हिताहितस्वीकारपरिहारदेशनालक्षणम्। तच्च भिक्षुतामूलम्। अथवा। आगमविप्रतिपत्तिमानुषङ्गिकीं परिसमाप्य यदुक्तम्—

सत्यदर्शनतो मुक्तिः शून्यतादर्शनेन किम्। [ ९.४१ ]

इति निराचिकीर्षन्नाह—शासनमित्यादि। शासनम्—इदं कर्तव्यमिदं न कर्तव्यमित्याज्ञाप्रणयनम्। तद् भिक्षुतामूलम्। भिक्षुभावो भिक्षुता, सैव मूलं कन्दो यस्येति तत्तथोक्तम्, 30 तत्प्रतिष्ठितत्वात्। यथा किल दृढमूलो वृक्षः चिरमवस्थितिमनुभवन् काण्डशाखाप्रशाखापत्रपुष्पफलच्छायादानसंतापाद्यपहरणसमर्थो भवति, तथा भगवतोऽपि शासनकल्पपादपो भिक्षुताकन्दमासाद्य स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गध्यानारूप्यसमाधिसमा-

P 436

पत्तिबोधिपाक्षिकार्याष्टाङ्गिकमार्गश्रामण्यफलसंपन्नः ऋद्धिप्रातिहार्यादिभिः क्लेशोष्मसंतापाद्यपहरणपटुर्भवति, इति भिक्षुताया मूलसाधर्म्यम् । तत्र संज्ञाभिक्षुः, प्रतिज्ञाभिक्षुः, भिक्षणशीलो भिक्षुः, ज्ञप्तिचतुर्थकर्मणोपसंपन्नो भिक्षुः, भिन्नक्लेशो भिक्षुः इति पञ्चप्रकारो भिक्षुः । तत्र चतुर्थपञ्चमं द्वयमग्र्यम्, इतरेषां समानाभिधानमात्राभिधेयत्वात् । तदुभयमपि शासनावस्थाननिदानमविरुद्धम् । तत्रापि भिन्नक्लेशो भिक्षुः प्रधानम् । तस्यैवेह ग्रहणम् । तद्भावो 5 भिक्षुता । सा च आर्यसत्यदर्शनतो न संगच्छते इत्याह—भिक्षुतैव चेत्यादि । भिक्षुता भिन्नक्लेशता । क्लेशप्रहाणमिति यावत् । चो वक्तव्यान्तरं समुच्चिन्वन् हेतौ वर्तते । यस्मात् सा भिक्षुतैव दुःस्थिता, शून्यतादर्शनमन्तरेण असमञ्जसा केवलसत्यदर्शनतो न युज्यते । P 437 तस्मात् सत्यदर्शनतो मुक्तिरिति न वक्तव्यमित्यभिप्रायः । केषां सा दुःस्थिता ? सावलम्बनचित्तानामिति । सहावलम्बनेन वस्त्वभिनिवेशेन वर्तते इति सावलम्बनम्, तत्तादृशं चित्तं 10 येषां योगिनां ते तथोक्ताः, तेषामिति । यतः ते दुःखादिसत्यं क्लेशविसंयोगं च वस्तुत्वेनावलम्बन्ते इति मतं भवताम् । अतस्तेषामुपलम्भदृष्टीनां दुःस्थिता, न निरालम्बनचित्तानाम् ॥

यत्पुनरुक्तं—सत्यदर्शनतो मुक्तिरिति, तद्विकल्पनीयम् । द्विधा हि सत्यदर्शनं संभाव्यते, परमार्थतः संवृतितो वा । तद् यदाद्यो विकल्पः, तदा नास्माकं विप्रतिपत्तिः, अस्मत्पक्षस्य प्रधानत्वात्, सर्वधर्माणामस्माभिः परमार्थतो दर्शनाभ्युपगमात् । अथ द्वितीयः, 15 तन्न सहामहे, युक्तिविरोधात् । न हि संवृतिसत्यदर्शनान्मुक्तिरुत्पद्यते, सर्वसत्त्वानां मुक्तिप्रसङ्गात् । तथा हि युक्त्यागमाभ्यां तत्त्वातत्त्वविवेचनात्, परमार्थसत्यमेवात्र क्लेशप्रहाणाय निश्चीयते न संवृतिसत्यम् । तच्च सर्वधर्मानुपलम्भलक्षणम् । न हि तदन्तरेण संक्लेशनिवृत्तिर्युज्यते । यावद्भावाभिनिवेशः, तावत् कल्पना न निवर्तते, यावच्च कल्पना तावदखण्डितमहिमानः संक्लेशाः चित्तसंतानमध्यावसन्ति । यावच्च संक्लेशाः तावत् कर्मनिर्मितजन्म- 20 परंपराप्रसवः संसारोऽपि सुतरामव्याहतप्रसरः प्रवर्तते । तस्मात् सर्वधर्मशून्यतैव अविद्याप्रतिपक्षत्वात् संसारसंततिविच्छित्तिहेतुरवसीयते, न केवलं सत्यदर्शनम् । इदमेव आचार्यपादैरुक्तम्[१]—

मुक्तिस्तु शून्यतादृष्टेस्तदर्थाशेषभावना ॥ इति । P 438

यथा आर्यसत्यानि सत्यद्वयेऽन्तर्भवन्ति तथोपदर्शितमेव प्राक् । इत्यलमतिप्रसङ्गेन । 25

अपि च—

सावलम्बनचित्तानां निर्वाणमपि दुःस्थितम् ॥ ४५ ॥

इति न केवलं भिक्षुता, किं तर्हि निर्वाणमपि, इत्यपेरर्थः । निर्वाणं क्लेशविसंयोगान्निरुपधिशेषं दुःस्थितं दुर्घटम् ॥

तत्र भिक्षुतायास्तावदसंगतिमाह— 30

क्लेशप्रहाणान्मुक्तिश्चेत्तदनन्तरमस्तु सा ।

---

१ Quoted in Subhāṣitasaṃgraha.

यदि च आर्यसत्यदर्शनतः क्लेशाः प्रहीयन्ते, ततो विमुक्तिरुपजायते, तदा तदनन्तरं क्लेशप्रहाणात् समनन्तरमेवास्तु सा मुक्तिर्भवतु। भवतु एवम्। को वै नाम अन्यथा ब्रूते? नैतदस्ति, कुत इत्याह—

**दृष्टं च तेषु सामर्थ्यं निष्क्लेशस्यापि कर्मणः॥ ४६॥**

5 चो हेतौ। दृष्टं प्रतिपन्नम्। आगमतः। यस्मात् तेषु प्रहीणक्लेशेषु आर्यमौद्गल्यायनार्याङ्गुलिमालप्रभृतिषु सामर्थ्यं फलदानं प्रति शक्तिः। तस्मान्न तदनन्तरमेव मुक्तिरस्ति। P 439 कस्य सामर्थ्यं दृष्टम्? कर्मणः शुभाशुभलक्षणस्य। किं पूर्वमनार्यावस्थायां क्लेशसहितस्य? नेत्याह—अक्लेशस्यापि क्लेशसहकारिरहितस्यापि कर्मणः॥

ननु च सत्यदर्शनादविद्यादि प्रहीयते, तत्प्रहाणात् संस्कारादिप्रहाणक्रमेण तृष्णापि 10 प्रहीयते। तृष्णाविपर्यासमती च पुनर्भवोत्पत्तिनिमित्ते। ततश्च तयोरभावात् तुषरहितस्य बीजस्येव कर्मणः सद्भावेऽपि न किंचिद्विहन्यते इति। तदुक्तम्—

मिथ्याज्ञानतदुद्भूततर्षसंचेतनावशात्।
हीनस्थानगतिर्जन्म त्यक्त्वा चैतन्न जायते॥ इति।

अथवा। तृष्णैव केवला पुनर्भवकारणम्, समुदयाकारत्वात्। उक्तं हि भगवता—

15 तत्र कतमत् समुदयार्यसत्यम्? येयं तृष्णा पौनर्भविकी नन्दीरागसहगता तत्रतत्राभिनन्दिनी, यदुत कामतृष्णा भवतृष्णा विभवतृष्णा चेति॥

तदेवं यस्य तृष्णा नास्ति, तस्य प्रहीणसमुदयस्य कारणाभावात् न पुनर्जन्मसंभवः। इति पराभिप्रायमुत्थापयन्नाह—

**तृष्णा तावदुपादानं नास्ति चेत्संप्रधार्यते।**

P 440 20 अविद्याप्रहाणात् तृष्णा पुनर्भवोपादानं कारणं तावन्नास्ति, न विद्यते चेद्यदि संप्रधार्यते निश्चीयते, तदा नैतद्वक्तव्यम्। यतः उपलम्भदृष्टीनामविद्याप्रहाणमनुपपन्नम्। तद्भावात् तृष्णाप्रहाणस्याप्यभावात्। भवतु वा, तथाप्यभिधीयते—

**किमक्लिष्टापि तृष्णैषां नास्ति संमोहवत् सती॥ ४७॥**

अक्लिष्टापि सती क्लेशासंप्रयुक्तापि तृष्णा किमेषां भवद्योगिनां नास्ति न संभवति। 25 कथमिव? संमोहवत् अक्लिष्टाज्ञानवत्॥

इत्थमपि तृष्णा निषेद्धुमशक्येत्याह—

**वेदनाप्रत्यया तृष्णा वेदनैषां च विद्यते।**

स्पर्शप्रत्यया वेदना, वेदनाप्रत्यया च तृष्णा। सा वेदना तृष्णाकारणमेषामस्ति। तृष्णा तु तत्कार्यम्, अविकलेऽपि कारणे न समस्ति इति कथमभिधातुं शक्यते? 30 निरविद्यस्य वेदनायामपि तृष्णा न भवतीति चेत, न। भावाभिनिवेशिनां निरविद्यत्वमेव असिद्धम्, इत्युक्तम्। ततो यदि अक्लिष्टाज्ञानवत् नाभ्युपगम्यते तृष्णा, तथापि शून्यतादर्शनमन्तरेण न्यायबलादापतति। अयमत्र समुदायार्थः—यदा मुक्तसंतानेऽपि कर्मणः फलदान-

सामर्थ्यमुपलभ्यते, तृष्णा च वेदनासद्भावे संभाव्यमाना, तदा क्लेशप्रहाणमपि संदिह्यमानं कथमिव विमुक्तौ निश्चयं कुर्यात्? तस्मान्न शून्यतामन्तरेण भिक्षुता सुस्थिता प्रतिभासते इति। यदुक्तम्—

सावलम्बनचित्तानां निर्वाणमपि दुःस्थितम्।

इति, तदुपपादयन्नाह— 5

**सालम्बनेन चित्तेन स्थातव्यं यत्र तत्र वा ॥ ४८ ॥**

सालम्बनेन सोपलम्भेन चित्तेन स्थातव्यमासक्तव्यम्। यत्र तत्र वा यत्र तत्र आसङ्गस्थानेषु आर्यसत्यादिषु तद्भावनाफलेषु वा। आसङ्गसंभावनायां न पुनर्जन्मनिवृत्तिरिति कथं पुनर्जन्मसंभावनायां निर्वाणमपि न संदिग्धं स्यात्?

तस्मादुक्तशून्यतैव निर्वाणकारणमुक्तेत्याह— 10

**विना शून्यतया चित्तं बद्धमुत्पद्यते पुनः।**
**यथासंज्ञिसमापत्तौ भावयेत्तेन शून्यताम् ॥ ४९ ॥**

विना शून्यतया शून्यतामन्तरेण चित्तं विज्ञानं सालम्बनं बद्धं संयतम् आलम्बनासङ्गपाशेन। उत्पद्यते पुनः, समाधिबलात् कियत्कालं निवृत्तमपि पुनरुत्पत्तिमद् भवति। क्व पुनरिदं दृष्टमित्याह—यथा असंज्ञिसमापत्तौ इति। यथा असंज्ञिसमापत्तिं समापद्यमानानां 15 तावत्कालं चित्तचैत्तनिरोधेऽपि पुनस्तदुत्पत्तिः स्यात्, तथा अन्यत्रापि इत्यर्थः। उपलक्षणं चैतत्। यथा निरोधसमापत्तावित्यपि द्रष्टव्यम्। अथ वा। यथा असंज्ञिसमापत्तिं समापद्य असंज्ञिषु देवेषु उपपद्यमानानामनेककल्पशतं यावन्निरुद्धानामपि तत्समापत्तिविपाकफलपरिसमाप्तौ चित्तचैत्तानां पुनरुत्पत्तिः, तथा। यतः शून्यतामन्तरेण न भिक्षुता न निर्वाणमुपपद्यते, ततः उभयार्थिनां शून्यतैव भावनीयेत्याह भावयेदित्यादि। येन कारणेन विना 20 शून्यतया चित्तं बद्धमुत्पद्यते पुनः, तेन कारणेन निर्वाणाद्यर्थी शून्यतामेव भावयेत्। तद्भावना हि क्लेशप्रहाणं निर्वाणं चाधिगमयति। न केवलैव सत्यादिभावनेति यावत्, सालम्बनत्वात्। यदुक्तमार्यवज्रच्छेदिकायां[१] प्रज्ञापारमितायाम्—

(P 442)

तत् किं मन्यसे सुभूते अपि तु स्रोतआपन्नस्यैवं भवति—मया स्रोतआपत्तिफलं प्राप्तमिति? सुभूतिराह—नो हीदं भगवन्। तत्कस्य हेतोः? न हि भगवन् किंचिदापन्नः, 25 तेनोच्यते स्रोतआपन्न इति। न रूपमापन्नो न शब्दान् न गन्धान् न रसान् न स्प्रष्टव्यानि न धर्मानापन्नः, तेनोच्यते स्रोतआपन्न इति। सचेद् भगवन् स्रोतआपन्नस्यैवं भवेत्—मया स्रोतआपत्तिफलं प्राप्तमिति, स एव तस्य आत्मग्राहो भवेत् सत्त्वग्राहो जीवग्राहः पुद्गलग्राहो भवेत्। पेयालं। तत्किं मन्यसे सुभूते अपि नु अर्हत एवं भवति—मयार्हत्त्वं प्राप्तमिति? सुभूतिराह—नो हीदं भगवन्। तत्कस्य हेतोः? न कश्चिद्धर्मो योऽर्हन्नाम। 30 सचेद्भगवन् अर्हत एवं भवेत्—मयार्हत्त्वं प्राप्तमिति, स एव तस्यात्मग्राहो भवेत्। पेयालं।

(P 443)

---

१ VCh p. 25. (with a few variations).

बोधि. २७

भगवानाह—तस्मात्तर्हि सुभूते बोधिसत्त्वेन महासत्त्वेन एवमप्रतिष्ठितं चित्तमुत्पादयितव्यम्, न क्वचित् प्रतिष्ठितं चित्तमुत्पादयितव्यम्, न रूपप्रतिष्ठितं चित्तमुत्पादयितव्यम्, न शब्दगन्धरसस्प्रष्टव्यप्रतिष्ठितं चित्तमुत्पादयितव्यमिति।

तस्माच्छून्यतैव बोधिमार्ग इति स्थितम् ॥

P 444 5 यत्सूत्रेऽवतरेदित्यादि अनुष्टुप्त्रयं[1] केनचित् प्रतिक्षिप्तमिव लक्ष्यते, अपक्रमनिवेशितत्वात्। आगमविप्रतिपत्तिरस्य विचारस्य प्रस्तावः। शासनं भिक्षुतेत्यादिषु आगमविवादात्, प्रक्रमान्तरत्वात् पूर्वमेव वक्तुमुचितम्। अनेनान्तरितस्य विवादस्य पुनरुपक्रमो ग्रन्थकारस्य प्रस्तावाकौशलं स्यात्। यत्प्रत्ययेत्यादिना च प्राक्तनवृत्तद्वयार्थस्याभिहितत्वात्। महाकाश्यपमुख्यैरित्यादिवचनस्याश्लीलत्वात् ग्रन्थकाराप्रयुक्तमिति निश्चितम्। तस्मात् प्रक्षेप 10 एवायमिति ॥

स्यादेतत्—यथा सालम्बनचित्तस्यासङ्गसंभवात् न मुक्तिः स्यात्, तथा शून्यतायामपि भयमुपजायते। तद्वरमुभयपरिहारेण संसार एव स्थितिर्युक्तेत्याह—

सक्तित्रासात्त्वनिर्मुक्त्या संसारे सिध्यति स्थितिः।
मोहेन दुःखिनामर्थे शून्यताया इदं फलम् ॥ ५३ ॥

15 सक्तिरासङ्गः। त्रासो भयम्। शून्यताश्रवणात्, तदर्थापरिज्ञानात्। सक्तित्रासमिति समाहारः। तस्मादुभयपक्षपरिहारेण संसारे त्रैधातुकस्वभावे सिध्यति स्थितिरवस्थानमुपजायते। P 445 तुशब्दः पुनर्दोषपरिहारार्थम्। इदं तु शून्यताभ्युपगमे दूषणं स्यात्। साधारणं दूषणमिति यावत्। कुतः? अनिर्मुक्त्या। हेतौ तृतीया। मुक्तेरभावादित्यर्थः। कतमेषाम्? दुःखिनां पञ्चगतिसंसारे जात्यादिदुःखपीडितानां सताम्। कथम्? अर्थे 20 अर्थविषये। मोहेन अविद्यया। आलम्बनासङ्गेनेति यावत्। अतः शून्यताया इदं फलम्, यत् पुनरपि निवृत्य संसारेऽवस्थानम्। अयमभिप्रायः—यथा शून्यताव्यतिरेकेण उपलम्भदृष्टेर्न मुक्तिः स्यात्, तथा विषयासङ्गसुखचेताः सर्वधर्मशून्यताभयभीतकातरः वरं संसार एवावस्थानमिति मन्यमानो बालः प्रशमसुखविमुखो विनिवृत्य जात्यादिदुःखमनुभवन् पुनस्तत्रैवावतिष्ठते इति किमनया प्रसाधितमिति ॥

25 अन्ये तु सक्तित्रासान्तनिर्मुक्त्येति पाठं मन्यमाना एवं व्याचक्षते—सक्तेर्हेतुत्वात् सक्तिरासङ्गस्थानम्। त्रासहेतुत्वात् त्रासो भयस्थानम्। तावेव अन्तौ सक्तित्रासान्तौ।

---

[1] These three stanzas are found in all Mss. and Tibetan trans:-
यत्सूत्रेऽवतरेद्वाक्यं तच्चेद्बुद्धोक्तमिष्यते।
महायानं भवत्सूत्रैः प्रायस्तुल्यं न किं मतम् ॥ ५० ॥
एकेनागम्यमानेन सकलं यदि दोषवत्।
एकेन सूत्रतुल्येन किं न सर्वं जिनोदितम् ॥ ५१ ॥
महाकाश्यपमुख्यैश्च यद्वाक्यं नावगाह्यते।
तत्त्वयानवबुद्धत्वादग्राह्यं कः करिष्यति ॥ ५२ ॥

शाश्वतोच्छेदान्तौ इत्यर्थः। तथा हि—शाश्वतदृष्टेरासक्तिः, उच्छेददृष्टेश्च त्रासो जायते। तयोर्निर्मुक्त्या परित्यागेन। पूर्ववत् तृतीया। यत् परमार्थविचारेण शाश्वतान्तविवर्जनम्, संवृतिसत्याभ्युपगमेन च उच्छेदान्तपरित्यागः, इति समारोपापवादान्तपरिहारान्मध्यमा प्रतिपत्तिरियमुपदर्शिता भवति। तथा च किं संपद्यते इत्याह—संसारे सिध्यति स्थितिः। प्रज्ञया संसारदोषालिप्तस्य करुणापरतन्त्रत्वात् संसारे सिध्यति निष्पद्यते स्थितिरवस्थानम्। किमर्थम्? दुःखिनामर्थे परदुःखदुःखितया दुःखिनां संसारिणामर्थे, तद्दुःखसमुद्धरणाभिलाषात्॥ P 446 5

ननु संसारिणो नाम परमार्थतो न सन्त्येव, तत् कथं तदवस्थानमित्यत्राह—मोहेन विपर्यासेन संवृत्या सत्त्वस्योपलम्भात्। एतच्च "दुःखव्युपशमार्थं तु कार्यमोहो न वार्यते" [९·७७] इत्यत्र पश्चाद् व्यक्तीकरिष्यते। तस्माच्छून्यताया इदं फलम्, यत्करुणया संसारेऽवतिष्ठमानोऽपि शून्यतादर्शनात् संसारदोषैर्न लिप्यते। इदमप्रतिष्ठितनिर्वाणता शून्यतायाः फलम्, शून्यतामन्तरेण अस्याभावात्। तस्मादासंसारं सत्त्वार्थमवस्थानमिच्छद्भिः शून्यतैव भावयितव्या॥ 10

एतत् सर्वमुपसंहारेणोपदर्शयन्नाह—

**तदेवं शून्यतापक्षे दूषणं नोपपद्यते।**

तदेतत् एवमुक्तक्रमेण शून्यतापक्षे उक्तं दूषणम्—शून्यतायां त्रासात् संसारावस्थानलक्षणं नोपपद्यते न संगच्छते वक्ष्यमाणसमाधानात्। इति प्रथमपक्षे योजना। यत एवम्— 15

**तस्मान्निर्विचिकित्सेन भावनीयैव शून्यता॥ ५४॥** P 447

निर्गतो विचिकित्साया निर्विचिकित्सः निःसंदेहः। तेन सता भावनीयैव अभ्यसनीयैव शून्यता सर्वधर्मनिःस्वभावता अनुपलम्भयोगेन॥ 20

एतेन यदुक्तम्—"न विनानेन मार्गेण" [९·४१] तदुपसंहृतं भवति। यत्पुनरुक्तम्—"शून्यतादर्शनेन किम्", तत्र शून्यताया विशेषमाह—

**क्लेशज्ञेयावृतितमःप्रतिपक्षो हि शून्यता।**
**शीघ्रं सर्वज्ञताकामो न भावयति तां कथम्॥ ५५॥**

क्लेशा रागादयः। ज्ञेयं पञ्चविधम्। आवृतिशब्दस्तु उभयत्र संबध्यते। क्लेशा एवावृतिः। ज्ञेयं च आवृतिरावरणमिति विभज्य योजनीयम्। ज्ञेयमेव समारोपितरूपत्वादावृतिः, सैव तम इव तमः, वस्तुतत्त्वावरणात्, तस्य प्रतिपक्षः प्रहाणहेतुः। हि यस्मात् शून्यता, तस्मात् शीघ्रं त्वरितं सर्वज्ञतायां बुद्धत्वे कामोऽभिलाषो यस्यासौ तथोक्तः। सर्वज्ञतां कामयते इति वा सर्वज्ञताकामः। न भावयति तां कथमिति, तां शून्यतां कथं न भावयति नाभ्यस्यति? अपि तु महता यत्नेन भावयेदेव॥ 25 P 448 30

यदप्युक्तम्—त्रासाच्छून्यतायां प्रवृत्तिर्न स्यात्, तदपि न युक्तमित्याह—यद्दुःखेत्यादि। द्वितीयपक्षे पुनरित्थमवतारणीयम्—अस्त्येव शून्यतायामेषोऽनुशंसः, केवलं प्रथमत एव तत्र संत्रासात्प्रवृत्तिर्न स्यादिति। आह—

यद्दुःखजननं वस्तु त्रासस्तस्मात्प्रजायताम्।
5 शून्यता दुःखशमनी ततः किं जायते भयम्॥ ५६॥

यद्वस्तु दुःखजननं पीडाकरम्, तस्माद्वस्तुनः सकाशात् त्रासः भयं जायतां नाम। शून्यता पुनः प्रत्युत दुःखशमनी सर्वसांसारिकदुःखापहन्त्री। ततः तस्याः शून्यतायाः किं किंनिमित्तं अभयस्थाने कातरस्य जनस्य भयं जायते? सर्वगुणनिदानत्वात् प्रेमैव तस्यामुचितमिति भावः॥

10 आत्मग्रहजनिताहंकारप्रसूतं हि भयमतत्त्वविदामुत्पद्यते। स चात्मा कल्पनासमारोपितमूर्तिरिति अहंकारोऽपि तदभावादनास्पद इत्युपदर्शयन्नाह—

P 449 यतस्ततो वास्तु भयं यद्यहं नाम किंचन।
अहमेव न किंचिच्चेद्भयं कस्य भविष्यति॥ ५७॥

यतस्ततो वा भयाभयस्थानात् अस्तु भवतु भयम्। कदा? यदि अहं नाम 15 किंचन। अहमिति अहंप्रत्ययस्य विषयः कथितः। अहं नाम अहंप्रत्ययवेद्यं यत्किंचन किंचिद्वस्तु स्यात्। अव्यक्तनिर्देशान्नपुंसकता। तदा युक्तमेव भयम्। यदा पुनरहमेव न किंचित् न वस्तुसत् विचार्यमाणमहं किंचित् शब्दविकल्पमात्रादन्यत्, तदा भयं कस्य? अहमित्यस्याभावात्। भविष्यति उत्पत्स्यते। इतोऽपि विचारात् त्रासो निवर्तते इति भावः। तदुक्तम्—

20 नास्म्यहं न भविष्यामि न मेऽस्ति न भविष्यति।
इति बालस्य संत्रासः पण्डितस्य भयक्षयः॥ इति।

यथा च अहंप्रत्ययविषयस्य कल्पनामात्रोपदर्शितत्वादसत्त्वम्, तथा प्रतिपादयन्नाह—

दन्तकेशनखा नाहं नास्थि नाप्यस्मि शोणितम्।
न सिंघाणं न च श्लेष्मा न पूयं लसिकापि वा॥ ५८॥

P 450 25 दन्तकेशनखा नाहम्। प्रत्येकममी अहंप्रत्ययविषया न भवन्ति। नास्थि नाप्यस्मि शोणितम्। अस्थि हड्डम्। शोणितं रुधिरम्। एतद्द्वयमपि नास्मि नाहम्। सिंघाणं न च श्लेष्मा न पूयम्। सिंघाणं नासिकाविवरनिर्यातः क्लेदः। श्लेष्मा मुखविवरविनिर्गतः। पूयं व्रणे पक्वरुधिरम्। एतान्यपि नाहं भवन्ति। लसिकापि वा, लसिका व्रणक्लेदः, सापि नाहम्॥

नाहं वसा न च स्वेदो न मेदोऽन्त्राणि नाप्यहम्।
30 न चाहमन्त्रनिर्गुण्डी गूथमूत्रमहं न च॥ ५९॥

नाहं वसा न च स्वेदो न मेद इति। वसा शरीरस्नेहः। स्वेदः प्रस्वेदः। मेदश्चतुर्थो धातुः। इमान्यपि नाहम्। अन्त्राणि नाप्यहमिति। अन्त्राणि प्रसिद्धानि, तान्यपि

नाहम् । न चाहमन्त्रनिर्गुण्डी अन्त्रनिर्गुण्डी सूक्ष्मात्मिका, सापि नैवाहम् । गूथमूत्रमहं न च, गूथं विष्ठा । एतदपि द्वयं नाहं न भवामि ॥

नाहं मांसं न च स्नायु नोष्मा वायुरहं न च ।
न च च्छिद्राण्यहं नापि षड् विज्ञानानि सर्वथा ॥ ६० ॥

नाहं मांसं न च स्नायु नोष्मा । स्नायु सिरा । ऊष्मा शरीरतेजोधातुः । इमेऽपि 5 P 451
नाहम् । वायुरहं न च, वायुराश्वासप्रश्वासादिलक्षणः, सोऽपि नैवाहम् । न च च्छिद्राणि चक्षुरादीनि, तान्यपि नाहम् । नापि षड् विज्ञानानि सर्वथा, षट् चक्षुःश्रोत्रघ्राणजिह्वाकायमनोविज्ञानानि, तान्यपि नाहं भवन्ति । सर्वथा सर्वप्रकारेण प्रत्येकं समुदितानि वा । तथा हि दन्तादिसमुदायात्मकमेव विचार्यमाणं शरीरमुपलभ्यते । तच्च प्रत्येकमहंप्रत्ययवेद्यं न भवति, प्रत्येकमहंप्रत्ययस्य तेषु अभावात् । न हि परेषामपि एकैकशः केशादयोऽहं- 10
प्रत्ययवेद्या भवन्ति । समुदिता अपि ते एव केवलाः पूर्ववत् । न च समुदितेषु तेषु कश्चिदेकः संभवति, तस्य प्रतिषेत्स्यमानत्वात् । नाप्यनेके समुदिता अपि एकप्रत्ययविषया भवितुमर्हन्ति । न च अनेकेषु एकप्रत्ययो भ्रान्तो युक्तः । न च भ्रान्तेस्तत्त्वव्यवस्था । तस्मात् कल्पनामात्रमेतदहमित्यर्थशून्यमाभातीति निश्चितम् । उक्तं चैतदशुभभावनाप्रस्तावे शिक्षासमुच्चये[1]— 15

सन्ति अस्मिन् काये केशा रोमाणि नखा दन्ता रजो मलं त्वक् मांसास्थि स्नायु P 452
शिरा वुक्का हृदयं प्लीहकः क्लोमकः अन्त्राणि अन्त्रगुणाः आमाशयः पक्वाशयः औदरीयकं यकृत् पुरीषम् अश्रु स्वेदः खेटः सिंघाणकं वसा लसिका मज्जा मेदः पित्तं श्लेष्मपूयशोणितं मस्तकलुङ्गं प्रस्रावः । एषु च वस्तुषु बोधिसत्त्वः उपपरीक्षणजातीयो भवति । एतत् पुनः पश्चात् कायस्मृत्युपस्थानपर्यन्ते निर्देक्ष्यामः । इति । एवं निर्विषय एवाहंप्रत्ययविशेषः ॥ 20

स्यादेतत्—यदि नाम केशादयोऽहंप्रत्ययवेद्या न भवन्ति, तथापि नायं निर्विषयः सिध्यति । यतः अन्तर्व्यापारपुरुषगोचर एव अहंप्रत्ययोऽस्माभिरिष्यते इति नैयायिकादयः । नैतदपि युक्तम् । यस्मात्—अहं गौरः कृशो दीर्घो गच्छामीत्याद्याकारपरामर्शात्मक एव अयमहंप्रत्ययः प्रतिभासते । न च आत्मन एतद्रूपमिष्यते परैः । न च अन्याकारेण ज्ञानेन अन्यस्य ग्रहणं युक्तम्, अतिप्रसङ्गात् । तथा हि तद्वान्, इदमिदं तस्य लक्षणमुपवर्णयन्ति 25
परे । तत्र नैयायिकास्तावत् नित्यं सर्वगतं प्रतिप्राणिभिन्नमचेतनं चेतनायोगात्तु चेतनं सुखादिगुणाधारं शुभाशुभकर्मकर्तारं तत्फलोपभोक्तारं परलोकिनं च आत्मानमिच्छन्ति । P 453
नैयायिकवद्वैशेषिका अपि । तदुक्तम्—

अन्ये पुनरिहात्मानमिच्छादीनां समाश्रयम् ।
स्वतोऽचिद्रूपमिच्छन्ति नित्यं सर्वगतं तथा ॥ 30

---

१ ŚS p. 115-16.

शुभाशुभानां कर्तारं कर्मणां तत्फलस्य च।
भोक्तारं चेतनायोगाच्चेतनं न स्वरूपतः॥ इति।

[ तत्त्वसंग्रह—१७१–१७२ ]

जैमिनीयास्तु—व्यावृत्त्यनुगमात्मकं बुद्धिरूपेण परिणामिनं चैतन्यरूपमात्मान-
5 मिच्छन्ति। तच्च चैतन्यं बुद्धिस्वभावम्। न च तस्य प्रवृत्तिनिवृत्ती भवतः, तस्योभयत्रा-
नुगतरूपत्वात्। तद्यथा—सर्पस्य कुण्डलावस्थानिवृत्तौ ऋजुत्वावस्थाप्रवृत्तौ च सर्पत्वस्यो-
भयत्राप्यवृत्तिः। यथोक्तम्—

व्यावृत्त्यनुगमात्मानमात्मानमपरे पुनः।
चैतन्यरूपमिच्छन्ति चैतन्यं बुद्धिलक्षणम्॥
10 यथाहेः कुण्डलावस्था व्यपेति तदनन्तरम्।
संभवत्यार्जवावस्था सर्पत्वं न निवर्तते॥
तथैव नित्यचैतन्यस्वभावस्यात्मनोऽपि न।
निःशेषरूपविगमः सर्वस्यानुगमोऽपि च॥ इति।

[ तत्त्वसंग्रह—२२२–२२४ ]

15 इति विशेषः। अन्यत् सर्वं पूर्ववत्॥

जैनास्तु जैमिनीयवच्चेतनमात्मानमिच्छन्ति द्रव्यपर्यायरूपेण यथायोगमनुगमव्यावृत्त्या-
त्मकम्। तथा चोक्तम्—

P 454

जैमिनीया इव प्राहुर्जैनाश्चिल्लक्षणान्तरम्।
द्रव्यपर्यायरूपेण व्यावृत्त्यनुगमात्मकम्॥

20 [ तत्त्वसंग्रह—३११ ]

कापिलास्तु नित्यं व्यापकं निर्गुणं स्वयमेव चैतन्यात्मकमात्मानमिच्छन्ति, न तु
बुद्धिसंबन्धात्। बुद्धेः स्वयमचित्स्वभावत्वात्। चैतन्यं पुरुषस्य स्वरूपमिति वचनात्।
नापि स कस्यचित् कार्यस्य कर्ता, स्वयं तत्फलोपभोक्ता वा, निष्क्रियत्वात्। प्रकृतिरेव
तत्कर्त्री तस्य, तत्फलोपनेत्री च। विपर्यासवशादसौ स्वात्मनि तत् समारोपयति।
25 तथा हि—यदा पुरुषस्य शब्दादिविषयोपभोगाकारमौत्सुक्यमुपजायते, तदा प्रकृतिः परिज्ञात-
पुरुषौत्सुक्या पुरुषेण युज्यते, ततः शब्दादिसर्गं करोति। शब्दादिषु श्रोत्रादिवृत्तिभिर्मन-
साधिष्ठिताभिः परिगृहीतेषु विषयेषु बुद्धिरध्यवसायं करोति। ततो बुद्ध्यवसितमर्थं
पुरुषश्चेतयते इति। एवं चैतन्यस्वरूपत्वान्निर्गुणत्वम्, व्यापित्वान्निष्क्रियत्वमिति सांख्य-
पुरुषस्य विशेषः। उक्तं च—

30 चैतन्यमन्ये मन्यन्ते भिन्नं बुद्धिस्वरूपतः।
आत्मनश्च निजं रूपं चैतन्यं कल्पयन्ति ते॥

P 455

प्रधानेनोपनीतं च फलं भुङ्क्ते स केवलम् ।
कर्तृत्वं तस्य नैवास्ति प्रकृतेरेव तन्मतम् ॥

[ तत्त्वसंग्रह–२८५–८६ ]

प्रवर्तमानान् प्रकृतेरिमान् गुणान्
तमोवृतत्वाद्विपरीतचेतनः । 5
अहं करोमीत्यबुधोऽभिमन्यते
तृणस्य कुब्जीकरणेऽप्यनीश्वरः ॥ इति ।

[ सांख्यक्रमदीपिका–४३ ]

उपनिषद्वादिनस्तु समस्तप्राणिसंतानान्तर्गतमेकमेव व्यापि नित्यं च ज्ञानमिच्छन्ति । तद्विवर्तरूपतया सकलमिदं क्षितिजलपवनहुताशनादिकं जगदवभासते । तत्स्वभाव एव 10 चात्मा । न बाह्यं किमप्यवयवि परमाण्वादिकं ग्राह्यं प्रमाणप्रसिद्धमस्ति । आह च—

नित्यो ज्ञानविवर्तोऽयं क्षितितेजोजलादिकः ।
आत्मा तदात्मकश्चेति संगिरन्तेऽपरे पुनः ॥
ग्राह्यलक्षणसंयुक्तं न किंचिदिह विद्यते ।
विज्ञानपरिणामोऽयं तस्मात्सर्वं परीक्ष्यते ॥ इति । 15

[ तत्त्वसंग्रह–३२८–२९ ]

पुद्गलवादिनस्तु पुनरन्तश्चरतीर्थिकाः । स्कन्धेभ्यस्तत्त्वान्यत्वाभ्यामवाच्यं पुद्गलनामानमात्मानमिच्छन्ति । अन्यथा तीर्थिकसिद्धान्ताभिनिवेशदर्शनं स्यात् । आह च—

केचिच्च सौगतंमन्या अप्यात्मानं प्रचक्षते । इति । P 456

[ तत्त्वसंग्रह–३३६ ] 20

कथमात्मनोऽहंप्रत्ययविषयता स्यात् ? स्वस्वरूपेण तत्राप्रतिभासनात् । तत्कथमात्मा अहंप्रत्ययतया प्रतिभासते इत्युच्यते ? तस्माद् विकल्पमात्रमेतत् । निर्विषयमुत्पद्यते इति स्थितम् ॥

संप्रति चित्स्वभावात्मवादिनः सांख्यादयः षड्विज्ञानानामात्मनिषेधमसहिष्णवः प्राहुः–शब्दादिज्ञानं चिदात्मकमात्मैवास्माभिरभिधीयते । तत्कथमस्यात्मताप्रतिषेध उच्यते ? 25 इति पराभिप्रायमाकलय्य सिद्धान्तवादी प्रसङ्गमासञ्जयन्नाह—

**शब्दज्ञानं यदि तदा शब्दो गृह्येत सर्वदा ।**

ननु यदि शब्दज्ञानात्मक आत्मा, तस्य च नित्यत्वात् शब्दज्ञानं नित्यं स्यात्, तदा शब्दोऽपि सदा नित्यमेव तद्भावाभावकालयोर्ग्रहीतव्यः स्यात्, शब्दग्रहणस्वभावस्य तस्य तत्सदसत्ताकाले सर्वदानुवर्तनात् । अन्यथा नित्यत्वमेव तस्य हीयेत । भवतु, 30 एवमेवेति चेत्, आह—

**ज्ञेयं विना तु किं वेत्ति येन ज्ञानं निरुच्यते ॥ ६१ ॥**

P 457 ज्ञानमेव नित्यमुपस्थितम्, शब्दस्य तु कादाचित्कत्वात् न सर्वदा सत्ताभिव्यक्तिः। ततश्च तदसत्ताकाले ज्ञेयं विना विषयमन्तरेण किं वेत्ति किं जानाति तद् ज्ञानम्? तुशब्दोऽसत्ताकालप्रश्नविशेषे वर्तते। येन ज्ञेयेन शून्यमपि ज्ञानं निरुच्यते अभिधीयते। 5 ज्ञेयं जानातीति ज्ञानमाख्यायते, तदभावात् कथं ज्ञानमित्याशयः॥

एतदेवाह—

**अजानानं यदि ज्ञानं काष्ठं ज्ञानं प्रसज्यते।**

यदपि विषयं न जानाति, तदपि यदि ज्ञानमुच्यते, तदा काष्ठमज्ञानस्वभावं ज्ञानं प्रसज्यते। न हि तेन किंचिदपराद्धं येन न विज्ञानं स्यात्। न चैवम्। तस्माद्विषयपरि- 10 ज्ञानाभावात् यथा काष्ठं ज्ञानं न भवति, तथा अन्यदपि न स्यादित्याह—

**तेनासंनिहितज्ञेयं ज्ञानं नास्तीति निश्चयः ॥ ६२ ॥**

येन निर्विषयं न ज्ञानम्, तेन कारणेन असंनिहितज्ञेयं असंनिहितमयोग्यदेशस्थं ज्ञेयं ग्राह्यो विषयो यस्य तत्तथोक्तं ज्ञानं नास्ति न विद्यते इति निश्चयः एकान्त एषः। सापेक्षत्वात्॥

15 स्यादेतत्—शब्दस्य सदाविद्यमानत्वात् नासंनिहितविषयं शब्दज्ञानम्। अग्रहणं तु P 458 कदाचित् कादाचित्काभिव्यक्तित्वादिति नोक्तदोषप्रसङ्गः। नैतदस्ति। यतो यदस्य ज्ञानस्य परिच्छेद्यं रूपं व्यक्तमित्युच्यते, तस्य सदासंनिहितविषयतया ग्राहकमज्ञानमभिधीयते। शब्दस्य तु सदा सत्त्वमसत्त्वं वा न विवक्षितम्। ज्ञानं तु कदाचिदग्राहकमित्येतावतैव साध्यसिद्धेः। तस्मादसंनिहितज्ञेयमित्यनेन ज्ञानस्यैव अग्राहकत्वं साध्यते। येन रूपेण 20 ज्ञानस्य ग्राह्यो विषयः, तस्य न सर्वदा संनिधानमस्तीति कृत्वा इति कथं नोक्तदोष- प्रसङ्गः? शब्दस्य यथा सर्वदा सत्त्वं नास्ति, तद्विस्तरभयान्नोच्यते॥

अपि च। यदि शब्दज्ञानमेवात्मा, तदा तद्ग्रहणात्मकत्वात्तस्य रूपग्रहणं न स्यात्। नैतदस्ति। यतः तदेव रूपग्राहकमिष्यते इति चेदत्राह तदेवेत्यादि—

**तदेव रूपं जानाति तदा किं न शृणोत्यपि।**

25 तदेव शब्दज्ञानमेव यदि रूपं जानातीति मतम्, तदा किं न शृणोत्यपि, तदा रूपग्रहणकाले किमिति न शृणोत्यपि, शब्दमपि किं न गृह्णाति? शब्दज्ञानत्वात्। अथ गृह्णात्येव, यदि संनिहितं स्यात्। केवलमसंनिधानात् न दोष इति परस्योत्तरमाशङ्क्याह शब्दस्येत्यादि—

P 459 **शब्दस्यासंनिधानाच्चेत्ततस्तज्ज्ञानमप्यसत् ॥ ६३ ॥**

30 शब्दस्य विषयतामापन्नस्य असंनिधानादयोग्यदेशात् ग्रहणं न स्यात्—यदि, एवमभिधीयते, ततस्तत् ज्ञानमप्यसत्। तत् तस्मात् तर्हि शब्दस्यासंनिधानात् तत् ज्ञान- मपि शब्दज्ञानम् असदविद्यमानम्। शब्दज्ञानमेव तर्हि तन्न भवतीत्यर्थः॥

किं च । यदि शब्दज्ञानं तदा रूपग्रहणाद्यात्मकं तन्न युज्यते इत्याह शब्दग्रहणेत्यादि—

**शब्दग्रहणरूपं यत्तद्रूपग्रहणं कथम् ।**

शब्दस्य ग्रहणरूपं शब्दस्य ग्रहणस्वभावम् । शब्दग्राहकमिति यावत् । यत् ज्ञानं तद् रूपग्रहणं रूपग्रहणात्मकं कथम् ? न कथंचिदपि स्यात् । एकस्य निरंशस्य रूपद्वया- 5 योगात् । ननु यथा कश्चिदेक एव कस्यचिदपेक्षया पिता, कस्यचिदपेक्षया च स एव पुत्रः स्यात्, तथा प्रकृतेऽपि रूपद्वयमेकस्य भविष्यतीत्याह एकः पितेत्यादि—

**एकः पिता च पुत्रश्च कल्प्यते न तु तत्त्वतः ॥ ६४ ॥**

एकः पिता एव जनकः पुत्रश्च जन्यः स एवेति कल्प्यते, स तु तदपेक्षया कल्पनया व्यवस्थाप्यते । न तु तत्त्वतः, न पुनः परमार्थतः । एक एव स्वभावः उभयात्मकः 10 P 460 कल्पनासमारोपितव्यपदेशात् [ रूपभेदेन ] पुनरेक एव तथा नानाभिधानेन नैवाभिधीयते । उभयवास्तवरूपद्वयमेकस्य घटनीयम्, तच्च कथंचिदपि न संगच्छते, रूपद्वयव्यतिभिन्नतया वस्तुनोऽपि द्वित्वप्रसङ्गात् । तस्मात् यथा वास्तवमेकस्य द्विरूपत्वं तन्न दृष्टान्तधर्मिण्यस्ति, यच्चास्ति काल्पनिकम्, तत् प्रकृतानुपयोगीति यत्किंचिदेतत् ॥

इतोऽपि न पारमार्थिकोऽयं व्यपदेश इत्याह सत्त्वं रज इति— 15

**सत्त्वं रजस्तमो वापि न पुत्रो न पिता यतः ।**

एतच्च अवश्यं त्वयापि स्वीकर्तव्यम्—सांख्यमते हि त्रिगुणमेकं जगत्, ततः सत्त्वं रजस्तमो वापीति समुदायः समुच्चयार्थः । यतो यस्मादेते गुणाः स्वस्वभावावस्थिताः प्रत्येकं समुदिता वा । तस्मान्न पिता न पुत्रः परमार्थतः । सर्वदा गुणा एव केवलाः सन्ति । अयमर्थः—पुत्रावस्थायां ये सत्त्वरजस्तमोलक्षणा गुणाः, ते एव प्राप्तजनकभावा अपि तेन 20 पूर्वापरकालयोरविशिष्टस्वभावा एव । ते ततस्तदपेक्ष्य पिता पुत्रश्चाभिधीयन्ते, न तु तत्र कश्चिद्विशेषः । ततः काल्पनिक एवायं व्यवहारः । यदि च रूपग्रहणकालेऽपि शब्दग्रहणा- P 461 त्मकमेकमेव तज्ज्ञानम्, तदा तत्स्वभावमुपलभ्येत, न चोपलभ्यते । ततो न तद्ग्रहणात्मकमित्याह शब्दग्रहणेत्यादि—

**शब्दग्रहणयुक्तस्तु स्वभावस्तस्य नेक्ष्यते ॥ ६५ ॥** 25

शब्दग्रहणेन युक्तः संबद्धः । तुशब्दो विशेषाभिधाने । स्वभावस्तस्य रूपग्राहकस्य ज्ञानस्य नेक्ष्यते न प्रतीयते । अतस्तदा तस्य शब्दग्रहणता नास्तीति निश्चीयते ॥

स्यादेतत्—यदि नाम न प्रतीयते, तथापि तदेव तत् । कथं तर्हि रूपग्रहणमित्याह तदेवेत्यादि—

**तदेवान्येन रूपेण नटवत्सोऽप्यशाश्वतः ।** 30

तदेव शब्दज्ञानम् । अन्येन रूपेण स्वभावेन रूपग्रहणात्मकेन रूपं गृह्णातीति शेषः । कथमिव तस्यानुरूपता ? नटवत् । यथा नाट्यसमये रङ्गभूमिगतो नटः एक एव

नानारूपेणावतरति, तथा प्रकृतेऽपीति न दोषः। अत्राह—सोऽप्यशाश्वतः इति अनित्यः
P 462 पूर्वस्वभावपरित्यागेन रूपान्तरमाविशति। न च पूर्वापरकालयोरेकस्वभाव एव नटो नाना-
रूपसंबन्धात्, अन्यथा तस्य रूपद्वयमेकदेति भाषेत। इति साध्यविकलो दृष्टान्तः।
अथापि स्यात्—भावः स एव। स्वभावः पुनरस्य अपरापर उत्पद्यते निरुध्यते च। ततः
5 अयमदोष इत्यत्राह स एवान्येत्यादि—

स एवान्यस्वभावश्चेदपूर्वेयं तदेकता ॥ ६६ ॥

स एवात्मा नटो वा। अन्यस्वभावः अपरस्वभावः। चेद् यदि उच्यते, तदा अपूर्वेयं तदेकता, अपूर्वेयमदृष्टपूर्वेयमीदृशी तदेकता। तस्य भावस्य अपरस्वभावोत्पत्तावपि एकता अभिन्नात्मता। तथा हि—स एवेति तत्त्वमाख्यायते, पुनरन्यस्वभाव इति तस्यैव
10 अन्यत्वम्। न चैतत् परस्परविरुद्धधर्मद्वयमेकस्य युक्तम्। न हि भावो नाम अन्य एव स्वभावात्, येन तस्योत्पादनिरोधयोरपि भावस्य तौ न स्याताम्। नापि तदभिन्नस्य स्वभावस्य उत्पादनिरोधयोर्भावस्य तादवस्थ्यं युक्तमभेदाभावप्रसङ्गात्। भेदे वा संबन्धा-सिद्धिरिति भावः॥

स्यादेतत्—भवत्वेव एष प्रसङ्गः यदि रूपद्वयमस्यात्मनः सत्यं स्यात्। किं तर्हि
P 463 15 निजमस्य रूपमपहाय अपरं रूपमतात्त्विकम्, तेन नोक्तदोषप्रसङ्गः, इत्याशयमाशङ्कयन्नाह अन्यद्रूपमित्यादि—

अन्यद्रूपमसत्यं चेन्निजं तद्रूपमुच्यताम्।

अन्यद्रूपं तद्विषयोपाधिकं स्फटिकोपलस्येव असत्यमस्वाभाविकम्, इति चेद्यदि, तर्हि निजं तद्रूपमुच्यताम् निजं स्वाभाविकं तस्यात्मनो रूपं तत्त्वमुच्यताम्। अस्त्येवान्यद्रूपं
20 तस्य। किं तत्? ज्ञानता चेत्—

ज्ञानता चेत्ततः सर्वपुंसामैक्यं प्रसज्यते ॥ ६७ ॥

ज्ञानात्मतैव तस्य पूर्वापरकालानुगामिनी निजं रूपम्। किमन्यद्वक्तव्यम्? [¹तद्रूपेण पूर्वापरान्यरूपसंबन्धेऽपि स्फटिकवद् यदि एकोऽस्तीत्युच्यते, एवं सर्वपुंसामैक्यं प्रसज्यते, एवं ज्ञानत्वेन तत्साधारणरूपत्वात्। तद्यथा पूर्वापरकालिकयोः शब्दरूपज्ञानयोर्भिन्ना-
25 कारत्वाद् भिन्नयोरप्येकत्वमेव, तथा सर्वसत्त्वानां प्राणिगतिगतानामेकात्मता प्रसज्यते] आपद्यते, वस्तुतो भेदेऽपि विशेषाभावात्॥

इत्थं च पुनरिदमतिप्रसज्यते इत्याह चेतनेत्यादि—

P 464 चेतनाचेतने चैक्यं तयोर्येनास्तिता समा।

---

१ There is no lacuna in Mss., though a portion, now restored from T and enclosed in parenthesis in the Com., is surely wanted to fill up the gap.

यदि वा अवान्तरं भेदनिबन्धनं विशेषमपास्य किंचिदाकारकमाश्रित्य एकत्वमुच्यते तदा चेतना पुरुषधर्मः, अचेतना प्रकृत्यादिधर्मः । चकारो दोषान्तरसमुच्चये । तेऽपि एकमभिन्नं वस्तु स्याताम् । कथम् ? तयोश्चेतनाचेतनयोः येन कारणेन अस्तिता समा । सापि भावानां निजं रूपम् । समा द्वयोरपि तुल्या ।

ननु च । अत्रापि सादृश्यनिबन्धनमिष्यते एव एकत्वं वस्तुभेदेऽपि । ततोऽयमिष्ट- 5 प्रसाधनाददोष इत्याह विशेषश्चेत्यादि—

**विशेषश्च यदा मिथ्या कः सादृश्याश्रयस्तदा ॥ ६८ ॥**

दूषणान्तरद्योतने चकारः । विशेषो भेदः सर्वभावानामनियमेन यदा मिथ्या असत्यम् [ त्यः ? ], निजमेव रूपं सत्यम्, तदा कः सादृश्याश्रयः स्यात् ? किमाश्रित्य सादृश्यं व्यवस्थाप्यते ? विशेषसद्भावे हि किंचिन्मात्रसाधर्म्येण सादृश्यं स्यात् । विशेषाभावे 10 च तदेव तत् स्यान्न सदृशम् । न हि गोगवययोर्गोविशेषमननुभवन् न गवयो गोसदृशो भवेत्, अपि तु गौरेव स्यात् । अतो विशेष एव सादृश्याश्रयः । स च यदा पारमार्थिको न भवति, तदा कः सादृश्यस्य समानाकारतायाः पुंसामन्यस्य वा आश्रयो निबन्धनं वा भवेत् ? नैव कश्चिदित्यर्थः । अतो वस्तुत एव एकत्वमापतितं भवतः, न सादृश्यकृतम् । तत् कथं सिद्धसाधनाददोष इत्युच्यते ? 15

P 465

एवं कापिल[ जैन ]जैमिनीयपरिकल्पितस्य चित्स्वभावस्यात्मनः सत्त्वमसिद्धम् । उपनिषद्वादिपरिकल्पितेऽपि यथासंभवं दूषणमभिधेयमिति ॥

सांप्रतमचेतनस्य नैयायिकादिपरिकल्पितस्यात्मनः सद्व्यवहारप्रतिषेधायाह अचेतन- श्चेत्यादि—

**अचेतनश्च नैवाहमाचैतन्यात्पटादिवत् ।** 20

चेतनस्तावदात्मा उक्तक्रमेण न युज्यते । अचेतनोऽपि नैवाहमात्मा युक्त इति चकारार्थः । कुतः ? आचैतन्यात् चैतन्याभावात् । न विद्यते चेतना अस्येत्यचेतनः । तस्य भावः आचैतन्यम् । उभयपदवृद्धिः पारलौकिकादिवत् । तस्मात् । अचेतनत्वादित्यर्थः । कथमिव ? पटादिवत् । यथा पटवृक्षपर्वतादयः चैतन्यविरहादात्मा न भवन्ति, तथा अभि- मतोऽपि । कर्मकर्तृत्वादेरस्याभ्युपगमात् । अन्यथा न किंचित् प्रयोजनं तेन । न च 25 अचेतनस्य तद्युक्तम्, यथा पटादेः । यदि नाम स्वयमसावचेतनः, तथापि बुद्धेश्चेतना चेतयते, तेनायमदोषः इति पराभिप्रायं संभावयन्नाह अथ ज्ञ इत्यादि—

P 466

**अथ ज्ञश्चेतनायोगादज्ञो नष्टः प्रसज्यते ॥ ६९ ॥**

अथेति पृच्छायाम् । अथायमात्मा चेतनायोगाद् बुद्धिसमवायात् स्वयमचेतनोऽपि ज्ञो भवति । जानातीति ज्ञः इति कप्रत्ययान्तस्य रूपम् । एवमुपगम्यमाने अज्ञो नष्टः 30 प्रसज्यते । यदा तर्हि मदमूर्च्छावस्थायां चेतनानिवृत्तौ अयमात्मा अज्ञो न किंचिदपि जानाति, तदा नष्टः प्राक्तनचैतन्यसंबद्धस्वभावपरित्यागाद्विनष्टः प्रसज्यते ॥

चैतन्यसंबन्धासंबन्धकालयोरेकस्वभावत्वान्नायं दोष इति परमाशङ्कयन्नाह अथाविकृत इत्यादि—

**अथाविकृत एवात्मा चैतन्येनास्य किं कृतम् ।**

अथ चैतन्योत्पादनिरोधयोरविकृत एव अनुत्पन्नानिरुद्धस्वभाव एवात्मा । यद्येवम्, P 467 5 तर्हि चैतन्येनास्य किं कृतम्, अचेतनस्य सर्वकालमविकृतस्य सतः अस्यात्मनः चैतन्येन बुद्धिसमवायेन किं कृतम्, किमतिशयाधानमनुष्ठितम्? न किंचित् । बुद्धिसमवायेऽपि तथैवाप्रच्युतप्राच्यस्वभावस्य अवस्थानादचेतन एवात्मा । तथा च सति किमनुष्ठितं भवद्भिरित्याह—

**अज्ञस्य निष्क्रियस्यैवमाकाशस्यात्मता मता ॥ ७० ॥**

10 अज्ञस्य किंचिदपि हिताहितं ज्ञातुमशक्तस्य निष्क्रियस्य निर्गतो बहिर्भूतः क्रियाया इति निष्क्रियः । तस्य सर्वप्रतीकाररहितस्य अनाधेयातिशयतया असंस्कर्तव्यस्य । अथवा सर्वकर्मणि शक्तिविकलस्य गमनाधिक्रियाशून्यस्य वा आकाशस्य प्रकृतानुपयोगित्वादाकाशकल्पस्य । एवं सति आत्मता आत्मस्वभावव्यवस्था व्यवस्थापिता । एतच्च स्वमतेनोदाहरणम् । यथा निःस्वभावतया सर्वक्रियाशून्यं प्रज्ञप्तिसन्मात्रमाकाशम्, तथा आत्मापीत्यर्थः । परमतेनापि 15 वा । यथा च न कर्मकर्त्रादिरूपमाकाशमचेतनत्वादक्रियत्वाच्च, तथा आत्मापीति भावः ॥

इदानीं पुनरन्यथा आत्मप्रतिषेधबाधकं परमतेनोत्थापयन्नाह न कर्मेत्यादि—

**न कर्मफलसंबन्धो युक्तश्चेदात्मना विना ।**

यदि न कश्चिदेकः परलोकी स्यात्, तदा तेनात्मना परलोकगामिना विना P 468 अन्तरेण कर्मफलसंबन्धोऽयुक्तः । कर्म शुभाशुभम्, फलं च तस्यैव इष्टानिष्टलक्षणम्, 20 तयोः संबन्धः । कर्मणः कृतस्य फलेन वा संबन्धः । येनैव कृतं कर्म, तस्यैव तत्फलप्रतिलम्भो नान्यस्येति । न युक्तो न घटते । इष्यते च परलोके कर्मफलसंबन्धः । तत्र च सौगतानामप्यविवादः । तथा च सूत्रम्[1]—

अनेनैव कृतं कर्म, कोऽन्यः प्रत्यनुभविष्यति? न हि भिक्षवः कृतोपचितानि कर्माणि पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातौ । उपात्तेष्वेव 25 स्कन्धधात्वायतनेषु......इति विस्तरः ।

उक्तं[1] च—

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ इति ।

---

१ This quotation in prose and the following in verse occur almost at the end of every story in Avadānas, e. g., Avadāna-Śataka, Divyāvadāna etc.

ततः कर्मफलसंबन्धोऽनिवारितो भवतामपि । तस्मादवश्यमङ्गीकर्तव्य आत्मा । अन्यथा सर्वमेतदसंगतं स्यात् । कथमसति आत्मनि कर्मफलसंबन्धो घटते इत्याह कर्म कृत्वेत्यादि—

**कर्म कृत्वा विनष्टे हि फलं कस्य भविष्यति ॥ ७१ ॥** P 469

हि यस्मात् कर्म कृत्वा कर्मोत्पाद्य शुभाशुभलक्षणम् । विनष्टे निरुद्धे सति 5 कर्मकर्तरि । फलं कस्य भविष्यति । आत्मनोऽसत्त्वे परलोकगामिनः कस्यचिदभावात् । येन चित्तक्षणेन कृतं कर्म, तस्य क्षणिकतया तत्कर्मक्रियाकाले निवृत्तत्वात्, कृतस्य कर्मणः फलं सुगतौ दुर्गतौ वा सुखदुःखात्मकं कस्य भविष्यति उत्पत्स्यते? नैव कस्यचित् स्यात् । परलोके च कृतकर्मण एव फलयोगिनोऽन्यस्य कस्यचिदुत्पादात्, इति कृतविप्रणाशोऽकृताभ्यागमश्च स्यात् ॥ 10

उपलक्षणं चैतत् । स्मृतिप्रत्यभिज्ञानसंशयनिर्णयस्वयंनिहितप्रत्यनुमार्गणदृष्टार्थकुतूहलविरमणकार्यकारणभावतदधिगतप्रमाणबन्धमोक्षादयोऽपि न स्युः चेद्यदि मतम्, तन्न युक्तमित्याह द्वयोरित्यादि—

**द्वयोरप्यावयोः सिद्धे भिन्नाधारे क्रियाफले ।**

द्वयोरप्यावयोः । आत्मवादिनो भवतः, मम च नैरात्म्यवादिनः । सिद्धे निश्चिते । 15 के सिद्धे ? आह—भिन्नाधारे क्रियाफले कर्म क्रिया अस्मिन् भवे, तस्याः फलं परलोके । ते भिन्नाधारे नानाधिकरणे सिद्धे । तथाहि—न येनैव शरीरेण तस्मिन् जन्मनि कर्म करोति, तेनैव प्रेत्य फलमुपभुङ्क्ते । अतः अन्यदेव कर्मकर्तृ, तदन्यच्च फलभोक्तृ । अतो भिन्नाधारे P 470 क्रियाफले भवतः । अत्र च अविप्रतिपत्तिरावयोः । स्यादेतत्—आत्मव्यापारमन्तरेण ते एव कर्तृत्वोपभोक्तृत्वे न स्यातामित्यत्राह— 20

**निर्व्यापारश्च तत्रात्मेत्यत्र वादो वृथा ननु ॥ ७२ ॥**

निर्व्यापारो व्यापाररहितः । तत्र तयोः कर्मक्रियाफलोपभोगयोः आत्मा निष्क्रियत्वादचेतनत्वात् । नित्यत्वान्न क्वचिदपि क्रियायां समर्थः । यदप्युक्तम्—

ज्ञानमात्रादिसंबन्धः कर्तृत्वं तस्य भण्यते ।
सुखदुःखादिसंवित्तिसमवायस्तु भोक्तृता ॥ इति, 25

[ तत्त्वसंग्रह–१७६ ]

तदपि पूर्वापरकालयोरविचलितस्वभावस्य उक्तक्रमेण न संगच्छते । इति हेतोरत्रात्मनि निर्व्यापारे वादो विवादो वृथा निष्फलः । यदर्थमसावङ्गीकृतः, तत्र तस्यानुपयोगित्वात् । नन्विति परसंबोधने ॥

ननु यदि आत्मा न भवेत्, कथं तर्हि कृतविप्रणाशादिदोषो न स्यात् ? ततो न 30 वृथा तद्वाद इत्याह हेतुमानित्यादि—

**हेतुमान् फलयोगीति दृश्यते नैष संभवः ।**

P 471 यो हेतुमान् कर्मणा युक्तः, स एव फलयोगी फलसंबद्धः इति एवमेष संभवो न दृश्यते, नोपलभ्यते । यस्मात्—

अन्य एव मृतो लोके जायते अन्य एव हि ।

ततो हेतुमतः फलयोगो न दृश्यते । एतर्त्ताहि कथं नीयते यदुक्तम्–अनेनैव कृतं 5 कर्म, कोऽन्यः प्रत्यनुभविष्यतीति ? अत्राह संतानस्येत्यादि—

संतानस्यैक्यमाश्रित्य कर्ता भोक्तेति देशितम् ॥ ७३ ॥

संतानस्य उत्तरोत्तरानेकक्षणपरंपरालक्षणस्य कार्यकारणभावे न प्रवर्तमानस्य ऐक्यमाश्रित्य अनेकेषु एकत्वं लोकाध्यवसायवशादारोपितमेव निमित्तीकृत्य कर्ता भोक्ता इति देशितम्–य एव कर्मणः कर्ता स एव तत्फलस्योपभोक्ता च । इत्येतद्देशितत्वेऽपि नेयाभि- 10 प्रायवशात् भगवता प्रकाशितम् । अन्यथा कर्मफलोच्छेदं मन्येत जनः । न तु तावता उभयलोकानुगामिनः सत्त्वमाख्यातम् । अत एव च तत्रैवोक्तम्–उपात्तेष्वेव स्कन्धधात्वायतनेषु विपच्यन्ते इति । तथा चेतना कर्म, चेतयित्वा कर्म इति वचनाच्च । तदुक्तम्—

P 472 कर्मजं लोकवैचित्र्यं चेतना तत्कृतं च तत् ।

चेतना मानसं कर्म तज्जे वाक्कायकर्मणी ॥ इति ।

15 [ अभि. को. ४. १ ]

अन्यत्राप्युक्तम्—

सत्त्वलोकमथ भाजनलोकं

चित्तमेव रचयत्यतिचित्रम् ।

कर्मजं हि जगदुक्तमशेषं

20 कर्म चित्तमवधूय न चास्ति ॥ इति ।

[ म. अ. ६.८९ ]

तस्मान्न चित्तविनिर्मुक्तमन्यत् कर्मास्ति । तच्च कुशलाकुशलं चित्तमुत्पद्य निरुध्यमानं स्वोपादेयचित्तक्षणे कुशलाकुशलादिसंस्कारविशेषवासनामादधाति । तदपि तदाहितवासनमुत्तरोत्तरतदभिसंस्कृतक्षणपरंपराविच्छेदतः संतानप्रवर्तमानं परिणतिविशेषमुपगच्छत् 25 कर्मविशेषानुरूपं तथाविधं सुखादिस्वभावं चित्तात्मकमेव फलमभिनिर्वर्तयति परलोके ।

P 473 तद्यथा क्षितिबीजादयः परस्परोपसर्पणप्रत्ययविशेषात् समधिगतातिशयतया प्रथमक्षणोपनिपातिनः स्वोपादेयभूतद्वितीयक्षणकलापे कार्योत्पादानुगुणविशेषोत्पादनद्वारेण तदुत्तरोत्तरतारतम्यमुपजनयन्तः संततिपरिणामविशेषादन्त्यक्षणलक्षणं प्रकर्षपर्यन्तमासादयन्तो बीजानुरूपशालिकोद्रवाङ्कुरमुत्पादयन्ति । यथा च लाक्षारसपरिभावितं मातुलुङ्गादिबीजमुप्तं तत्सं- 30 स्कारपरंपराप्रवृत्तेः तत्पुष्पादिषु रक्ततामुत्पादयति, न च तत्र कश्चित् पूर्वापरकालयोरेकोऽनुगामी समस्ति । तच्च कुशलाकुशलसमानस्यापि (?) कल्पनोपस्थापितत्वात् नोपन्यासो युक्तः । तदुक्तम्–

---

१ Quoted in Sarvadarśanasaṃgraha; source not traced.

यस्मिन्नेव हि संताने आहिता कर्मवासना।
फलं तत्रैव बध्नाति कर्पासे रक्तता यथा॥ इति।

तस्माद्यथा बीजादिषु आत्मानमन्तरेणापि प्रतिनियमेन कार्यं तदुत्पत्तिश्च क्रमेण भवति, तथा प्रकृतेऽपि परलोकगामिनमेकं विनापि कार्यकारणभावस्य नियामकत्वात् प्रतिनियतमेव फलम्, क्लेशकर्माभिसंस्कृतस्य संतानस्य अविच्छेदेन प्रवर्तनात् परलोके फलप्रतिलम्भोऽभिधीयते, इति नाकृताभ्यागमो न कृतविप्रणाशो बाधकम्। ततो नात्मानमन्तरेण कर्मफलसंबन्धो न युज्यते। यथा च सत्येवात्मनि स न घटते, तथा सप्रचयमुच्यमानमतिविस्तरं स्यादिति नेह प्रतन्यते। आह च—

नात्मास्ति स्कन्धमात्रं तु क्लेशकर्माभिसंस्कृतम्।
अन्तराभवसंतत्या कुक्षिमेति प्रदीपवत्॥ इति॥

[ अभि. को. ]

पुद्गलतद्वादिभिस्तत्त्वान्यत्वप्रतिषेधपक्षाभ्युपगमात् स्वयमेव वस्तुत्वं प्रतिषिद्धम्। वस्तुनो हि तत्त्वान्यत्वप्रकारानतिक्रमात्, परस्परपरिहारवतोरेकप्रतिषेधापरविधिनान्तरीयकत्वात्। भारहारादिसूत्रमपि समर्थितमत्रार्थे। तस्मादाभिप्रायिकीं भगवतो देशनामजानद्भिः परिकल्पितोऽसौ, न वस्तुसत्। वस्तुत्वाभ्युपगमे नान्यत्वम्, इत्यात्मनो निराकरणेनैव निरस्तः, इति न पुनर्विशेषेण प्रतिषेधितः। [1]उक्तं चैतद्भगवता—

इति हि भिक्षवः अस्ति कर्म, अस्ति फलम्। कारकस्तु नोपलभ्यते य इमान् स्कन्धान् विजहाति, अन्यांश्च स्कन्धानुपादत्ते, अन्यत्र धर्मसंकेतात्। अत्रायं धर्मसंकेतः, यदस्मिन् सति इदं भवति, अस्योत्पादादिदमुत्पद्यते इति॥

एतेन भगवतैव इदंप्रत्ययतामात्रलक्षणः कार्यकारणभावोऽपि दर्शित एव। अयमपि च संतानस्येत्यनेन [ संतान एक इत्यनेन ] यथाव्यवहारमनिरूपितस्वरूपः सूचित एव, संतानवचनेन इदंप्रत्ययतामात्रस्याभ्युपगमात्। अन्यथा संतान एव न स्यात्। तेन वास्तवकार्यकारणभावभाविनो दोषा नावलीयन्ते। इदमेव आचार्यपादैरप्युक्तम्—

अशक्तं सर्वमिति चेद् बीजादेरङ्कुरादिषु।
दृष्टा शक्तिर्मता सा चेत्संवृत्यास्तु यथा तथा॥ इति।

कार्यकारणभावप्रतिनियमादेव स्मृत्यभावोऽपि निरस्तः। एकस्यानुगमात्मनोऽभावात् न स्मर्ता कश्चिदिह विद्यते, किं तर्हि स्मरणमेव केवलमारोपवशात् स्मर्यमाणवस्तुविषयम्। न च अत्र स्मर्तुरभावेऽपि कश्चिद् व्याघातः। अनुभूते हि वस्तुनि विज्ञानसंताने स्मृतिबीजाधानात् कालान्तरेण संततिपरिपाकहेतोः स्मरणं नाम कार्यमुत्पद्यते। एवं प्रत्यभिज्ञानादयोऽपि द्रष्टव्याः। अतिविस्तरभयात् प्रत्येकमिह न प्रतिविधीयन्ते इति तत्समर्थनमन्यत्रैव विस्तरेणावधार्यमिति॥

[1] Cf. Sūtrālaṁkāra, p. 158 and Paramārthaśūnyatāsūtra.

P 476 सर्वमेतत् संवृतिसत्यमुपादाय समर्थितम् । परमार्थे तु सर्वधर्माणां निःस्वभावत्वात् सर्वविकल्पोपरमाच्च न किंचिदुत्पद्यते वा निरुध्यते वा सात्मकमनात्मकं वा । नापि विचार्यमाणं कर्म तत्फलं वा, नापि इहलोको न परलोको वा न कश्चिदस्ति, कल्पना-विठपितत्वात् । तस्मात् सर्वमेतत् प्रतिबिम्बसंनिभं निःस्वभावमुत्पद्यते निरुध्यते च । 5 कार्यकारणं च सात्मकं निरात्मकं च नित्यमनित्यं चाभिधीयते । स्वप्नवत् कर्मकर्तृत्वम्, तत्फलोपभोगः, इहलोकः, परलोकः, सुगतिदुर्गतिगमनं च कल्पनानामप्रहाणात् । इति सर्वं सुस्थम् । यद्वक्ष्यति—

एवं न च निरोधोऽस्ति न च भावोऽस्ति तत्त्वतः ।
अजातमनिरुद्धं च तस्मात्सर्वमिदं जगत् ॥
10 स्वप्नोपमास्तु गतयो विचारे कदलीसमाः । इत्यादि ।

[ बोधि. ९.१५१–५२ ]

उक्तं च—

कर्ता स्वतन्त्रः कर्मापि त्वयोक्तं व्यवहारतः ।
परस्परापेक्षिकी तु सिद्धिस्तेऽभिमतानयोः ॥
15 न कर्तास्ति न भोक्तास्ति पुण्यापुण्यं प्रतीत्यजम् ।
यत्प्रतीत्य न तज्जातं प्रोक्तं वाचस्पते त्वया ॥ इति ।

[ चतुः २.८–९ ]

P 477 यथा निरात्मानश्च सर्वे धर्माः कर्मफलसंबन्धाविरोधश्च, निःस्वभावता च, यथा दृष्टसर्वधर्माविरोधश्च, तथा पितापुत्रसमागमे देशितम् । तदुक्तम्[1]—

20 भगवानाह—एवमेव महाराज बालोऽश्रुतवान् पृथग्जनश्चक्षुषा रूपाणि दृष्ट्वा सौमनस्यस्थानीयानि अभिनिविशते । सोऽभिनिविष्टः समनुनीयते । समनुनीतः संरज्यते । संरक्तो रागजं कर्माभिसंस्करोति त्रिविधं कायेन, चतुर्विधं वाचा, [ त्रिविधं मनसा ] । तच्च कर्माभिसंस्कृतमादित एव क्षीणं निरुद्धं विगतं विपरिणतं न पूर्वां दिशं निश्रित्य तिष्ठति, न दक्षिणाम्, न पश्चिमाम्, नोत्तराम्, नोर्ध्वम्, नाधः, नानुविदिशम्, 25 नेह, न तिर्यक्, नोभयमन्तरा । तत् पुनः कालान्तरेण मरणकालसमये प्रत्युपस्थिते जीवितेन्द्रियनिरोधे आयुषः परिक्षयात् तत्सभागस्य कर्मणः क्षीणत्वात् चरमविज्ञा-नस्य निरुध्यमानस्य मनस आरम्बणीभवति । तद्यथापि नाम शयितविबुद्धस्य जनपद-

P 478 कल्याणी । इति हि महाराज चरमविज्ञानेनाधिपतिना तेन च कर्मारम्बणेन औपपत्त्यंशिकं द्वयप्रत्ययं प्रथमं विज्ञानमुत्पद्यते । यदि वा नारकेषु, यदि वा तिर्यग्योनौ, यदि वा यमलोके, 30 यदि वा आसुरकाये, यदि वा मनुष्येषु, यदि वा देवेषु । तस्य च प्रथमविज्ञानस्य औप-पत्त्यंशिकस्य समनन्तरनिरुद्धस्य अनन्तरं सभागा चित्तसंततिः प्रवर्तते, यत्र विपाकस्य

---

१ ŚS. p. 135.

प्रतिसंविदा प्रज्ञायते । तत्र यश्चरमविज्ञानस्य निरोधः, तत्र च्युतिरिति संख्या भवति, यः प्रथमविज्ञानस्य प्रादुर्भावः, तत्रोपपत्तिरिति । इति महाराज न कश्चिद्धर्मोऽस्माल्लोकात् परलोकं गच्छति, च्युत्युपपत्ती प्रज्ञायेते । तच्च महाराज चरमविज्ञानमुत्पद्यमानं न कुतश्चिदागच्छति, निरुध्यमानं न क्वचिद्गच्छति । कर्माप्युत्पद्यमानं न कुतश्चिदागच्छति, निरुध्यमानं न क्वचिद्गच्छति । [ प्रथमविज्ञानमप्युत्पद्यमानं न कुतश्चिदागच्छति, निरुध्यमानं न क्वचिद्गच्छति ] । तत् कस्य हेतोः ? स्वभावविरहितत्वात् । चरमविज्ञानं चरमविज्ञानेन शून्यम्, कर्म कर्मणा शून्यम्, प्रथमविज्ञानं प्रथमविज्ञानेन शून्यम्, च्युतिश्च्युत्या शून्या, उपपत्तिरुपपत्त्या शून्या । कर्मणां च अवन्ध्यता प्रज्ञायते, विपाकस्य च प्रतिसंवेदना । न तत्र कश्चित् कर्ता, न भोक्ता, अन्यत्र नामसंकेतात् ॥ इति विस्तरः ॥ 　5　P 479

एवं द्वेषमोहाभ्यामपि कर्माभिसंस्करणं यथायोग्यं वाच्यमिति ॥　10

शालिस्तम्बसूत्रेऽप्युक्तम्[1]—

पुनरपरं तत्त्वेऽप्रतिपत्तिर्मिथ्याप्रतिपत्तिरज्ञानमविद्या । एवमविद्यायां सत्यां त्रिविधाः संस्कारा अभिनिर्वर्तन्ते पुण्योपगाः, अपुण्योपगाः आनञ्ज्योपगाश्च । इमे उच्यन्ते अविद्याप्रत्ययाः संस्कारा इति । पुण्योपगानां संस्काराणां पुण्योपगमेव विज्ञानं भवति, अपुण्योपगानां संस्काराणामपुण्योपगमेव विज्ञानं भवति, आनञ्ज्योपगानां संस्काराणामानञ्ज्योपगमेव विज्ञानं भवति । इदमुच्यते संस्कारप्रत्ययं विज्ञानमिति । तदेव विज्ञानप्रत्ययं नामरूपम् । नामरूपविवृद्ध्या षड्भिरायतनद्वारैः कृत्यक्रियाः प्रवर्तन्ते, तन्नामरूपप्रत्ययं षडायतनमुच्यते । षड्भ्य आयतनेभ्यः षट् स्पर्शकायाः प्रवर्तन्ते । अयं षडायतनप्रत्ययः स्पर्श इत्युच्यते । यज्जातीयः स्पर्शो भवति तज्जातीया वेदना प्रवर्तते । इयं स्पर्शप्रत्यया वेदनेत्युच्यते । यस्तां वेदयति, विशेषेणास्वादयति, अभिनन्दयति, अध्यवस्यति, अधितिष्ठति, सा वेदनाप्रत्यया तृष्णेत्युच्यते । आस्वदना, अभिनन्दना, अध्यवसायस्थानम्, आत्मप्रियरूपसातरूपैर्वियोगो मा भवत्विति अपरित्यागो भूयो भूयश्च प्रार्थना, इदं तृष्णाप्रत्ययमुपादानमित्युच्यते । एवं प्रार्थयमानः पुनर्भवजनकं कर्म समुत्थापयति कायेन वाचा मनसा, स उपादानप्रत्ययो भव इत्युच्यते । तत्कर्मनिर्जातानां पञ्चस्कन्धानामभिनिर्वृत्तिर्या, सा भवप्रत्यया जातिरित्युच्यते । या (यो) जात्यभिनिर्वृत्तानां स्कन्धानामुपचयपरिपाकाद्विनाशो भवति, तदिदं जातिप्रत्ययं जरामरणमित्युच्यते । पेयालं । तत्र विज्ञानं बीजस्वभावत्वेन हेतुः । कर्म क्षेत्रस्वभावत्वेन हेतुः । अविद्या तृष्णा च क्लेशस्वभावत्वेन हेतुः । कर्मक्लेशा विज्ञानबीजं संजनयन्ति । तत्र कर्म विज्ञानबीजस्य क्षेत्रकार्यं करोति । तृष्णा विज्ञानबीजं स्नेहयति । अविद्या विज्ञानबीजमवकिरति । असतामेषां प्रत्ययानां विज्ञानबीजस्याभिनिर्वृत्तिर्न भवति । तत्र कर्मणां नैवं भवति—अहं विज्ञानबीजस्य क्षेत्रकार्यं करोमि । 　15　P 480　20　25　30　P 481

[1] ŚS. p. 121–123. See also N. A. Sastri's edition, pp. 11–18 with slight variations.

तृष्णाया अपि नैवं भवति—अहं विज्ञानबीजं स्नेहयामीति। अविद्याया अपि नैवं भवति—अहं विज्ञानबीजमवकिरामीति। विज्ञानबीजस्यापि नैवं भवति—अहमेभिः प्रत्ययैर्जनितमिति। अपि तु विज्ञानबीजं कर्मक्षेत्रप्रतिष्ठितं तृष्णास्नेहाभिस्यन्दितम् अविद्यावकीर्णं विरोहति, नामरूपाङ्कुरस्याभिनिर्वृत्तिर्भवति। स च नामरूपाङ्कुरो न स्वयंकृतो न परकृतो नोभयकृतो 5 नेश्वरनिर्मितो न कालपरिणामितो न चैककारणाधीनो नाप्यहेतुसमुत्पन्नः। अथ च माता-पितृसंयोगादृतुसमवायादन्येषां च प्रत्ययानां समवायादास्वादनानुप्रबद्धं विज्ञानबीजं तत्र-तत्रोपपत्त्यायतनप्रतिसंधौ मातुः कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति अस्वामिकेषु धर्मेषु अम-मेषु अपरिग्रहेषु अप्रत्यर्थिकेषु आकाशसमेषु मायालक्षणस्वभावेषु हेतुप्रत्ययानामवैकल्यात्। पेयालं। न तत्र कश्चिद्धर्मोऽस्माल्लोकात् परलोकं संक्रामति। अस्ति च कर्मफलम्, अस्ति P 482 10 च विज्ञप्तिः, हेतुप्रत्ययानामवैकल्यात्। पेयालं। यथा अग्निरुपादानवैकल्यान्न ज्वलति, उपादानावैकल्याच्च ज्वलति, एवमेव कर्मक्लेशजनितं विज्ञानबीजं तत्रतत्रोपपत्त्यायतनप्रति-संधौ मातुः कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति अस्वामिकेषु धर्मेषु अममेषु अपरिग्रहेषु अप्रत्यर्थिकेषु आकाशसमेषु मायालक्षणस्वभावेषु हेतुप्रत्ययानामवैकल्यात्। एवमाध्यात्मि-कस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः॥

15 तत्र आध्यात्मिकः प्रतीत्यसमुत्पादः पञ्चभिः कारणैर्द्रष्टव्यः। कतमैः पञ्चभिः? न शाश्वततः, नोच्छेदतः, न संक्रान्तितः, परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः, तत्सदृशानु-प्रबन्धतश्चेति। कथं न शाश्वततः? यस्मादन्ये मारणान्तिकाः स्कन्धाः, अन्ये औपपत्त्यं-शिकाः स्कन्धाः प्रादुर्भवन्ति। न तु य एव मारणान्तिकाः स्कन्धाः, त एव औपपत्त्यं-शिकाः प्रादुर्भवन्ति। अतो न शाश्वततः। कथं नोच्छेदतः? न च पूर्वनिरुद्धेषु मारणान्ति-P 483 20 केषु स्कन्धेषु औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति, नाप्यनिरुद्धेषु। अपि तु मारणान्तिकाः स्कन्धा निरुध्यन्ते, तस्मिन्नेव च समये औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति, तुलादण्डो-न्नामावनामवत्। अतो नोच्छेदतः। कथं न संक्रान्तितः? विसदृशात् सत्त्वनिकायाद्विस-भागाः स्कन्धा जात्यन्तरेऽभिनिर्वर्तन्ते। अतो न संक्रान्तितः। कथं परीत्तहेतुतो विपुल-फलाभिनिर्वृत्तितः? परीत्तं कर्म क्रियते, विपुलफलविपाकोऽनुभूयते। अतः परीत्तहेतुतो 25 विपुलफलाभिनिर्वृत्तितः। कथं तत्सदृशानुप्रबन्धतः? यथावेदनीयं कर्म क्रियते, तथावेदनीयो विपाकोऽनुभूयते। अतस्तत्सदृशानुप्रबन्धतः। एवमाध्यात्मिकः प्रतीत्यसमुत्पादः पञ्चभिः [ कारणैः—आकारैः ] द्रष्टव्यः॥ इति विस्तरः॥

तदेवमात्मादिविरहेऽपि कर्मफलसंबन्धोऽविकलः सूत्रेषु भगवता स्वयमुपदर्शित इत्युपदर्शितं भवति। इति नैकस्योभयानुवर्तिनोऽभावेऽपि किंचिद्विरुध्यते इति॥

30 यदि कथंचिदपि नास्त्येवात्मा, कथं तर्हि—

आत्मा हि आत्मनो नाथः को नु नाथः परो भवेत्।
आत्मना हि सुदान्तेन स्वर्गं प्राप्नोति पण्डितः॥

[ =धम्मपद ]

इति गाथायामुक्तम् ? चित्तमेव अहंकारसंनिश्रयतया अस्यामात्मशब्देनोक्तम् । अन्यत्र सूत्रे—

चित्तस्य दमनं साधु चित्तं दान्तं सुखावहम् ।

[ =धम्मपद ]

इति चित्तस्य दमनवचनात् । तदपि च आत्मदृष्ट्यभिनिविष्टानामन्यत्रात्मग्राहपरि- 5 P 484
कल्पविच्छेदार्थं नेयार्थतया संवृत्या चित्तमात्मेति प्रकाशितं न तु परमार्थतः । एतेन यदुक्त-मार्यलङ्कावतारे—

पुद्गलः संततिः स्कन्धाः प्रत्यया अणवस्तथा ।
प्रधानमीश्वरः कर्ता चित्तमात्रं वदाम्यहम् ॥

[ लङ्का. २·१३९; १०·१३३ ] 10

इति, तदपि व्याख्यातं भवति । यतः तदपि च अन्यत्र पुद्गलाद्यभिनिवेशबाधनाय वचनम् । न तु तावता चित्तस्य परमार्थसत्त्वमुक्तम् । एवमन्यत्रापि स्कन्धादिष्वात्मदेशना नेयार्था । अतश्चित्तमपि वस्तुतो नाहंप्रत्ययस्य विषयः ॥

भवतु वा चित्तं परमार्थसत् । तथापि न वस्तुतः तदहंकारगोचर इत्युपदर्शयन्नाह अतीतेत्यादि— 15

अतीतानागतं चित्तं नाहं तद्धि न विद्यते ।

त्रिधा हि चित्तं संभवति परिकल्पमुपादाय अतीतमनागतं प्रत्युत्पन्नं च । तत्र P 485
अतीतानागतं नष्टाजातं चित्तं नाहं न अहंदर्शनविषयः । कुतः ? हिर्यस्मात् । तदतीता-नागतं चित्तं न विद्यते, न संप्रत्यस्ति, नष्टाजातत्वात् । यदतीतं तत् क्षीणं निरुद्धं विगतं विपरिणामितम् । यदनागतम्, तदप्यसंप्राप्तमिति । प्रत्युत्पन्नं तर्हि चित्तमहं भविष्य- 20
तीत्यत आह—

अथोत्पन्नमहं चित्तं नष्टेऽस्मिन्नास्त्यहं पुनः ॥ ७४ ॥

यथा उत्पन्नं वर्तमानं चित्तमहमस्तु, तदपि न युक्तम् । यतो नष्टेऽस्मिन्नास्त्यहं पुनः, अस्मिन् प्रत्युत्पन्ने चित्ते नष्टे द्वितीयक्षणे अतीते सति नास्त्यहं पुनः, पश्चादहं-प्रत्ययस्य विषयो नेष्टः स्यात् । प्रत्युत्पन्नस्य स्थितिर्नोपलभ्यते । तत् कुतश्चित्तमा- 25
लम्ब्यतां येन आलम्बनं स्यात् ? अतो न चित्तालम्बनोऽपीति निरालम्बन एवायमहं-प्रत्यय उत्पद्यते ॥

एवमात्मनोऽसत्त्वात् नात्मा, त्र्यध्ववर्तिनश्चित्तस्य च तद्विषयत्वात् । नापि चित्तमहं-कारस्य विषय इति प्रसाध्योपसंहरन्नाह यथैवेत्यादि—

यथैव कदलीस्तम्भो न कश्चिद्भागशः कृतः । 30
तथाहमप्यसद्भूतो मृग्यमाणो विचारतः ॥ ७५ ॥

यथैव कदलीस्तम्भो रम्भादण्डखण्डम्, भागशः प्रत्यवयवशः कृतोऽवधूतो न P 486 कश्चित् न वस्तुसन् प्राप्यते, तथा अहमप्यसद्भूतः कदलीस्तम्भवत्। अहमपि अहंप्रत्ययस्य विषयोऽपि असद्भूतः अवस्तुभूतः, वन्ध्यातनयवत्। न कश्चिद्विषयोऽस्यास्तीति भावः। कथम्? मृग्यमाणो विचारतः निरूपणतः॥

5 पुनरन्यद्बाधकमात्मप्रतिषेधे प्रसञ्जयन्नाह यदीत्यादि–

**यदि सत्त्वो न विद्येत कस्योपरि कृपेति चेत्।**

यदि सर्वथैव सत्त्वः आत्मा पुद्गलो वा विचार्यमाणो न विद्येत, न स्यात्, तदा कस्योपरि कृपा करुणा बोधिसत्त्वानां भवेत्, सत्त्वमन्तरेण किमालम्ब्य प्रवर्तेत? करुणा च सम्यक्संबोधिसाधनम्, तत्पूर्वकमेव संभारनिदानेषु दानादिषु प्रवर्तनात्। अतः करुणा-10 पुरःसराः सर्वे बुद्धधर्माः प्रवर्तन्ते। तथा चोक्तमार्यधर्मसंगीतौ[1]—

अथ खलु आर्यावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्–न भगवन् बोधिसत्त्वेन अतिबहुषु धर्मेषु शिक्षितव्यम्। एक एव धर्मो बोधिसत्त्वेन स्वाराधितः कर्तव्यः P 487 सुप्रतिविद्धः। तस्य करतलगताः सर्वे बुद्धधर्मा भवन्ति। तद्यथा–येन राज्ञश्चक्रवर्तिनश्चक्र-रत्नं गच्छति, तेन सर्वबलकायो गच्छति। एवमेव भगवन् येन बोधिसत्त्वस्य महाकरुणा 15 गच्छति, तेन सर्वे बुद्धधर्मा गच्छन्ति। तद्यथा भगवन् जीवितेन्द्रिये सति अन्येषामिन्द्रियाणां प्रवृत्तिर्भवति, एवमेव भगवन् महाकरुणायां सत्यां बोधिकारकाणां धर्माणां प्रवृत्तिर्भवतीति॥

आर्यगयाशीर्षे चोक्तम्—

किमारम्भा मञ्जुश्रीः बोधिसत्त्वानां चर्या, किमधिष्ठाना? मञ्जुश्रीराह–महाकरुणा-रम्भा देवपुत्र बोधिसत्त्वानां चर्या सत्त्वाधिष्ठाना॥ इति विस्तरः॥

20 तस्मादवश्यं प्रथमतः सत्त्वालम्बना करुणाभ्युपगन्तव्या दुःखितसत्त्वाधिष्ठानेन समु-त्पत्तेः। सत्त्वाभावे च सा न स्यादिति चेत्, एवं मन्यसे यदि, तदा नैतद्वक्तव्यमित्याह कार्यार्थमित्यादि–

**कार्यार्थमभ्युपेतेन यो मोहेन प्रकल्पितः॥ ७६॥**

कार्यमभिमतसाध्यं पुरुषार्थ इत्युच्यते। तदर्थमभ्युपेतेन स्वीकृतेन मोहेन संवृत्या 25 यः प्रकल्पितः समारोपितः सत्त्वः, तस्योपरीत्यर्थः। तथाहि सकलकल्पनाजालरहितं P 488 सर्वावरणविनिर्मुक्तं परमपुरुषार्थतया बुद्धत्वमिह साध्यम्। तच्च सर्वधर्मानुपलम्भमन्तरेण नाधिगम्यते। स च प्रज्ञाप्रकर्षगमनात् संपद्यते। तच्च सादरनिरन्तरदीर्घकालाभ्यासादुप-जायते। तदारम्भश्च करुणावशादुत्पद्यते। सा च प्रथमतो दुःखितसत्त्वेषु प्रवर्तमाना संभारारम्भनिदानमुपपद्यते इति कार्यार्थं मोहस्य संवृतिसत्यरूपस्याभ्युपगमः। ततः प्रथमतः 30 सत्त्वालम्बनैव करुणा, ततः परं धर्मालम्बना, अनालम्बना च। अयमभिप्रायः–न सर्वथा सत्त्वस्याभावः। स्कन्धादयो हि संवृत्या आत्मशब्देनोच्यन्ते। यथोक्तं भगवता—

१ ŚS p. 151.

ये केचिद्भिक्षवः श्रमणा वा ब्राह्मणा वा आत्मेति समनुपश्यन्तः समनुपश्यन्ति इमानेते( तान्? ) पञ्चोपादानस्कन्धान् । इति ।

ततो यदि नाम प्रज्ञया निरूपयतः परमार्थतः सत्त्वानुपलम्भः, तथापि संवृत्या न निषिध्यते इति । तदुक्तम्—

यतः प्रज्ञा तत्त्वं भजति करुणा संवृतिमतः 5
तवाभून्निःसत्त्वं जगदिति यथार्थं विमृशतः ।
यदा चाविष्टोऽभूर्दशबलजनन्या करुणया
तदा तेऽभूदार्ते सुत इव पितुः प्रेम जगति ॥ इति ।

[ रत्नदासविरचितं गुणपर्यन्तस्तोत्रम् — ३३ ]

चतुःस्तवेऽपि— 10

सत्त्वसंज्ञा च ते नाथ सर्वथा न प्रवर्तते । P 489
दुःखार्तेषु च सत्त्वेषु त्वमतीव कृपात्मकः ॥ इति ।

[ चतुः—१.९ ]

तस्मादमी रूपादय एव संवृत्या सत्त्वशब्देनोच्यन्ते । इति न करुणा निर्विषया ॥

ननु परमार्थतः सत्त्वाभावे कस्य तत् कार्यम्, इति कथं तत्साधनाय कस्यचित् 15 प्रवृत्तिरित्यभिसंधाय आह कार्यमित्यादि—

कार्यं कस्य न चेत्सत्त्वः सत्यमीहा तु मोहतः ।

न चेत् सत्त्व इति । यदि सत्त्वो नास्ति, तदा एकस्यानुयायिनोऽभावात् रूपादीनां च उत्पन्नविनाशित्वात् कार्यं कस्य? न कस्यचित् स्यादित्यर्थः । सत्यमित्यभ्युपगमे इति । एवमेव एतन्मतमेव अस्माकम्—नैव कस्यचित् परमार्थतः कार्यम्, अस्वामिकत्वात् 20 सर्वधर्माणाम् । यद्येवम्, कथं तर्हि तत्साधनाय प्रथमतः प्रवृत्तिरिति चेत्, ईहा तु मोहतः । ईहा चेष्टा पुनस्तत्कार्यार्थितया व्यापारः मोहात् । ममैव तत् कार्यं भविष्यतीत्येकत्वाध्यवसायेन सत्त्वाभावेऽपि संवृत्या मायास्वभावतया । वस्तुतो निरीहत्वात् सर्वधर्माणामन्यत्र प्रतीत्यसमुत्पादात् । तदुक्तम्—

निरीहा वशिकाः शून्या मायावत्प्रत्ययोद्भवाः । 25
सर्वधर्मास्त्वया नाथ निःस्वभावाः प्रकाशिताः ॥ इति ।

[ चतुः—२.२२ ]

तस्मात् संवृतेरेव कार्यार्थव्यापारः । ननु च मोहो नाम अविद्यास्वभावतया सर्वथैव अनुपादेयः । तत् कथं पुनस्तस्यैव स्वीकारः इत्यत आह दुःखेत्यादि— P 490

दुःखव्युपशमार्थं तु कार्यमोहो न वार्यते ॥ ७७ ॥ 30

द्विविधो हि मोहः—संसारप्रवृत्तिहेतुः तत्प्रशमहेतुश्च । तत्र यः संसारनिदानम्, स प्रहातव्य एव । अन्यस्तु यः परंपरया दुःखव्युपशमार्थं सर्वसत्त्वजात्यादिव्यसननिमित्तं

कार्यमोहः कार्यस्य परमार्थसत्यलक्षणस्याधिगमाय मोहः, स पुनर्न वार्यते, न प्रतिषिध्यते। उपादीयते एव, परमार्थोपयोगित्वात्। इदमिहाधिकृतम्, तदपि कार्यं नात्मसुखाभिलाषेण महद्भिरुपादीयते, अपि तु सर्वसत्त्वानामात्यन्तिकसर्वदुःखव्युपशमार्थम्। तत्र च उपेयभूतः परमार्थाधिगम एव। तस्याप्युपायभूतं [संवृतिसत्यम्]। संवृतिसत्यमन्तरेण परमार्थानधि-5 गमात्। इति दुःखप्रशमार्थता कार्यमोहस्य। एतत् कार्यार्थमविचारतः [९.४] इत्यस्मिन् प्रस्तावे प्रतिपादितमेव पूर्वम्। पुनर्विपञ्चयितुमुक्तम्॥

स्यादेतत्—यथा दुःखोपशमहेतुत्वात् कार्यमोहोऽविद्यास्वभावोऽभ्युपगम्यते, तथैव आत्ममोहोऽपि तद्धेतुत्वादस्तु। तत् किमात्मा यत्नेन निषिध्यते? तत्सद्भावेऽपि आत्मभावनया अहंकारपरिक्षयात् भविष्यति संसारनिवृत्तिः। ततः किं नैरात्म्यभावनयेत्यत्राह 10 दुःखहेतुरित्यादि—

P 491

**दुःखहेतुरहंकार आत्ममोहात्तु वर्धते।**

यथा कार्यमोहो दुःखोपशमहेतुः, न तथा द्वितीय आत्ममोहः, तस्मिन् सति अहंकारक्षयाभावात्। आत्ममोहात्तु अनात्मनि आत्मविपर्यासदर्शनात् पुनरहंकारो वर्धते, वृद्ध उपजायते। किंभूतः? दुःखहेतुः दुःखस्य सांसारिकस्य त्रिदुःखतालक्षणस्य हेतुः कारणम्। 15 अहंकारक्षयाच्च दुःखोपशम इष्यते। सति च आत्मदर्शने कथमसौ निवर्तेत? कारणेऽविकलसामर्थ्ये कार्यस्य निवृत्त्ययोगात्। ततो दुःखमपि न निवर्तते। तथाहि आत्मानं पश्यतः संस्कृतेषु स्कन्धधात्वायतनेषु अहमिति दृढतरमुत्पद्यते स्नेहः। ततस्तद्दुःखप्रतीकारेच्छया सुखाभिलाषो दोषान् प्रच्छाद्य तदर्थितया गुणाध्यारोपात् तत्साधनेषु प्रवर्तते। स्वोपकारिणि वयमिति बुद्धिरुपजायते। अहं ममेति च दर्शनात् परिपन्थिनि 20 विद्वेषः। ततः समस्तदुःखनिदानं सर्व एव क्लेशोपक्लेशा लब्धप्रसराः प्रवर्तन्ते। इति आत्ममोहप्रवर्तितो दुःखहेतुरहंकारो भवति। तदुक्तमाचार्यपादैः—[1]

P 492

यः पश्यत्यात्मानं तस्यात्राहमिति शाश्वतस्नेहः।
स्नेहात्सुखेषु तृष्यति तृष्णा दोषांस्तिरस्कुरुते॥
गुणदर्शी परितृष्यन् ममेति तत्साधनान्युपादत्ते।
25 तेनात्माभिनिवेशो यावत्तावत्तु संसारः॥
आत्मनि सति परसंज्ञा स्वपरविभागात्परिग्रहद्वेषौ।
अनयोः संप्रतिबद्धाः सर्वे दोषाः प्रजायन्ते॥ इति॥

इत्थमात्मस्नेहान्निवर्तयितुमशक्योऽहंकारः।

---

१ These stanzas are attributed to Nāgārjuna by Poussin, but the work from which they are taken, is not mentioned. They are attributed to Sugatakīrti in Yaśastilaka, Vol. II, page 252. Haribhadrasūri in his Anekāntajayapatākā cites them in the introductory pūrvapakṣa and seven more verses following this quotation.

**ततोऽपि न निवर्त्यश्चेत्**

ततोऽपि आत्मदर्शनादपि न निवर्त्यो निवर्तयितुमशक्योऽहंकारश्चेद् यदि, तदा—

**वरं नैरात्म्यभावना ॥ ७८ ॥**

नैरात्म्यस्य पुद्गलादिविरहस्य भावना अभ्यासः। वरमुत्तमम्। आत्मदर्शनप्रवृत्ताहंकारनिवृत्तिहेतुत्वात्। तावत्कालमस्तु, पश्चात् पुनरियमपि प्रहास्यते, उपलम्भदृष्टित्वादिति भावः। तथाहि तद्भावनाप्रकर्षपर्यन्तगमनात् साक्षान्नैरात्म्यदर्शनात् विरोधि सत्कायदर्शनं निवर्तते। तन्निवृत्तौ च एकस्यानुगामिनो दर्शनाभावात् पूर्वापररूपविकलस्य क्षणमात्रस्य दर्शनम्। ततः पूर्वापरसमारोपाभावात् न अनागतसुखसाधनं किंचिदात्मनः पश्यति। ततो न तस्य क्वचिद्विषये रागो जायते, नापि तत्प्रतिविरोधिनि द्वेषः, आसङ्गाभावादेव। नाप्यकारिणं प्रति अपकारस्थानं पश्यति। येन यस्मिन् कृतोऽपकारः, तयोर्द्वयोरपि द्वितीयक्षणेऽभावात्। न च अन्येन कृतेऽपकारे प्रेक्षावतः अन्यत्र वैरनिर्यातनमुचितम्, नापि यस्य कृतस्तेनापि। एवं रागादिनिवृत्तौ अन्येऽपि तत्प्रभवाः क्लेशोपक्लेशा नोत्पद्यन्ते। नापि वस्तुतः कश्चित् कस्यचिदपकारी, इदं प्रतीत्य इदमुत्पद्यते इति प्रतीत्यसमुत्पाददर्शनाद्वा। एवं हि पुद्गलशून्यतायां सत्कायदर्शननिवृत्तौ छिन्नमूलत्वात् क्लेशा न समुदाचरन्ति। यथोक्तमार्यतथागतगुह्यसूत्रे[1]—

तद्यथापि नाम शान्तमते वृक्षस्य मूलच्छिन्नस्य सर्वशाखापत्रपलाशं शुष्यति, एवमेव शान्तमते सत्कायदृष्टिप्रशमात् सर्वक्लेशा उपशाम्यन्तीति ॥

तस्माद्वरं नैरात्म्यभावना ॥

गतमिदमानुषङ्गिकम्। संप्रति पुनरहंकारविषयं निरूपयितुमुपक्रमते। स्यादेतत्—यदि नाम आत्मा विचारेण खरविषाणसदृशत्वान्नाहंकारस्य विषयः, तथापि कायावयवी तद्विषयो भविष्यतीत्यत्राह कायो नेति—

**कायो न पादौ न जङ्घा नोरू कायः कटिर्न च।**
**नोदरं नाप्ययं पृष्ठं नोरो बाहू न चापि सः ॥ ७९ ॥**
**न हस्तौ नाप्ययं पार्श्वौ न कक्षौ नांसलक्षणः।**
**न ग्रीवा न शिरः कायः कायोऽत्र कतरः पुनः ॥ ८० ॥**

कायोऽपि विचारेणैको नैव कश्चिदस्तीत्युपदर्शयति—तथा हि करचरणादयो भागा एवं परं दृश्यन्ते, न त्वेकः कायो नाम प्रतिभासते। न च तेष्वन्यतमः कायो युज्यते। यतः कायो न पादौ, न चरणौ, न जङ्घा। जङ्घा च कायो न भवति। नोरू जङ्घैकदेशविशेषौ न कायः। कटिर्न च, श्रोणिरपि नैव कायः। नोदरम्, जठरमपि कायो न भवति। नाप्ययं पृष्ठम्, अयं कायः पृष्ठमपि नैव। नोरः, नोरो वक्षोऽपि न कायः। बाहू न चापि सः, स कायो भुजावपि न भवति। न हस्तौ, करावपि न कायः। नाप्ययं पार्श्वौ,

[1] This passage is also cited in ŚS p. 130, and MV. on 18.6.

अयं कायः पार्श्वावपि न भवति। न कक्षौ, भुजमूले अपि न कायः। नांसलक्षणः, नापि स्कन्धस्वभावः कायः। न ग्रीवा, न कंधरा कायः। न शिरः कायः, मस्तकोऽपि कायो न भवति। चरणादीनां वक्ष्यमाणविचारेण परमाणुशोऽप्यनवस्थानात्, करचरणादीनामन्यतमच्छेदे कायविनाशेन मरणप्रसङ्गात्, पराभ्युपगमाभावाच्च नैषु प्रत्येकं कायात्मता। एवं
5 यदा न प्रत्येकमेते कायस्वभावाः, एतत्समुदायमात्रं च शरीरम्, तत् कायोऽत्र कतरः पुनः, अत्र एषु पादादिभागेषु पुरोवर्तिषु शरीरकल्पनानिमित्तेषु कतरः कायो भवतु? नैव कश्चिदेकोऽपि निरूप्यमाणः कायात्मक उपलभ्यते इति यावत्॥

P 495

अथापि स्यात्—नैवमभिधीयते प्रत्येकं करादयः कायः, किं तर्हि सर्वावयवव्यापकत्वादवयविनः सर्वावयवेषु वर्तते इत्यत्राह यदीत्यादि—

10 **यदि सर्वेषु कायोऽयमेकदेशेन वर्तते।**

सर्वावयवेषु वर्तमानोऽयमेकदेशेन वर्तते, युगपत् सर्वात्मना वा? तत्र यदि सर्वेषु करचरणादिषु अवयवेषु कायोऽवयवी, एकदेशेन वर्तते, केनचिद् भागेन कंचिदवयवं व्याप्नोति। न सर्वात्मना सर्वमित्यर्थः। तदा एतन्न वक्तव्यम्। यतः यैरेकदेशैरवयवेषु वर्तते, तेष्वपि किमेकदेशेषु अपरैः एकदेशेन वर्तते, सर्वात्मना वेति विकल्पो न निवर्तते।
15 तत्रापि पुनरेकदेशेन वृत्तिकल्पनायामनवस्थानिवृत्तिर्न स्यात्। अपि च। तस्य अवकाशाभावादेय अवयवेषु न वृत्तिरित्याह अंशा इत्यादि—

P 496

**अंशा अंशेषु वर्तन्ते स च कुत्र स्वयं स्थितः॥ ८१॥**

अंशा भागाः अंशेषु स्वस्वभागेषु वर्तन्ते व्यवतिष्ठन्ते, स्वस्वभागव्यवस्थितत्वात् सर्वभावानाम्। स च कुत्र स्वयं स्थितः? स्वयं पुनरसौ कायोऽवयवी क्व नु नाम व्यवस्थितः
20 इति न विद्मः॥

अथ द्वितीयो विकल्पः, तत्राह सर्वात्मनेति—

**सर्वात्मना चेत्सर्वत्र स्थितः कायः करादिषु।**
**कायास्तावन्त एव स्युर्यावन्तस्ते करादयः॥ ८२॥**

सर्वात्मनापि वृत्तिसंभावनायाम्। अवयवेषु अनवकाशत्वात् स च कुत्र स्वयं स्थितः
25 इति प्रसङ्गो नाद्यापि निवर्तते। तथापि पुनरपरमुच्यते—सर्वात्मना सर्वभावेन नैकदेशेन। सर्वत्र सर्वेषु करादिष्ववयवेषु। आदिशब्दाच्चरणादिषु स्थितः समवेतः कायावयवी चेत् यदि, तदा पुनरयं दोषः स्यादित्याह—काया इति। कायावयविनः तावन्त एव स्युः, तत्संख्यापरिच्छिन्ना एव प्राप्नुयुः। कियन्तः? यावन्तस्ते करादयः, ते करचरणादयोऽवयवा यावन्तः यत्संख्यापरिच्छिन्नाः, तत्समवेता अवयविनोऽपि तावन्त एव भवेयुः। तस्य
30 निरंशतया सर्वात्मना तेषु परिसमाप्तत्वात्। तदनेकसंबन्धादनेकत्वात्। नान्यथा एकवृत्तिः स्यात्। अयं च प्रसङ्गः अनेकत्र एकदेशेन वृत्तिपक्षेऽपि योजयितव्यः। यथा रक्तारक्तपिहितापिहितकम्पादयोऽपि यथायोगं वक्तव्या इति॥

P 497

एवं प्रत्यक्षादिप्रमाणसमधिगम्यः कायो नास्ति । बाधकं पुनरस्य अनन्तरमुक्तमस्तीति प्रसाधितमित्युपदर्शयन्नाह नैवान्तरित्यादि—

**नैवान्तर्न बहिः कायः कथं कायः करादिषु ।**

पूर्वमन्तर्व्यापारपुरुषप्रतिषेधात् मांसशोणितादीनां विचारितत्वात् नैवान्तर्मध्ये कायः । अधुना पुनरवयविनः प्रतिषेधात् न बहिः न बाह्यः प्रत्यक्षादिगोचरः कायः, 5 इति कथं कायः करादिषु व्यवस्थाप्यते ? अथ करादिव्यतिरिक्तो भविष्यतीत्याह करादिभ्य इत्यादि—

**करादिभ्यः पृथङ् नास्ति कथं नु खलु विद्यते ॥ ८३ ॥**

करादिभ्योऽवयवेभ्यः पृथग् भिन्नः उपलब्धिलक्षणप्राप्तः कायो नास्ति, न प्रतिभासते । करादय एव हि केवलाः प्रतिभासन्ते । एवं यो न करादिस्वभावः, नापि 10 तदाधेयः समवेतो नाप्यन्तर्गतः, न चापि तद्व्यतिरिक्तः, स कायः कथं नु खलु विद्यते ? कथं न्विति कथंचिदपि कायमनुपलभमानः तत्सत्त्वमसंभावयन् पृच्छति—कथं नु केन प्रकारेण । न्विति विमर्शे । विद्यते, तत्सत्ता व्यवस्थाप्यते ? P 498

यदा चैवं विचारेण कायो व्यवस्थापयितुमशक्यः, तदा असन्नेव व्यवहर्तव्य इत्युपसंहरन्नाह तन्नास्तीत्यादि— 15

**तन्नास्ति कायो मोहात्तु कायबुद्धिः करादिषु ।**

तन्नास्ति काय इति, यस्मादुक्तविचारेण नोपलभ्यते, तस्मादुपलब्धिलक्षणप्राप्तोऽनुपलभ्यमानो नास्ति कायः यदि नास्ति, कथं तर्हि करादिषु कायबुद्धिरित्याह—मोहात्तु इत्यादि । मोहादविद्यावशात् तु पुनः कायबुद्धिः करादिषु एकद्रव्यरहितेषु, न तु परमार्थतः । अवधारणे वा तुशब्दः । तथाहि अनवराग्रसंसारप्रवृत्तिजन्मपरंपरापरिचितमिथ्याभ्यास- 20 वासनावशात् यथावस्थितवस्तुतत्त्वप्रतिपत्तावपि तद्विपरीतसमारोपकल्पना उपजायते । तदुपनिबद्धोऽयं कायादिव्यवहारो लोके प्रवर्तते, न तु पारमार्थिक इति ॥

कथमन्यत्र सा न भवति इत्यत्राह संनिवेशेति—

**संनिवेशविशेषेण स्थाणौ पुरुषबुद्धिवत् ॥ ८४ ॥**

करचरणादिसंनिवेशः संस्थानम्, तदेव विशेषो भेद इतरस्मात्, तेन विभ्रमहेतुना 25 करादिष्वेव, न सर्वत्र सा भवति । प्रतिनियतविषया हि भ्रान्तय इष्यन्ते । कथमिव ? स्थाणौ पुरुषबुद्धिवत् । यथा स्थाणौ पुरुषस्वभावरहितेऽपि पुरुषसाधारणोर्ध्वतादिसंनिवेश- P 499 विशेषमुपलब्धवतो दूरादविवेचितपरविशेषस्य कस्यचित् विभ्रमात् पुरुषबुद्धिरुपजायते, तथा प्रकृतेऽपीत्यर्थः ॥

स्यादेतत्—कथं पुनरेतदवसितं मोहात् कायबुद्धिः, न तु पुनर्वस्तुतः इत्यत्राह 30 यावदित्यादि—

**यावत्प्रत्ययसामग्री तावत्कायः पुमानिव ।**

यावत् यावत्कालावधिपरिच्छिन्ना प्रत्ययानां कारणानां पृथिव्यादिषड्धातुषट्स्पर्शायतनाष्टादशमनोपविचारात्मकानां कर्मायत्तवृत्तीनां सामग्री समवधानम्, तावत्कालावधिरेव कायः पुमानिव। यथा पुरुषस्वभावविरहितोऽपि परमार्थतः परिकल्पितरूपतया पुरुष इव प्रतिभासते व्यवह्रियते। उपलक्षणं चैतत्। स्त्री वेत्यपि द्रष्टव्यम्। न पूर्वं कललाद्यवस्थायां न पश्चाद्विकलितत्वाद् भस्माद्यवस्थायां निजस्वभावाभावात्। इदमत्रापि सामान्यमित्युपदर्श-
5 यन्नाह एवमित्यादि—

एवं करादौ सा यावत्तावत्कायोऽत्र दृश्यते ॥ ८५ ॥

यथा प्रत्ययसामग्रीसद्भावे कायः पुमानिव प्रतिभासते, सद्भावेन प्रतिभासते, एवं
P 500 तथा करादौ यावत् सा प्रत्ययसामग्री, तावत् कायोऽत्र करादौ दृश्यते, कल्पनावशात् प्रतिभासते, न तु परमार्थतः। तस्मात् सामग्रीसाकल्ये भवति, तदभावे च न भवति
10 कायबुद्धिः। अतो मोहादेव करादिषु कायबुद्धिरिति निश्चितम्। अयमत्र समुदायार्थः—तत्तत्प्रत्ययसामग्रीसद्भावे तत्तद्वस्तुस्वभावमन्तरेणापि अभूतं तत्त्वमादर्शयन्ती भ्रान्तिवशादसौ कल्पना उपजायते। तद्वशात् संनिवेशविशेषेषु स्त्रीपुरुषकायादिव्यवहारः प्रवर्तते। अत एव भस्माद्यवस्थायां सामग्रीवैकल्यान्निवर्तते। अतो नायं कायादिव्यवहारो वास्तव इति वक्ष्यति। तदुक्तम्[1]—

15 कायस्वभावो वक्तव्यो योऽवस्थारहितः स्थितः।
कायश्चेत्प्रतिमाकारः पेशीभस्मसु नास्ति सः॥
सूक्ष्मभावेन चेत्तत्र स्थौल्यं त्यक्त्वा व्यवस्थितः।
अनिर्देश्यः स्वतः प्राप्तः काय इत्युच्यते कथम्[2]॥ इति।

उक्तं च—

20 हेतुतः संभवो यस्य स्थितिर्न प्रत्ययैर्विना।
विगमः प्रत्ययाभावात् सोऽस्तीत्यवगतः कथम्॥ इति।

[युक्तिषष्टिका—]

क्वचित् पाठः—

यावत्प्रत्ययसामग्री तावत्काष्ठं पुमानिव॥ इति।

P 501 25 तत्रेदं व्याख्येयम्—यावद्विपर्यासप्रत्ययसामग्री स्थाणौ पुरुषप्रतीतिः, तावत् काष्ठं स्थाणुस्वभावं पुमानिव प्रतीयते, न तदभावे। एवमेव करादौ यावत् सा प्रत्ययसामग्री, तावत् कायोऽत्र करादौ दृश्यते, न पश्चात्। अतो मोहादेव कायबुद्धिरिति निश्चयः॥

ननु यदि नाम कायो नास्ति, करचरणादयः पुनरवयवाः प्रत्यक्षोपलब्धत्वात् प्रतिषेद्धुमशक्याः इत्याशङ्क्य करादयोऽपि परिकल्पितस्वभावा एवेत्युपदर्शयितुमाह एव-
30 मङ्गुलीत्यादि—

१ ŚS p. 192. २ ŚS reads न सः for कथम्.

एवमङ्गुलिपुञ्जत्वात्पादोऽपि कतरो भवेत् ।

यथैव विचार्यमाणः कायो नास्ति, एवं करचरणादयोऽपि न सन्ति । यतः अङ्गुलीनां पुञ्जः समुदायः । अङ्गुलीनामित्युपलक्षणम् । पार्ष्णिप्रभृतीनामपि द्रष्टव्यः । तस्य भावस्तत्त्वम्, तस्मात् तत्स्वभावादित्यर्थः । पादोऽपि चरणोऽपि कतरो भवेत् ? तत्समुदायमन्तरेण विचार्यमाणो नैव कश्चिदिति भावः । अङ्गुलिपुञ्जोऽपि नैकस्वभाव इत्याह सोऽपीत्यादि— 5

सोऽपि पर्वसमूहत्वात् पर्वापि स्वांशभेदतः ॥ ८६ ॥

सोऽपि अङ्गुलिपुञ्जोऽपि विचारतो न वस्तुसन् । कुतः ? पर्वसमूहत्वात्, पर्वणामङ्गुलिभागानां समूहत्वात् संघातत्वात् कतरो भवेदिति प्रकृतेन संबन्धः । पर्वणामपि प्रत्येकमवस्तुत्वमित्यत आह—पर्वापि न वस्तु । कस्मात् ? स्वांशभेदतः, स्वस्य आत्मनः अंशानामवयवानां भेदतोऽपि विभागात् ॥ 10

अंशा अपि तत्त्वतो न सन्तीत्याह— P 502

अंशा अप्यणुभेदेन

इति । अंशाः पर्वभागाः अपि अणुभेदेन परमाणुशो विभागेन भिद्यमानत्वात् कल्पिता एव । अणवोऽपि न प्रत्येकं परमार्थसन्तः इत्याह—

सोऽप्यणुर्दिग्विभागतः । 15

दिशां पूर्वापरदक्षिणोत्तराधरोर्ध्वस्वभावानां संबन्धेन विभागतो नानात्वात् । तद्विभागभेदाद्भिद्यमानस्य परमाणोः षडंशता स्यात् । दिक्षु वा विभागाः नानादिगवस्थिता नानारूपांशाः परमाणोः, ततो भेदेन न तस्य स्वभावोऽवतिष्ठते ।

दिग्भागभेदो यस्यास्ति तस्यैकत्वं न युज्यते ।

[ विंशकारिका—१४ ] 20

इति न्यायात् । तथाहि—पूर्वापरादिदिगवस्थितपरमाण्वभिमुखं यत् तत् परमाणोर्मध्यवर्तिनो रूपम्, तत् किमेकमेव, अपरापरं वा ? यदि एकमेवेति पक्षः, तदा सर्वपरमाणूनां परिवार्यावस्थितानामेकदेशताप्रसङ्गः । यतः पूर्वादिदिगवस्थितपरमाणुसमानदेशतामन्तरेण अपरदिगाद्यवस्थितपरमाणुना न प्राग्देशावस्थितपरमाण्वभिमुखरूपाभिमुखं स्यात्, अन्यथा रूपभेदप्रसङ्गात् । तत्समानदेशता च न तत्स्वरूपान्तर्भावमन्तरेण, तस्यापि पूर्व- 25 दिगवस्थितस्य परमाणोरपरपरमाणुना सर्वात्मना संबन्धेन तत्स्वरूपान्तर्भावात् परमाणुमात्रं द्रव्यं स्यात् । तथा च सति प्रचयरूपा भूधरादयो न स्युः । अतो भवनादीनां प्रचय- P 503 मिच्छता द्वितीय एव पक्षः समभ्युपेयः । तदा च षड्भिरपरापररूपेण युगपत् संबन्धात् षड्भागो मध्यपरमाणुः स्यात्, तत्तद्देशावस्थितापरापरपरमाणुसंबन्धेन तत्परमाणुरूपस्य भेदात् । इति परमाणुरपि नैकस्वभावो युक्तः । यदुक्तमाचार्यपादैः— 30

षट्केन युगपद्योगात्परमाणोः षडंशता।
षण्णां समानदेशत्वात् पिण्डः स्याद्वाणुमात्रकः॥ इति।

[ विंशकारिका—१२ ]

तेऽपि पुनरणीयांसो भागाः तथैव निरूप्यमाणाः निरात्मतया नभःस्वभावतां प्रति-
5 पद्यन्ते इत्याह दिग्विभागोऽपीत्यादि—

दिग्विभागो निरंशत्वादाकाशं तेन नास्त्यणुः॥ ८७॥

दिग्विभागोऽपि दिग्भेदेन परमाणोर्विभागोऽपि पूर्ववत् षडंशतया भिद्यमानः कतरो भवेत्? न किंचिद्वस्तु स्यात्। एतत् सर्वत्र पूर्वेषु योजनीयम्। कुतः? अनंशत्वात्। अतोऽभिनिकृष्यमाणो निःस्वभावतया आकाशं शून्यमेव। तेन कारणेन नास्त्यणुः, न
P 504 10 विद्यते परमाणुरिति। एवं करादयोऽपि विचारतो निःस्वभावा द्रष्टव्या इति। ततः कायोऽपि न परमार्थतः कश्चिदस्ति, एकानेकस्वभाववियोगस्य प्रतिपादनात्। इत्थं न केशादयः, न चात्मा, नापि चित्तम्, न च कायः अहंकारस्य विषयो वस्तुतः। तस्मादविद्यासमुत्थापितात्मतया आत्मादिसत्त्वमन्तरेणापि प्रवर्तमानोऽयमहमिति प्रत्ययो निर्विषय एव समुत्पद्यते। तेन यदुक्तम्—

15 अहमेव न किंचिच्चेद्भयं कस्य भविष्यति।

इति, तत् समर्थितम्। सर्वेण चैतेन कायस्मृत्युपस्थानमुपदर्शितं भवति। यदुक्तं धर्मसंगीतिसूत्रे[1]—

पुनरपरं कुलपुत्र बोधिसत्त्व एवं कायस्मृतिमुपस्थापयति—अयं कायः पादपादाङ्गुलिजङ्घोरुत्रिकोदरनाभीपृष्ठवंशहृदयपार्श्वपार्शुकाहस्तकलाचीबाह्वङ्ग्रीवाहनुललाटशिरःकपाल-
20 मात्रसमूहः कर्मभवकारकोपचितः नानाक्लेशोपक्लेशसंकल्पविकल्पशतसहस्राणामावासः। बहूनि चात्र द्रव्याणि समवहितानि यदुत केशरोमनखदन्तास्थिचर्मपिशितवपास्नायुमेदो-
P 505 वसालसिकायकृन्मूत्रपुरीषामाशयपक्वाशयरुधिरखेटपित्तपूयसिंघाणकमस्तिष्कमस्तकलुङ्गानि। एवं बहुद्रव्यसमूहः। तत् कोऽत्र कायः? तस्य प्रत्यवेक्षमाणस्य एवं भवति—आकाशसमोऽयं कायः। स आकाशवत् काये स्मृतिमुपस्थापयति। सर्वमेतदाकाशमिति पश्यति। तस्य
25 कायपरिज्ञानहेतोर्न भूयः क्वचित् स्मृतिः प्रसरति, न विसरति, न प्रतिसरतीति॥

पुनरुक्तम्[2]—

अयं कायो न पूर्वान्तादागतो नापरान्ते संक्रान्तो न पूर्वान्तापरान्तावस्थितोऽन्यत्रासद्विपर्याससंभूतः कारकवेदकरहितो नाद्यन्तमध्ये प्रतिष्ठितमूलः, अस्वामिकोऽममोऽपरिग्रहः। आगन्तुकैर्व्यवहारैर्व्यवह्रियते काय इति देह इति भोग इति आश्रय इति कुणप इति
30 आयतनमिति। असारकोऽयं कायः मातापितृशुक्रशोणितसंभूतः अशुचिपूतिदुर्गन्धि-

---

१ ŚS. p. 124. २ ŚS. p. 124.

स्वभावः रागदोषमोहविषादतस्कराकुलः नित्यं शतनपतनभेदनविकिरणविध्वंसनधर्मा नानाव्याधिशतसहस्रनीड इति ॥

एवं यदा विचार्यमाणो वस्तुतः शून्यस्वभावतया आकाशसंकाशः सर्वथा कायः, तदा मिथ्यैव वस्तुतत्त्वमारोप्य रागादिकमुत्पादयन्तः संसारमुपबृंहयन्ति बालाः इत्याह एवमित्यादि— P 506 5

**एवं स्वप्नोपमे रूपे को रज्येत विचारकः ।**

एवमित्युक्तक्रमेण स्वप्नोपमे स्वप्नोपलब्धे इव रूपेऽसौमनस्यस्थानीये को रज्येत, क आसज्येत ? अस्य च उपलक्षणत्वात् को द्विष्यात्, को मुह्येत्, इत्यपि वेदितव्यम् । तद्यथा—सौमनस्यस्थानीयानि चक्षुषा रूपाणि दृष्ट्वा रागो जायते । दौर्मनस्यस्थानीयानि चक्षुषा रूपाणि दृष्ट्वा द्वेषो जायते । उपेक्षास्थानीयानि चक्षुषा रूपाणि दृष्ट्वा मोहो जायते 10 इति । यदेतन्मनोप्रतिकूलेषु रूपेष्वनुनीतं चरति, तेनास्य राग उत्पद्यते । प्रतिकूलेषु रूपेषु प्रतिहतं चरति, तेनास्य द्वेष उत्पद्यते । नैवानुकूलेषु न प्रतिकूलेषु संमूढं चरति, तेनास्य मोह उत्पद्यते । एवं शब्दादिषु त्रिविधमालम्बनमनुभवति पूर्ववत् । तत्र यः पण्डितजातीयः, इति हि अत्यन्तया चक्षुरायतनं शून्यं चक्षुरायतनस्वभावेन तत् पूर्वान्ततोऽपि नोपलभ्यते, अपरान्ततोऽपि नोपलभ्यते, मध्यतो नोपलभ्यते स्वभाव- 15 रहितत्वात् । एवमन्येषु श्रोत्रादिषु वक्तव्यम् । एवमत्यन्ततया रूपायतनं रूपायतनं रूपा- P 507 यतनस्वभावेनेत्यादि पूर्ववत् । एवं शब्दादिषु वाच्यम् ॥

इति हि मायोपमानीन्द्रियाणि स्वप्नोपमान् विषयान् पश्यति, तस्य कथं रागादिक- मुत्पद्यते ? अत एवाह—विचारक इति । विचारको विचक्षणः । एवमेतद्यथाभूतं सम्यक् प्रज्ञया पश्यन् को रज्येत द्वेष्टि मुह्यति वा ? अत्र च स्वप्नोपलब्धजनपदकल्याणीप्रभृति 20 भगवतोक्तं निदर्शनमुपदर्शितव्यम् । कायाभावे च स्त्र्यादिकल्पनयापि रागो न युक्त इत्याह कायश्चेत्यादि—

**कायश्चैवं यदा नास्ति तदा का स्त्री पुमांश्च कः ॥ ८८ ॥**

हेतुसमुच्चये चकारः । यस्मात् स्त्र्यादिकल्पनया रागो न भवति । कायो यदा एवमुदितनयेन नास्ति, निःस्वभावः, तदा कायाभावात् का स्त्री कामिनी यस्याः कमनीय- 25 तया पुरुषे रागो भवेत् ? कश्च पुमान् कामुकः यस्य रञ्जनीयतया स्त्रियां रागो भवेत् ? स्त्री हि स्वात्मनि स्त्रीति संकल्प्य बहिर्धा पुरुषे पुरुष इति रागं जनयति । एवं पुरुषोऽपि स्वात्मनि पुरुष इति संकल्प्य बहिर्धा स्त्रियां स्त्रीति रागं जनयति । कायाभावे तु स्त्रियां स्त्रीति न संविद्यते, पुरुषे पुरुषो न संविद्यते । यच्च स्वभावेन न संविद्यते, न तत् स्त्री न पुरुष P 508 इति । तस्मादसति काये स्त्र्यादिकल्पनाकृतोऽपि न युज्यते रागः । तत्कस्य हेतोः ? मन्यना- 30 पगता हि सर्वधर्मा इति । यथाप्रधानमयं निर्देशः । एवमेव स्रक्चन्दनादयोऽपि स्वभाव- रहिता वेदितव्याः । तथा द्वेषमोहविषया अपीति । उक्तं चैतद्भगवता पितापुत्रसमागमे[1]—

---

[1] ŚS p. 131.

षड्धातुरयं महाराज पुरुषः, षट्स्पर्शायतनः, अष्टादशमनोपविचारः। षड्धातुरयं महाराज पुरुष इति खलु पुनरेतद् युक्तम्। किं चैतत् प्रतीत्य कम्? षडिमे महाराज धातवः। कतमे षट्? तद्यथा–पृथ्वीधातुः, अब्धातुः, तेजोधातुः, वायुधातुः, आकाशधातुः, विज्ञानधातुश्च। इमे महाराज षड् धातवः। यावत् षडिमानि महाराज स्पर्शायतनानि। 5 कतमानि षट्? चक्षुःस्पर्शायतनं रूपाणां दर्शनाय यावन्मनःस्पर्शायतनं धर्माणां विज्ञानाय। P 509 इमानि महाराज षट् स्पर्शायतनानि। पेयालं। अष्टादश इमे महाराज मनउपचाराः। कतमे अष्टादश? इह पुरुषः चक्षुषा रूपाणि दृष्ट्वा सौमनस्यदौर्मनस्योपेक्षास्थानीयानि रूपाण्युपविचरति। एवं श्रोत्रादिषु वाच्यम्। तेन प्रत्येकमिन्द्रियषट्केन सौमनस्यादित्रय-भेदादष्टादश मनउपविचारा भवन्ति। पेयालं। कतमश्च महाराज आध्यात्मिकः पृथ्वी-10 धातुः? यत् किंचिदस्मिन् कायेऽध्यात्मं कक्खटत्वं खरगतमुपात्तम्। तत् पुनः कतमत्? तद्यथा–केशा रोमाणि नखा दन्ता इत्यादि। कतमश्च महाराज बाह्यः पृथ्वीधातुः? यत् किंचिद् बाह्यं कक्खटत्वं खरगतमुपात्तम्। अयमुच्यते बाह्यः पृथ्वीधातुः। तत्र महाराज आध्यात्मिकः पृथ्वीधातुः उत्पद्यमानो न कुतश्चिदागच्छति, निरुध्यमानो न क्वचित् संनिचयं गच्छति। भवति महाराज समयोऽयं यत् स्त्री अध्यात्मं [अहं] स्त्रीति कल्पयति। सा 15 अध्यात्ममहं स्त्रीति कल्पयित्वा बहिर्धा पुरुषं पुरुष इति कल्पयति। सा बहिर्धा पुरुषं पुरुष इति कल्पयित्वा संरक्ता सती बहिर्धा पुरुषेण सार्धं संयोगमाकाङ्क्षते। पुरुषोऽपि अध्यात्मं पुरुषोऽस्मीति कल्पयतीति पूर्ववत्। तयोः संयोगाकाङ्क्षायां संयोगो भवति। संयोगप्रत्ययात् P 510 कललं जायते। तत्र महाराज यश्च संकल्प्यते, यश्च संकल्पयिता, उभयमेतन्न संविद्यते। स्त्रियां स्त्री न संविद्यते। पुरुषे पुरुषो न संविद्यते। इति हि असन्नसद्भूतः संकल्पो जायते। 20 सोऽपि संकल्पः सद्भावेन न संविद्यते। यथा संकल्पः, तथा संयोगोऽपि। कललमपि स्वभावेन न संविद्यते। यच्च स्वभावतो न संविद्यते, तत् कथं कक्खटत्वं जनयिष्यति? इति हि महाराज संकल्पं ज्ञात्वा कक्खटत्वं वेदितव्यं यथा कक्खटत्वमुत्पद्यमानं न कुतश्चिदागच्छ-तीति। भवति महाराज समयः, यदयं कायः श्मशानपर्यवसानो भवति। तस्य तत् कक्खटत्वं संक्लिद्यमानं संनिरुध्यमानं न पूर्वां दिशं गच्छति, न दक्षिणाम्, न पश्चिमाम्, 25 नोत्तराम्, नोर्ध्वम्, नाधः, नानुविदिशं गच्छति। एवं महाराज आध्यात्मिकः पृथिवी-धातुर्द्रष्टव्यः। पेयालं। तत्र महाराज पृथिवीधातोरुत्पादोऽपि शून्यः, व्ययोऽपि शून्यः, उत्पन्नोऽपि पृथिवीधातुः स्वभावशून्यः। इति हि महाराज पृथिवीधातुः पृथिवीधातुत्वेन नोपलभ्यते, अन्यत्र व्यवहारात्। सोऽपि व्यवहारो न स्त्री न पुरुषः। एवं महाराज P 511 यथाभूतं सम्यक् प्रज्ञया द्रष्टव्यमिति। तेन का मन्यना? मन्यना मारगोचरः। तत् कस्य 30 हेतोः? मन्यनापगता हि सर्वधर्माः॥ इति॥

एवं कायस्मृत्युपस्थानं प्रतिपाद्य वेदनास्मृत्युपस्थानमुपदर्शयितुं वेदनां विचारयन्नाह यद्यस्तीत्यादि—

